PURCHASED

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४२

पदपाठयुता

# कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेता ।

( तत्र द्वितीयकाण्डगतपञ्चमप्रपाठकस्थद्वादशानुवाकमारभ्य तृतीयकाण्डस्थचतुर्थप्रपाठकसमाप्तिपर्यन्तः पञ्चमो भागः ( ५ ) )

एतत्पुस्तकम्

वे० शा० रा० रा० "काशीनाथ शास्त्री आगाशे"

इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२३

खिस्ताब्दाः १९०२

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )

मूल्यं रूपकपञ्चकमष्टाऽऽणकाश्च ( ५।८ ) ।

( काम्येष्टियाज्यानुवाक्याभिधानम् )

( अथ द्वितीयाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

आयुष्ट आयुर्दा अग्न आ प्यायस्व सं तेऽवं ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इमं मे वरुण तत्त्वा याम्युदु त्यं चित्रम् । अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः । तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः । सम् ( १ ) अन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति । तमू शुचिꣳ शुचयो दीदिवाꣳसमपां नपातं परि तस्थुरापः । तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु । इन्द्रावरुणयोरहꣳ सम्राजोरव आ वृणे । ता नो मृडात ईदृशे । इन्द्रावरुणा युवमध्वराय नः ( २ ) विशे जनाय महि शर्म यच्छतम् । दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः । आ नो मित्रावरुणा प्र बाहवा । त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमः

विश्वा द्वेषांꣳसि प्र मुंमुग्ध्यस्मत् । स त्वं नो अग्नेऽवमो भंवोती नेदिंष्ठो अस्या उषसो व्युंष्टौ । अवं यक्ष्व नो वरुंणम् ( ३ ) ररांणो वीहि मृडीकꣳ सुहवो न एधि । प्रप्रायमग्निर्भरतस्यं शृण्वे वि यत्सूर्यो न रोचंते बृहद्भाः । अभि यः पूरुं पृतंनासु तस्थौ दीदाय दैव्यो अतिंथिः शिवो नंः । प्र ते यक्षि प्र तं इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु । धन्वंन्निव प्रपा अंसि त्वमंग्न इयक्षवें पूरवें प्रत्न राजन् । ( ४ ) वि पाजंसा वि ज्योतिंषा । स त्वमंग्ने प्रतींकेन प्रत्योंष यातुधान्यंः । उरुक्षयेंषु दीद्यंत् । तꣳ सुप्रतींकꣳ सुदृशꣳ स्वञ्चमविंद्वाꣳसो विदुष्टरꣳ सपेम । स यंक्षद्विश्वां वयुनांनि विद्वान्प्र हव्यमग्निरमृतेंषु वोचत् । अꣳहोमुचें विवेष यन्मा वि नं इन्द्रेन्द्रं क्षत्रमिंन्द्रियाणिं शतक्रतोऽनुं ते दायि ( ५ ) ॥

( यह्वीः सर्मध्वरायं नो वरुंणꣳ राजꣳ श्चतुंश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( काम्येष्टियाज्यानुवाक्याभिधानम् )

विश्वरूपस्त्वष्टेन्द्रं वृत्रं ब्रह्मवादिनः स त्वै नासोमयाज्येष वै देवरथो देवा वै नर्चि नायज्ञोऽग्ने महाग्नीत्रिर्वीतमायुष्टे द्वादश ॥ १२ ॥

विश्वरूपो नैनं॰ शीतरूरावद्य वसु पूर्वेद्युर्राजा इत्यग्ने महाग्नि-वीतमन्या यन्ति चतुःसप्ततिः ॥ ७४ ॥

हरिः ॐ ।

## इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

---

आयुः । ते । आयुर्दा इत्यायुः—दाः । अग्ने । एति । प्यायस्व । समिति । ते । अवेति । ते । हेडः । उदिति । उत्तममित्युत्—तमम् । प्रेति । नः । देवी । एति । नः । दिवः । अग्नाविष्णू इत्यग्ना—विष्णू । अग्नाविष्णू इत्यग्ना—विष्णू । इमम् । मे । वरुण । तत् । त्वा । यामि । उदिति । उ । त्यम् । चित्रम् । अपाम् । नपात् । एति । हि । अस्थात् । उपस्थमित्युप—स्थम् । जिह्मानाम् । ऊर्ध्वः । विद्युतमिति वि—द्युतम् । वसानः । तस्य । ज्येष्ठम् । महिमानम् । वहन्तीः । हिरण्यवर्णा इति हिरण्य—वर्णाः । परीति । यन्ति । यह्वीः । समिति ( १ ) । अन्याः । यन्ति । उपेति । यन्ति । अन्याः । समानम् । ऊर्वम् । नद्यः । पृणन्ति । तम् । उ । शुचिम् ।

शुचयः । दीदिवाꣳसम् । अपाम् । नपातम् । परीति ।
तस्थुः । आपः । तम् । अस्मेराः । युवतयः । युवानम् ।
मर्मृज्यमानाः । परीति । यन्ति । आपः । सः । शुक्रेण ।
शिक्वना । रेवत् । अग्निः । दीदाय । अनिध्मः ।
घृतनिर्णिगिति घृत—निर्णिक् । अप्स्वित्यप्—सु ।
इन्द्रावरुणयोरितीन्द्रा—वरुणयोः । अहम् । सम्रा-
जोरिति सम्—राजोः । अवः । एति । वृणे । ता ।
नः । मृडातः । ईदृशे । इन्द्रावरुणेतीन्द्रा—वरुणा ।
युवम् । अध्वराय । नः (२)। विशे । जनाय । महि ।
शर्म । यच्छतम् । दीर्घप्रयज्युमिति दीर्घ—प्रयज्युम् ।
अतीति । यः । वनुष्यति । वयम् । जयेम । पृतनासु ।
दूढ्यः । एति । नः । मित्रावरुणेति मित्रा—वरुणा ।
प्रेति । बाहवा । त्वम् । नः । अग्ने । वरुणस्य ।
विद्वान् । देवस्य । हेडः । अवेति । यासिसीष्ठाः ।
यजिष्ठः । वह्नितम इति वह्नि—तमः । शोशुचानः ।
विश्वा । द्वेषाꣳसि । प्रेति । मुमुग्धि । अस्मत् ।
सः । त्वम् । नः । अग्ने । अवमः । भव । ऊती ।
नेदिष्ठः । अस्याः । उषसः । व्युष्टाविति वि—उष्टौ ।
अवेति । यक्ष्व । नः । वरुणम् ( ३ )। रराणः ।
वीहि । मृडीकम् । सुहव इति सु—हवः । नः । एधि ।
प्रप्रेति प्र—प्र । अयम् । अग्निः । भरतस्य । शृण्वे ।

वीति । यत्र । सूर्यः । न । रोचते । बृहत् । भाः । अभीति । यः । पूरुम् । पृतनासु । तस्थौ । दीदाय । दैव्यः । अतिथिः । शिवः । नः । प्रेति । ते । यक्षि । प्रेति । ते । इयर्मि । मन्म । भुवः । यथा । वन्द्यः । नः । हवेषु । धन्वन् । इव । प्रपेति प्र—पा । असि । त्वम् । अग्ने । इयक्षवे । पूरवे । प्रत्न । राजन् । ( ४ ) । वीति । पाजसा । वीति । ज्योतिषा । सः । त्वम् । अग्ने । प्रतीकेन । प्रतीति । ओष । यातुधान्य इति यातु—धान्यः । उरुक्षयेष्वित्युरु—क्षयेषु । दीद्यत् । तम् । सुप्रतीकमिति सु—प्रतीकम् । सुदृशमिति सु—दृशम् । स्वञ्चम् । अविद्वाꣳसः । विदुष्टरमिति विदुः—तरम् । सपेम । सः । यक्षत् । विश्वा । वयुनानि । विद्वान् । प्रेति । हव्यम् । अग्निः । अमृतेषु । वोचत् । अꣳहोमुच इत्यꣳहः—मुचे । विवेष । यत् । मा । वीति । नः । इन्द्र । इन्द्रे । क्षत्रम् । इन्द्रियाणि । शतक्रतो इति शत—क्रतो । अन्विति । ते । दायि ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके पञ्चमः प्रपाठकः ॥ ५ ॥

( अथ द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः । )

होतुर्नियम आघारश्चोक्तमेकादशे द्वयम् ॥

अथ द्वादशे काम्येष्टियाज्यानुवाक्या उच्यन्ते ।

अतीते तृतीयप्रपाठक इदमाम्नातम्—" यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपाल१ँ सौम्यं चरुं वारुणं दशकपाल१ँ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालम् " इति । तथा " यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत् " इति । " यद्यपरं प्रतिग्राही स्यात्सौर्यमेककपालमनुनिर्वपेत् " इति च । एतेषु सप्तसु हविःषु क्रमेण याज्यानुवाक्याप्रतीकानि दर्शयति—

आयुष्ट आयुर्दा अग्न आ प्यायस्व सं तेऽव
ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽ-
ग्नाविष्णू अग्नाविष्णू इमं मे वरुण
तत्त्वा याम्युदु त्यं चित्रम् । , इति ।

तत्राऽऽग्नेयस्याऽऽयुष्टे विश्वतोऽदधदिति पुरोनुवाक्या । आयुर्दा अग्ने हविषो जुषाण इति याज्या । तदुभयं त्वमग्ने रुद्र इत्यनुवाके व्याख्यातम् । सौम्यस्य त्वा प्यायस्व समेतु त इति पुरोनुवाक्या । सं ते पया१ँसि समु यन्तु वाजा इति याज्या । एतदुभयं चतुर्थकाण्डे मा नो हि१ँसीदित्यनुवाके व्याख्यास्यते । वारुणदशकपालस्याव ते हेड इति पुरोनुवाक्या । उदुत्तममिति याज्या । एतच्चोभयं वैश्वानरो न इत्यनुवाके व्याख्यातम् । सारस्वतस्य प्र णो देवीत्यनुवाक्या । आ नो दिवो बृहत इति याज्या । आग्नावैष्णवस्याग्नाविष्णू महि तद्वामिति पुरोनुवाक्या । अग्नाविष्णू महि धामेति याज्या । चतुष्टयमप्येतत्प्रथमकाण्डस्याष्टमप्रपाठकस्यान्त्यानुवाके व्याख्यातम् । वारुणचतुष्कपालस्येमं मे वरुणेति पुरोनुवाक्या । तत्त्वा यामीति याज्या । एतच्चोभयमस्मिन्नेव काण्डे प्रथमप्रपाठकस्यान्त्यानुवाके व्याख्यातम् । सौर्यस्योदु त्यं जातवेदसमिति पुरोनुवाक्या । चित्रं देवानामिति याज्या । एतच्चोभयं पूर्वकाण्डस्य चतुर्थप्रपाठके व्याख्यातम् ॥

अथापोनप्त्रीयं चरुं पुनरेत्य निर्वपेदित्यस्य पुरोनुवाक्यामाह—

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो
विद्युतं वसानः । तस्य ज्येष्ठं महिमानं

( काम्येष्टियाज्यानुवाक्याभिधानम् )

वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ।, इति ।

अपामुदकानां नपादविनाशयिता तथाविधनामकः कश्चिद्देव उपस्थं स्वस्योपवेशनस्थानमास्थादातिष्ठति प्राप्नोतीत्यर्थः । कीदृशो देवः, जिह्मानामूर्ध्वं आवर्तरूपेण कुटिलगतीनामुदकानामुपरि वर्तमानः । विद्युतं वसानो मेघमण्डलमध्य उपविष्टत्वाद्विद्युदेव तस्याऽऽच्छादकं वस्त्रम् । आपश्च तं देवं परियन्ति परितो व्याप्य वर्तन्ते । कीदृश्य आपः, तस्य देवस्य ज्येष्ठं प्रशस्तं महिमानं माहात्म्यं वहन्तीर्धारयन्त्यः । बहुलवृष्ट्या स्वकीयस्य स्वामिनस्तस्य देवस्य माहात्म्यं ख्यापयन्त्य इत्यर्थः । हिरण्यवर्णा बह्वीनां विद्युतां मध्ये वर्तमानत्वाद्धेमवर्णत्वम् । यह्वीर्महत्यः ॥

तत्रैव याज्यामाह—

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं
नद्यः पृणन्ति । तमू शुचिꣳ शुचयो दीदि-
वाꣳसमपां नपातं परि तस्थुरापः ।, इति ।

अन्याः काश्चिदापः संयन्ति परस्परं संगताः प्रवाहरूपेण गच्छन्ति । ताभ्योऽन्याः काश्चिदुपयन्ति प्रवाहमन्तरेण *प्रविष्टा इव तिष्ठन्ति । ऊर्वो वडवाग्नेराधारः समुद्रः । स च वहन्तीषु स्थिरासु चाप्सु समानः । न तावदयं प्रवहन्तीनामपां प्रवेशेन वर्धते स्वयम् । नापि तासामभावे सति स्थिराभिरद्भिः परिक्षीयते । तादृशं समुद्रं नद्यः पृणन्ति स्वप्रवेशेन प्रीणयन्ति । तमू शुचय आपः परितो व्याप्य तस्थुः स्थिताः । कीदृशं, शुचिं शोधयितारं दीदिवांसं वडवाग्निजनकत्वेन दीप्यमानमपां नपातमविनाशयितारम् ॥

तत्रैव विकल्पितां याज्यामाह—

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः
परि यन्त्यापः । स शुक्रेण शिक्वना रेवद-
ग्निर्दीदायानिध्मो घृतनिर्णिगप्सु ।, इति ।

तमपां नपातमापः परियन्ति । कीदृशं तं, युवानं सर्वदा यौवनोपेतम् । कीदृश्य आपः, अस्मेरा विडम्बनारूपेण स्मयरहिता अनुकूला इत्यर्थः । युवतयः सर्वदा यौवनोपेताः । मर्मृज्यमानास्तत्संयोगेन शोध्यमानाः । सोऽपां नपादग्निरनिध्मः काष्ठरहितोऽप्यप्सु दीदाय दीप्यते । कीदृशः, शुक्रेण शिक्वना

* ख. पुस्तके ' उपरिष्टादिव ' इति पाठान्तरम् ।

युक्तः शुद्धेन प्रकाशेन युक्तः, रेवद्धनवान्, घृतनिर्णिग्विलापनेन घृतं निर्णेनेक्ति निःशेषेण शोधयतीति घृतनिर्णिक् ॥

यः पाप्मना गृहीतः स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदित्यस्याः पुरोनुवाक्यामाह—

इन्द्रावरुणयोरहꣳ सम्राजोरव आ
वृणे । ता नो मृडात ईदृशे ।, इति ।

सम्राजोः सम्यग्दीप्यमानयोरिन्द्रावरुणयोरवो रक्षणमहमावृणे सर्वतः प्रार्थये । तौ चेन्द्रावरुणावीदृशे रक्षणे वृतौ नोऽस्मान्मृडातः सर्वदा सुखयताम् ॥

तत्रैव याज्यामाह—

इन्द्रावरुणा युवमध्वराय नो विशे जनाय
महि शर्म यच्छतम् । दीर्घप्रयज्युमति यो वनु-
ष्यति वयं जयेम पृतनासु दूढ्यः ।, इति ।

हे इन्द्रावरुणौ युवं नोऽस्मभ्यं महि शर्म महत्सुखमापन्निवारणरूपं यच्छतम् । किमर्थम्, अध्वराय यागानुष्ठानाय विशे प्रजासमृद्धये जनाय परिवारकजनसिद्धये च । यः पाप्मा दीर्घप्रयज्युमति अस्मदीयं दीर्घकालभावियागप्रयोगमतिलङ्घ्य नोऽस्मान्वनुष्यति पीडयति । वयं तु युवयोरनुग्रहवशात्पृतनासु पापकृतासु पीडासु दूढ्यो दृढतरा अपीडिताः सन्तस्तं पाप्मानं जयेम ॥

पञ्चमकाण्डे मैत्रावरुण्यामिक्षा विहिता—"यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत" इति । तत्र याज्यानुवाक्ययोः प्रतीके दर्शयति—

आ नो मित्रावरुणा प्र बाहवा ।, इति ।

आ नो मित्रावरुणेति पुरोनुवाक्या । प्र बाहवेति याज्या । एतदुभयमग्नाविष्णू महि तद्धामित्यनुवाके व्याख्यातम् ॥

पुनराधेयप्रकरण आम्नातम्—"वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनुनिर्वपेत्" इति । अत्र पुरोनुवाक्यामाह—

त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽव
यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचा-
नो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत् ।, इति ।

( काम्येष्टियाज्यानुवाक्याभिधानम् )

हेऽग्ने त्वं नोऽस्माकं भक्तिं विद्वान्सन्वरुणस्य देवस्य हेडोऽस्मद्विषयं क्रोधमवयासिसीष्ठा अपनय। यजिष्ठो यष्टृतमोऽतिशयेन यागनिष्पादकः। वह्नितमोऽतिशयेन देवहविर्वोढा। शोशुचानोऽत्यन्तं दीप्यमानः। विश्वा द्वेषांसि सर्वान्विरोधिकृतान्द्वेषानस्मत्प्रमुमुग्ध्यस्मत्तः प्रमोचय ॥

तत्रैव याज्यामाह—

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या
उषसो व्युष्टौ। अव यक्ष्व नो वरुणꣳ रराणो
वीहि मृडीकꣳ सुहवो न एधि।, इति।

हेऽग्ने स त्वं नोऽस्माकमूत्या रक्षणेनावमो भव रक्षको भव। कीदृशस्त्वम्, अस्या उषसो व्युष्टौ नेदिष्ठोऽद्यतनस्योषःकालस्योपरितने प्रातःकालेऽत्यन्तं मत्यासन्नो नोऽस्माकं वरुणं वरुणेन कृतमभीष्टनिवारकं पापादिकमवयक्ष्व नाशय। रराणो रममाणः सन्मृडीकं सुखसाधनमस्मदीयं हविर्वीहि भक्षय। ततो नोऽस्माकं सुहव एधि सुखेनाऽऽह्वातुं शक्यो भव ॥

"यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते" इत्यत्र प्रवतोऽग्नेर्हविषः पुरोनुवाक्यामाह—

प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रो-
चते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ
दीदाय दैव्यो अतिथिः शिवो नः।, इति।

अयमग्निर्भरतस्य हविर्भरणवतो यजमानस्याऽऽह्वानं प्रप्रशृण्वेऽतिप्रकर्षेण शृणोतु। यद्योऽग्निः सूर्यो न सूर्य इव भा भासमानः सन्बृहद्रोचतेऽत्यन्तं दीप्यते। योऽग्निः पृतनासु सङ्ग्रामेषु पूरुं जयपूर्तिमभितस्थौ सर्वतः करोति सोऽग्निर्नोऽस्माकमतिथिर्दीदाय भवतु अतिथिरिवेह समागच्छतु। कीदृशोऽग्निः, दैव्यो देवेभ्यो हितः शिवः परममङ्गलभूतः ॥

तत्रैव याज्यामाह—

प्र ते यक्षि प्र त इयर्मि मन्म भुवो [1] यथा वन्द्यो नो हवेषु। धन्वन्निव प्रपा
असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन्।, इति।

---

१ क. घ. ङ. च. 'पूर्णम'।

हेऽग्ने ते त्वदर्थं प्रयक्षि प्रकर्षेण यजे ते त्वदीयं मन्म मननं मानसमनुग्रहविशेषं प्रकर्षेणेयर्मि व्याप्नोमि । नोऽस्माकं हवेषु यागेषु वन्द्यो नमस्कार्यो यथा भुवो येन प्रकारेण भवसि तेन प्रकारेणानुग्रहमियर्मीति पूर्वत्रान्वयः । हेऽग्ने त्वमियक्षवे यष्टुमिच्छते पूरवे हविः पूरयित्रे यजमानाय प्रियं दातुं धन्वन्प्रपेवासि मरुभूमौ शीतलपानीयपूर्णशालेवासि । हे प्रत्न पुरातन, हे राजन्दीप्यमान । एतदुभयं वह्निविशेषणम् ॥

अथ विबाधवतोऽग्नेर्याज्यापुरोनुवाक्ये प्रतीकेन दर्शयति—

वि पाजसा वि ज्योतिषा ।, इति ।

वि पाजसा पृथुना शोशुचान इत्येषा पुरोनुवाक्या । सेयं चतुर्थकाण्डस्य प्रथमप्रपाठके व्याख्यास्यते । वि ज्योतिषा बृहतेति याज्या कृणुष्व पाज इत्यनुवाके व्याख्याता ॥

अथ प्रतीकवतोऽग्नेर्हविषि पुरोनुवाक्यामाह—

स त्वमग्ने प्रतीकेन प्रत्योष यातु-
धान्यः । उरुक्षयेषु दीद्यत् ।, इति ।

हेऽग्ने स त्वं प्रतीकेन कर्मप्रारम्भमात्रेण यातुधान्यो राक्षसजातीः सर्वाः प्रत्योष प्रत्येकं दह । कीदृशस्त्वम्, उरुक्षयेषु विस्तीर्णेषु यागगृहेषु दीद्यद्दीप्यमानः ॥

तत्रैव याज्यामाह—

तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो
विदुष्टरꣳ सपेम । स यक्षद्विश्वा वयुनानि
विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ।, इति ।

वयं तमग्निं सपेम समवेताः प्राप्ता भूयास्म । कीदृशमग्निं सुप्रतीकं शोभनोपक्रमम्, अस्मास्वनुग्रहस्तेन सुष्ठूपक्रान्तं, सुदृशं शोभनकटाक्षेणास्मान्पश्यन्तं, स्वञ्चमस्मदीये कर्मणि सुष्ठागच्छन्तं, विदुष्टरमतिशयेन भक्तचित्तवेदिनम् । यद्य[illegible] वयमविद्वांसस्त्वदीयं महिमानं न जानीमस्तथाऽपि तं प्राप्तास्मः । सो[illegible]क्षद्यष्टुमिच्छतां पुरुषाणां विश्वा वयुनानि सर्वानभिप्रायविशेषान्विद्वाञ्ज्ञानन्नवतिष्ठति । अतः सोऽग्निरस्मदीयं हव्यं प्रवोचत्प्रकर्षेण ब्रवीतु ॥

अथ " यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावते " इत्येतेषु त्रिषु हविःषु याज्यापुरोनुवाक्ययोः प्रतीकानि दर्शयति—

( काम्येष्टियाज्यानुवाक्याभिधानम् )

अꣳहोमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते दायि॥, इति ॥

अꣳहोमुचे प्र भरेमेत्येषा प्रथमस्य हविषः पुरोनुवाक्या । विवेष यन्मेति याज्या । वि न इन्द्र मृध इति द्वितीयस्य हविषः पुरोनुवाक्या । इन्द्र क्षत्रमभि वाममिति याज्या । इन्द्रियाणि शतक्रतो, इति तृतीयस्य हविषः पुरोनुवाक्या । अनु ते दायि मह इत्येषा याज्या । तदेतत्षट्कं प्रथमकाण्डे षष्ठप्रपाठकेऽन्त्यानुवाके व्याख्यातम् ॥

अत्र विनियोगसंग्रहः—

"ज्योगामयाविनो ह्यायुरायुर्दाऽऽग्नेयके तथा ।
आप्या सं ते च सौम्ये स्यादवोदुत्तेति वारुणे ॥ १ ॥
सारस्वते प्र णो ह्या नोऽग्नाऽग्नाऽग्नावैष्णवे भवेत् ।
इमं तत्त्वाऽश्वदानीष्टौ उदु चित्रं तु सौर्यके ॥ २ ॥
अपां न समपोनप्त्र इन्द्रावेत्यैन्द्रवारुणे ।
मैत्रावरुण आमिक्षायागे त्वा नः प्र वेति च ॥ ३ ॥
पुनराधेयके त्वाग्निवारुणे त्वं न इत्युभे ।
प्रप्रेति प्रवदाग्नेये विद्वयं बाधसंयुते ॥ ४ ॥
स त्वं प्रतीकसंयुक्ते अꣳहवित्यैन्द्रयागके ।
वीन्द्रेति वैमृधे हीन्द्रियाऽनु ते त्विन्द्रियावते ॥
मन्त्रा ह्यस्मिन्ननुवाके पञ्चत्रिंशदुदीरिताः ॥ ५ ॥"

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके षष्ठः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

समिधो यजति वसन्तमेवर्तूनामव रुन्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्ध इडो यजति वर्षा एवाव रुन्धे बर्हिर्यजति शरदमेवाव रुन्धे स्वाहाकारं यजति हेमन्तमेवाव रुन्धे तस्मात्स्वाहाकृता हेमन्पशवोऽव सीदन्ति समिधो यजत्युषस एव देवतानामव रुन्धे तनूनपातं यजति यज्ञमेवाव रुन्धे ( १ ) इडो यजति पशूनेवाव रुन्धे बर्हिर्यजति प्रजामेवाव रुन्धे समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति स्वाहाकारं यजति वाचमेवाव रुन्धे दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति तनूनपातं यजति ( २ ) यज्ञ एवान्तरिक्षे प्रति तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हिर्यजति य एव देवयानाः पन्थानस्तेष्वेव प्रति तिष्ठति

स्वाहाकारं यजति सुवर्ग एव लोके प्रति तिष्ठ-
त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति
तिष्ठति देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः
प्रयाजैरेभ्यो लोकेभ्योऽसुरान्प्राणुदन्त तत्प्र-
याजानाम् ( ३ ) प्रयाजत्वं यस्यैवं विदुषः
प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्या-
न्नुदतेऽभिक्रामं जुहोत्यभिजित्यै यो वै प्रया-
जानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनै-
र्जायते समिधो बह्वीरिव यजति तनूनपातमे-
कमिव मिथुनं तदिडो बह्वीरिव यजति बर्हि-
रेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य
एवं वेद प्र ( ४ ) प्रजया पशुभिर्मिथुनैर्जायते
देवानां वा अनिष्टा देवता आसन्नथासुरा यज्ञ-
मजिघांसन्ते देवा गायत्रीं व्यौहन्पञ्चाक्ष-
राणि प्राचीनानि त्रीणि प्रतीचीनानि ततो
वर्म यज्ञायाभवद्वर्म यजमानाय यत्प्रयाजानू-
याजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म
यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुर-
स्ताद्वर्षीयः पश्चाद्ध्रसीयो देवा वै पुरा रक्षोभ्यः
( ५ ) इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳ-

स्थाप्यमपश्यन्तः स्वाहाकारेण प्रयाजेषु समं-
स्थापयन्वि वा एतद्यज्ञं छिंदन्ति यत्स्वाहा-
कारेण प्रयाजेषु सं स्थापयन्ति प्रयाजानिष्ट्वा
हवींष्यभि घारयति यज्ञस्य संतत्या अथो
हविरेवाकरथो यथापूर्वमुपैति पिता वै प्रया-
जाः प्रजाऽनूयाजा यत्प्रयाजानिष्ट्वा हवींष्य-
भिघारयति पितेव तत्पुत्रेण साधारणम् (६)
कुरुते तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्र-
स्य केवलं कथा साधारणं पितुरित्यस्कन्नमेव
तद्यत्प्रयाजेष्विष्टेषु स्कन्दति गायत्र्येव तेन
गर्भं धत्ते सा प्रजां पशून्यजमानाय प्र जन-
यति (७) ॥

( यज्ञमेवाव रुन्धे तनूनपातं यजति प्रयाजानामेवं वेद प्र रक्षोभ्यः साधारणं पञ्चत्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

समिध इति सम्—इधः । यजति । वस-
न्तम् । एव । ऋतूनाम् । अवेति । रुन्धे । तनूनपात-

मिति तनूं—नपांतम्। यजति। ग्रीष्मम्। एव। अवेर्ति। रुन्धे। इडः। यजति। वर्षाः। एव। अवेर्ति। रुन्धे। बर्हिः। यजति। शरदम्। एव। अवेर्ति। रुन्धे। स्वाहाकारमिर्ति स्वाहा—कारम्। यजति। हेमन्तम्। एव। अवेर्ति। रुन्धे। तस्मात्। स्वाहाकृता इति स्वाहा—कृताः। हेमन्। पशवः। अवेर्ति। सीदन्ति। समिध इर्ति सम्—इधः। यजति। उषसः। एव। देवतानाम्। अवेर्ति। रुन्धे। तनूनपातमिति तनूं—नपांतम्। यजति। यज्ञम्। एव। अवेर्ति। रुन्धे (१)। इडः। यजति। पशून्। एव। अवेर्ति। रुन्धे। बर्हिः। यजति। प्रजामिर्ति प्र—जाम्। एव। अवेर्ति। रुन्धे। समानयत इर्ति सम्—आनयते। उपभृत इत्युप—भृतः। तेजः। वै। आज्यम्। प्रजा इर्ति प्र—जाः। बर्हिः। प्रजास्विर्ति प्र—जासु। एव। तेजः। दधाति। स्वाहाकारमिर्ति स्वाहा—कारम्। यजति। वाचम्। एव। अवेर्ति। रुन्धे। दश। समिर्ति। पद्यन्ते। दशाक्षरेति दश—अक्षरा। विराडिर्ति वि—राट्। अन्नम्। विराडिर्ति वि—राट्। विराजेर्ति वि—राजा। एव। अन्नाद्यमित्यन्न—अद्यम्। अवेर्ति। रुन्धे।

समिध इति सम्—इधः । यजति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठति । तनूनपातमिति तनू—नपातम् । यजति ( २ ) । यज्ञे । एव । अन्तरिक्षे । प्रतीति । तिष्ठति । इडः । यजति । पशुषु । एव । प्रतीति । तिष्ठति । बर्हिः । यजति । ये । एव । देवयाना इति देव—यानाः । पन्थानः । तेषु । एव । प्रतीति । तिष्ठति । स्वाहाकारमिति स्वाहा—कारम् । यजति । सुवर्ग इति सुवः—गे । एव । लोके । प्रतीति । तिष्ठति । एतावन्तः । वै । देवलोका इति देव—लोकाः । तेषु । एव । यथापूर्वमिति यथा—पूर्वम् । प्रतीति । तिष्ठति । देवासुरा इति देव—असुराः । एषु । लोकेषु । अस्पर्धन्त । ते । देवाः । प्रयाजैरिति प्र—याजैः । एभ्यः । लोकेभ्यः । असुरान् । प्रेति । अनुदन्त । तत् । प्रयाजानामिति प्र—याजानाम् ( ३ ) । प्रयाजत्वमिति प्रयाज—त्वम् । यस्य । एवम् । विदुषः । प्रयाजा इति प्र—याजाः । इज्यन्ते । प्रेति । एभ्यः । लोकेभ्यः । भ्रातृव्यम् । नुदते । अभिक्राममित्यभि—क्रामम् । जुहोति । अभिजित्या इत्यभि—जित्यै । यः । वै । प्रयाजानामिति प्र—याजानाम् । मिथुनम् । वेद ।

प्रेति । प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । मिथुनैः । जायते । समिध इति सम्—इधः । बर्हीः । इव । यजति । तनूनपातमिति तनू—नपातम् । एकम् । इव । मिथुनम् । तत् । इडः । बर्हीः । इव । यजति । बर्हिः । एकम् । इव । मिथुनम् । तत् । एतत् । वै । प्रयाजानामिति प्र—याजानाम् । मिथुनम् । यः । एवम् । वेद । प्रेति ( ४ )। प्रजयेति प्र—जया । पशुभिरिति पशु—भिः । मिथुनैः । जायते । देवानाम् । वै । अनिष्टाः । देवताः । आसन् । अथ । असुराः । यज्ञम् । अजिघांसन् । ते । देवाः । गायत्रीम् । वीति । औहन् । पञ्च । अक्षराणि । प्राचीनानि । त्रीणि । प्रतीचीनानि । ततः । वर्म । यज्ञाय । अभवत् । वर्म । यजमानाय । यत् । प्रयाजानूयाजा इति प्रयाज—अनूयाजाः । हूयन्ते । वर्म । एव । तत् । यज्ञाय । क्रियते । वर्म । यजमानाय । भ्रातृव्याभिभूत्या इति भ्रातृव्य—अभिभूत्यै । तस्मात् । वरूथम् । पुरस्तात् । वर्षीयः । पश्चात् । ह्रसीयः । देवाः । वै । पुरा । रक्षोभ्य इति रक्षः—भ्यः ( ५ )। इति । स्वाहाकारेणेति स्वाहा—



THE ASIATIC SOCIETY, CALCUTTA
S 3599 12.8.96

कारेणं । प्रयाजेष्विति प्र—याजेषु । यज्ञम् । सꣳस्थाप्यमिति सं—स्थाप्यम् । अपश्यन् । तम् । स्वाहाकारेणेति स्वाहा—कारेणं । प्रयाजेष्विति प्र—याजेषु । समिति । अस्थापयन् । वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । स्वाहाकारेणेति स्वाहा—कारेणं । प्रयाजेष्विति प्र—याजेषु । सꣳस्थापयन्तीति सं—स्थापयन्ति । प्रयाजानिति प्र—याजान् । इष्ट्वा । हवीꣳषि । अभीति । घारयति । यज्ञस्यं । संतत्या इति सं—तत्यै । अथो इति । हविः । एव । अकः । अथो इति । यथापूर्वमिति यथा—पूर्वम् । उपेति । एति । पिता । वै । प्रयाजा इति प्र—याजाः । प्रजेति प्र—जा । अनूयाजा इत्यनु—याजाः । यत् । प्रयाजानिति प्र—याजान् । इष्ट्वा । हवीꣳषि । अभिघारयतीत्यभि—घारयति । पिता । एव । तत् । पुत्रेणं । साधारणम् ( ६ ) । कुरुते । तस्मात् । आहुः । यः । च । एवम् । वेदं । यः । च । न । कथा । पुत्रस्यं । केवलम् । कथा । साधारणम् । पितुः । इति । अस्कन्नम् । एव । तत् । यत् । प्रयाजेष्विति प्र—याजेषु । इष्टेषु । स्कन्दति । गायत्री ।

(प्रयाजविधिः)

एव। तेनं। गर्भम्। धत्ते। सा। प्रजामितिं प्र-

जाम्। पशून्। यजमानाय। प्रेति। जनयति (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः । )

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
हौत्रमाध्वर्यवं चाऽऽघारान्तं पञ्चम ईरितम्।
प्रयाजाद्यवशिष्टं तु वक्ति षष्ठे प्रपाठके ॥ २ ॥

तत्र प्रथमानुवाके प्रयाजा विधातव्याः। तेषां मन्त्रास्तु मन्त्रकाण्डे पञ्चमानुवाक एवमाम्नाताः—"समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आज्यस्य वेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्य वेतु । स्वाहाऽग्निम्। स्वाहा सोमम्। स्वाहाऽग्निम्। स्वाहा प्रजापतिम् । स्वाहाऽग्नीषोमौ। स्वाहेन्द्राग्नी। स्वाहेन्द्रम्। स्वाहा महेन्द्रम्। स्वाहा देवाꣳ आज्यपान्। स्वाहाऽग्निꣳ होत्राज्जुषाणाः। अग्न आज्यस्य वियन्तु।" [ब्रा० का०३ प्र० ५ अ० ५ ] इति ॥

एतेषां मन्त्राणां विनियोगं बौधायनो दर्शयति—"समिधो अग्न आज्यस्य वियन्त्विति प्रथमं तनूनपादग्न आज्यस्य वेत्विति द्वितीयम्" इत्यादि ॥

हेऽग्ने समिध्यमानास्तव मूर्तय आज्यस्य वियन्तु हूयमानमिदमाज्यमश्नन्तु । तनूं शरीरं न पातयति न नाशयति किं तु पालयतीति तनूनपात् । हेऽग्ने द्वितीया तनूनपात्तव मूर्तिराज्यं पिबतु । हेऽग्न इड ईड्याः स्तुत्यास्तव मूर्तय आज्यं पिबन्तु। बृंहणाद्बर्हिः । हेऽग्ने फलं बृंहयन्ती तव मूर्तिराज्यं पिबतु। अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा हुतं भविष्यति। एवं द्वितीयाज्यभागदेवं प्रति स्वाहा हुतमस्त्विति भविष्यतीति क्रमेण द्रष्टव्यम् । आवाहननिगदे या देवताः क्रमेण निर्दिष्टास्ता एवास्मिन्स्वाहाकारनिगदेऽपि निर्दिश्यन्त इत्यवधेयम्। होत्रात्, होमनिमित्तं स्विष्टकरणार्थमित्यर्थः । [1]हेऽग्न एते सर्वे देवाः प्रीयमाणा इदानीं त्वन्मुखेनाऽऽज्यं पिबन्तु ॥

---

१ क. घ. च. हेऽग्ने तत्ते दत्तं स° ।

तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः साध्यान्प्रयाजान्विधत्ते—

समिधो यजति वसन्तमेवर्तूनामव रुन्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्ध इडो यजति वर्षा एवाव रुन्धे बर्हिर्यजति शरदमेवाव रुन्धे स्वाहाकारं यजति हेमन्तमेवाव रुन्धे तस्मात्स्वाहाकृता हेमन्पशवोऽव सीदन्ति, इति।

अत्र समिदादिशब्दैर्यागविशेषनामान्युच्यन्ते । ऋतवो वै प्रयाजा इत्येवमृतुत्वेन स्तूयमानत्वात्तैः प्रयाजैः क्रमेण वसन्ताद्यवरोध उच्यते । यस्मात्स्वाहाकारयागेन(ण) हेमन्तावरोधस्तस्माद्धेमन्हेमन्ते पशवोऽवसीदन्ति, द्विपादश्चतुष्पादश्च हिमेन पीड्यन्ते, तेन तत्र दृष्टान्तः स्वाहाकृता इति, स्वाहाकारेण प्रक्षिप्ताः समिधो यथा दाहेन पीड्यन्ते तद्वदित्यर्थः। तादृश उग्रोऽपि हेमन्तोऽस्याधीनो भवतीति यागस्तुतिः ॥

पुनरपि विधानान्तरेण प्रशंसति—

समिधो यजत्युषस एव देवतानामव रुन्धे तनूनपातं यजति यज्ञमेवाव रुन्ध इडो यजति पशूनेवाव रुन्धे बर्हिर्यजति प्रजामेवाव रुन्धे, इति।

समिच्छब्देन समित्स्तुतिसूचनादुषसोऽवरोधः । तनूनपाच्छब्देनाविनाशसूचनात्कृत्स्नयज्ञावरोधः । इट्शब्देनेष्यमाणक्षीरादिसूचनात्पश्ववरोधः । प्रजा वै बर्हिरिति श्रुत्यन्तराद्बर्हिर्यागेन(ण) प्रजावरोधः ॥

चतुर्थप्रयाजार्थमौपभृतस्याऽऽज्यस्य जुह्वामानयनं विधत्ते—

समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति, इति।

उपभृतः सकाशाज्जुह्वामर्धमाज्यं सम्यगानयेत् । बर्हिर्यागस्य प्रजारूपत्वादाज्यस्य तेजस्त्वात्प्रजासु तेजः स्थापितं भवति ॥

पञ्चमप्रयाजमवशिष्टं प्रशंसति—

स्वाहाकारं यजति वाचमेवाव रुन्धे, इति।

---

१ ख. °न दीप्तिसू° ।

( प्रयाजविधिः )

अस्मिन्प्रयाजे स्वाहाशब्दानामग्न्यादिशब्दानां च बहूनामुच्यमानत्वात्तेन वामवरोधः ॥

पूर्वोक्तवसन्ताद्यवरोधाः पञ्चेदानीमुक्ता उषःकालाद्यवरोधाः पञ्चेति दशसंख्याद्वारा यागान्प्रशंसति—

दश सं पद्यन्ते दशाक्षरा विराडन्नं
विराड्विराजैवान्नाद्यमव रुन्धे , इति ॥

पुनरपि तत्तल्लोकप्रतिष्ठामुखेन प्रशंसति—

समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति
तनूनपातं यजति यज्ञ एवान्तरिक्षे प्रति
तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हि-
र्यजति य एव देवयानाः पन्थानस्तेष्वेव
प्रति तिष्ठति स्वाहाकारं यजति सुवर्ग
एव लोके प्रति तिष्ठत्येतावन्तो वै देवलो-
कास्तेष्वेव यथापूर्वं प्रति तिष्ठति , इति।

समिद्यागस्य प्राथम्यात्तेनास्मिन्प्रथमलोके प्रतिष्ठा। प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकमित्युक्तत्वाद्दीक्षादिरूपो यज्ञो लोकद्वयवर्त्यन्तरिक्षरूपस्तस्मिन्नन्तरिक्षे द्वितीयत्वसाम्यात्तनूनपाद्यागेन प्रतिष्ठा। इड्यागस्य पशुसंबन्धः पूर्वमेवोक्तः। बर्हिःशब्देन देवयानमार्गसाधनस्य यज्ञस्य सूचनात्तद्यागेन त्रिष्वपि पूर्वोक्तेषु देवयानमार्गेषु प्रतिष्ठा। स्वाहाकारयागस्योत्तमत्वात्तेन स्वर्गप्रतिष्ठा। भूलोकमारभ्य स्वर्गान्ता यथोक्ता एतावन्त एव देवानां पूज्यानामपेक्षिता लोकास्तेषु सर्वेषु यथाक्रममेवैतैः प्रतिष्ठितो भवति ॥

इदानीं नामनिर्वचनेन प्रशंसति—

देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजै-
रेभ्यो लोकेभ्योऽसुरान्प्राणुदन्त तत्प्रयाजानां
प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्त
प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदते , इति।

अस्माकमेवैते लोका भवेयुरित्युभयेषां परस्परं स्पर्धा। प्राणुदन्त विरोधिनो यैर्यागैस्ते यागाः प्रयाजाः ॥

यदुक्तं सूत्रकारेण—"यं कामयेताभितरं वसीयान्स्यादित्यभिक्रामं तस्य जुहुयात्" इति। अभितरमुत्तरोत्तरवृद्ध्येत्यर्थः। तदेतत्सूत्रोक्तमभिक्रमणं विधत्ते—

अभिक्रामं जुहोत्यभिजित्यै, इति।

अभिक्रम्याभिक्रम्यादूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहुयात्। एवमुत्तरत्र। तदेतदभिक्रमणम्॥

स्त्रीलिङ्गबहुवचननिर्देशं लिङ्गान्तरैकवचननिर्देशं च सह प्रशंसति—

यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते, इति।

एकस्य पुरुषस्य बह्व्यः स्त्रियो लोके भवन्ति, तत्साम्यादत्र मिथुनत्वोपचारः। मूर्तिबहुत्वेऽपि देवतैक्याद्बह्वीरिवेत्युपक्रमोक्तिः॥

कवचरूपत्वं सैन्यसादृश्यं च संपाद्य प्रशंसति—

देवानां वा अनिष्टा देवता आसन्नथासुरा यज्ञमजिघांसन्ते देवा गायत्रीं व्यौहन्पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाभवद्वर्म यजमानाय यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयः, इति।

पुरा देवा यदा यज्ञं कुर्वन्ति तदानीमाज्यभागादिदेवता अनिष्टा आसन्। तत्तदिज्यायाः प्रागेव तस्मिन्नवसरे समागत्यासुरा यज्ञं हनिष्याम इत्यैच्छन्। अतस्तदिज्याप्रतिबद्धास्तत्प्रतीकारत्वेन देवा अष्टाक्षरे गायत्रीपादे व्यूहद्वयं कृतवन्तः। तत्राक्षरपञ्चकस्य व्यूहो यज्ञानुष्ठानात्प्राचीनो रक्षकः। अक्षरत्रय-

१ क. घ. ङ. च. °म्यादू°। २ क. घ. ङ. च. °त्। त°।

( प्रयाजविधिः )

व्यूहः प्रतीचीनो रक्षकः। ततो व्यूहद्वयं यज्ञस्य कवचमाच्छादनायाभवत्। तथा यजमानस्यापि। अतः पञ्चाक्षररूपत्वेन पञ्च प्रयाजाः पूर्वमिज्यन्ते। त्र्यक्षररूपत्वेन त्रयोऽनूयाजाः पश्चादिज्यन्ते। तदुभयं कवचं यज्ञयजमानयोरुभयतो रक्षणम्। तेन रक्षणेन भ्रातृव्यस्याभिभूतिर्भवति। यस्मादत्र प्राचीनान्यक्षराणि बहूनि प्रतीचीनान्यल्पानि तस्माल्लोकेऽपि युद्धार्थं गच्छन्त्यां सेनायां पुरस्ताद्बहुरूथं जनसंघः परकीयसैन्यस्य भयोत्पादनाय भूयान्विनिष्पाद्यते। पृष्ठभागे त्वल्पीयान्॥

प्रयाजशेषेण हविरभिघारणं विधत्ते—

देवा वै पुरा रक्षोभ्य इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन्तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन्वि वा एतद्यज्ञं छिन्दन्ति यत्स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य संतत्या अथो हविरेवाकरथो यथापूर्वमुपैति, इति।

देवाः कदाचिद्यागं कुर्वन्तो यज्ञोपघातिनां रक्षसामागमनात्पुरा स्वाहाकारनामधेयेन पञ्चमप्रयाजेन यज्ञः समापनीय इति विचार्य तथैव समापयन्। तदयुक्तं, यज्ञविच्छेदप्रसङ्गात्। अतः प्रयाजानिष्ट्वा तच्छेषेणाऽऽज्येन वेद्यामासादितानां हविषामभिघारणे सति यज्ञः संततो भवति। अथो पुरोडाशादिद्रव्यस्य हविष्ट्वं कृतं भवति। किं च, यथापूर्वमुत्तरमुपैति प्रयाजा यथा निर्विघ्नेनानुष्ठितास्तथैवाऽऽज्यभागाद्यनुष्ठानमपि निर्विघ्नेन प्राप्नोतीत्यर्थः॥

प्रकारान्तरेणाभिघारणं प्रशंसति—

पिता वै प्रयाजाः प्रजाऽनूयाजा यत्प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत्पुत्रेण साधारणं कुरुते, इति।

प्रथमभावित्वात्प्रयाजानां पितृत्वं, पश्चाद्भावित्वादनूयाजानां [1]पुत्रत्वम्। अनूयाजार्थं च हविरुपभृति गृहीतमस्ति। पुरोडाशादिहविरभिघारणवेलाया-

---

१ ख. 'र्थे ह'।

मौपभृतमपि हविः प्रयाजशेषेणाभिघारयति। तथा सति पितृस्थानीयं प्रयाजानां संबन्धि यदवशिष्टमाज्यद्रव्यं तत्पुत्रस्थानीयानामनूयाजानामपि साधारणं कृतं भवति ॥

इममेवार्थं लौकिकोदाहरणेन विस्पष्टयति—

तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं कथा साधारणं पितुरिति, इति।

लोके हि बालेन पुत्रेण यदुपार्जितं तद्द्रव्यं स पुत्र उत्तरकाले स्वजीवनार्थमसाधारणत्वेन संगृह्य गुप्तं करोति न तु पित्रे प्रयच्छति नतु भ्रातृभ्यः। पित्रा तु यदुपार्ज्यते तत्पितुर्बालपुत्रस्य तद्भ्रातॄणां च साधारणं भवति। तेन हि द्रव्येण सर्वेऽपि जीवन्ति। तथा सति लौकिकः कश्चित्पुरुषो वेदमधीत्य प्रयाजानूयाजवृत्तान्तं जानाति। अन्यस्त्वध्ययनरहितो न जानाति। तादृशानामुभयविधानां सभायामुपविष्टा अनभिज्ञाः पप्रच्छुः केन हेतुना पुत्रस्य द्रव्यं केवलमसाधारणं संपन्नम्। पितृद्रव्यं तु केन हेतुना साधारणं संपन्नमिति। तस्य च प्रश्नस्याभिज्ञाः प्रयाजानूयाजवृत्तान्तेनोत्तरं ददुरिति शेषः। प्रयाजानामाज्यं साधारणं, तच्छेषेणेज्यमानत्वात्। अनूयाजानां त्वसाधारणम्। तच्छेषस्यान्यत्र विनियोगाभावात्। एवं लौकिकयोः पितृ ( ता )-पुत्रयोरपि द्रष्टव्यम् ॥

पुनः प्रकारान्तरेणाभिघारणं प्रशंसति—

अस्कन्नमेव तद्यत्प्रयाजेष्विष्टेषु स्कन्दति[1], इति।

यागार्थस्य द्रव्यस्य यागात्प्रागेवान्यत्र पतनं विनाशो भवति। अत्र त्विष्टेषु प्रयाजेषु पश्चादन्येषु हविःषु शेषः प्रक्षिप्यते। तस्मादेतदस्कन्नमविनष्टमेव। शङ्कितस्कन्दनदोषस्य परिहार एवात्र प्रशंसेति[2] ॥

पुनरपि प्रकारान्तरेण प्रशंसति—

गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून्यजमानाय प्र जनयति, इति।

एकतो[3] गायत्र्याः पञ्चाक्षररूपाः प्रयाजा अन्यतो गायत्र्यास्त्र्यक्षररूपा अनूयाजाः। मध्ये यदभिघारणं तेन गायत्र्येव स्वोदरे गर्भं धृतवती भवति। तेन च सा गायत्री यजमानार्थं प्रजां पशूनुत्पादयति ॥

१ घ. ङ. च. °स्कन्नदो°। २ क. ख. च. °शंसति। ३ क. घ. ङ. च. प्रकृतौ।

अत्र मीमांसा।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"समिधो यजतीत्यादावेकत्वमुत[1] भिन्नता।
धातुप्रत्यययोरैक्यादेकत्वे भिन्नता कुतः॥
अभ्यासात्कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे।
विधित्वं[2] श्रुतितो भाति संनिधेरनुवादता॥"

दर्शपूर्णमासयोः श्रूयते—"समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति। तत्र पञ्चकृत्वः श्रूयमाणे यजतिपदे पूर्वोक्तेषु यजति ददातीत्यादिपदेष्विव धातुभेदो नास्ति। येन भावनाभेद आशङ्क्येत। तस्मादाख्यातैक्यप्रयुक्तं भावनैक्यमनिवार्यमिति चेन्मैवम्। यजतिपदाभ्यासेन कर्मभेदावगमात्। कर्मैकत्वेऽभ्यासो निरर्थकः स्यात्। अथोच्येत—समिधो यजतीत्यनेन प्रथमश्रुतेन वाक्येन विहितं समिन्नामकं यागमुपरितनैश्चतुर्भिर्यजतिपदैरनूद्य तनूनपादादयो देवतारूपा द्रव्यरूपा वा गुणाश्चत्वारो विकल्पिता विधीयन्ते। ततोऽनुवादार्थत्वान्नाभ्यासवैयर्थ्यमिति। तन्न। तनूनपादादिशब्दानां यागनामत्वेन गुणविधित्वाभावात्। न तावदत्र देवताविधिः, चतुर्थीतद्धितयोरश्रवणात्। नापि द्रव्यविधिः, तृतीयान्तत्वाभावात्। ततोऽग्निहोत्रं जुहोतीत्यादाविव द्वितीयान्तानां युक्तं नामत्वम्। यत्तु चतुर्णामुपरितनानां यजतिपदानामनुवादत्वमिति, तदसत्, तेषां विधायकत्वात्। यथा समिधो यजतीत्यत्र यजतिपदे विधित्वं श्रुत्या प्रतीयते तथाऽन्येष्वपि चतुर्षु पदेषु विधित्वं श्रौतम्। अनुवादत्वं[3] तु पुरोवादरूपस्य समिधो यजतीत्यस्य संनिधानादवगम्यते। संनिधिश्च श्रुतेर्दुर्बलः। विधित्वे च पूर्ववाक्यविहितस्य समिन्नामिकस्य यागस्य पुनर्विधानायोगात्तनूनपादादिनामकानि यागान्तराणि विधीयन्ते। नन्वेवं सति संज्ञाभेदात्कर्मभेदः संपद्यते, न त्वभ्यासात्। तथा सति वक्ष्यमाणाधिकरणेन संकीर्येत। मैवम्। वैषम्यात्। अथैष ज्योतिरित्यस्मिन्वक्ष्यमाणोदाहरणे यागावगमात्प्रागेव संज्ञात्वावगमात्संज्ञायाः कर्मभेदहेतुत्वम्। इह तु विधायकैर्यजतिपदैर्यागेष्ववगतेषु भेदे चाभ्यासादवगते भिन्नानां यागानां समित्संज्ञाया अन्याः संज्ञा अपेक्षिता इति तनूनपादादीनां संज्ञात्वं पश्चादवगम्यते। तस्मादभ्यास एवात्र यागभेदहेतुः।

१ क. घ. ङ. °कत्वं भि°। २ क. घ. ङ. च. °त्वं न श्रुतौ भा°। ३ ख. च. °दत्वं त°।

नवमाध्यायस्य द्वितीयपादे चिन्तितम्—

"देवता यजयो वा स्युः प्रयाजे समिदादयः ।
विष्ण्वादिवद्देवतात्वं न चतुर्थ्याद्यभावतः ॥"

दर्शपूर्णमासयोः प्रयाजपञ्चकमाख्यातं समिधो यजतीत्यादिना । तत्र यथा विष्णुं यजति वरुणं यजतीत्यादौ द्वितीयानिर्दिष्टा विष्ण्वादयो देवतास्तथा समिदादीनां देवतात्वम् । ततो यागैर्देवताः संस्क्रियन्त इति दृष्टार्थत्वलाभ इति चेन्मैवम् । सर्वत्र चतुर्थ्या तद्धितेन वा देवता निर्दिश्यते । तद्यथा "यदग्नये सायं जुहुयात् ।" "आग्नेयोऽष्टाकपालः" इति । न चात्र समिदादिषु चतुर्थीतद्धितौ विद्येते । तादर्थ्यप्रतीतौ देवता भवति । न च द्वितीयया तादर्थ्यं प्रतीयते । किं त्वीप्सिततमत्वम् । तच्च कर्मनामत्वादुपपद्यते । अग्निहोत्रं जुहोतीत्यादौ तद्दर्शनात् । यथा पाकं पचतीत्युक्ते पचिक्रियायाः कर्तव्यता प्रतीयते, तथा समिधो यजतीत्युक्ते समिद्यागः कर्तव्य इत्यर्थो भवति । विष्णुं यजतीत्यादौ तादर्थ्यमुपचर्यते । प्रयाजमन्त्रेषु समिधो अग्न आज्यस्य वियन्त्वित्यादिषु समिदादिशब्दैर्बहुवचनैकवचनान्तैर्देवता निर्दिष्टाः । तदेव निमित्तीकृत्य तादृशैरेव शब्दैरिह यागा अभिधीयन्ते—"समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति । तस्मान्नात्र देवतासंस्कारविधिः । किं तु यागाः केवला विधीयन्ते । तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात्प्रकरणेनाऽऽरादुपकारकत्वम् । पञ्चमप्रयाजस्य तु[२] वक्ष्यमाणाज्यभागादिदेवतासंस्कारकत्वं दशमेऽभिधास्यते ।

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

"अन्त्यः प्रयाज आरात्किमुपकार्यथ संस्कृतिः ।
स्वाहाकारेति[३] देवोक्तेर्मातृवन्मन्त्रवर्णनात् ॥
आद्यो मैवं चतुर्थ्यादेरभावाद्यागमात्रके ।
विधित्सया च सौर्यादावर्थोऽग्न्यादिनिवर्तनम्[४] ॥"

दर्शपूर्णमासेष्टौ पञ्चमप्रयाज एवमाम्नायते—"स्वाहाकारं यजति" इति । स किमिष्टेराराद्उपकारक उताऽऽज्यभागादिषु वक्ष्यमाणानामग्न्यादिदेवतानां संस्कार इति संशयः । तत्र स्वाहाकारशब्देन देवतोच्यते । यागस्य तदाकाङ्क्षणात् । न च प्रत्यक्षवचनमुपेक्ष्य मन्त्रवर्णदेवताकल्पनमुचितम् । नन्वेवं

१ क. घ. ङ. °तीता दे° । २ ख. च. तु वक्ष्य° । ३ क. घ. ङ. च. °तिमन्त्रोक्ते° । ४ क. घ. ङ. च. °ग्न्यादेर्निव° ।

सति विधिमन्त्रयोर्वैयधिकरण्यं प्रसज्येत। विधिना हि स्वाहाकाराख्या देवता विहिता। मन्त्रे तु यक्ष्यमाणाज्यभागदेवता अग्न्यादयः प्रतीयन्ते। "स्वाहाऽग्निम्। स्वाहा सोमम्। स्वाहाऽग्निम्। स्वाहा प्रजापतिम्। स्वाहाऽग्नीषोमौ" इत्यादिको हि मन्त्रः पठितः। नायं दोषः, मातृशब्दवन्मान्त्रवर्णिकाग्न्यादिशब्दानामनेकार्थत्वसंभवात्। यथा मातृशब्दः प्रस्थादिना धान्यस्य मातारं जननीं चाऽऽचष्टे तथाऽग्न्यादिशब्दः स्वाहाकाराख्यदेवतामाचक्षताम्। न च स्वाहाकाराख्यदेवतैव संस्क्रियतामिति वाच्यम्। संस्कृतायास्तस्या अन्यत्रोपयोगाभावात्। तस्मादिष्टेरारादुपकारक इत्याद्यः पक्षोऽभ्युपगन्तव्यः। मैवम्। चतुर्थ्या तद्धितेन वा सर्वत्र देवता विधीयते। न चात्र तौ विद्येते। किंचायं विधिर्देवतायागावुभौ विधत्ते देवताविशिष्टं यागं वा देवतामात्रं वा यागमात्रं वा। नाऽऽद्यः, वाक्यभेदप्रसङ्गात्। न द्वितीयो गौरवापत्तेः। न तृतीयः, अप्राप्तस्य यागस्याननुवाद्यत्वे सति तदनुवादेन देवताविध्ययोगात्। तस्माच्चतुर्थः पक्षः परिशिष्यते। तत्र हि द्वितीयान्तस्वाहाकारशब्दः पौर्णमासीं यजत इत्यादाविव कर्मनामधेयं भविष्यति। तस्मादाज्यभागादिदेवतासंस्कार उत्तमः प्रयाजः। एवं च सति सौर्यादिविकृतिषूत्तमप्रयाजमन्त्रे प्रधानदेवतावाच्यग्न्यादिपदपरित्यागो बाधविचारान्तर्गतस्याधिकरणस्य फलं भविष्यति। यत्तु पञ्चमाध्याये प्रयाजानामनुष्ठानक्रमे पाठक्रमः प्रमाणमिति चिन्तितं तदस्माभिरिषे त्वोर्जे त्वा यज्ञस्य घोषदसीत्यनयोरनुवाकयोः पौर्वापर्ये पाठ एव प्रमाणमित्यभिप्रेत्य तत्रैवोदाहृतम्।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

"न क्रत्वङ्गं प्रयाजादि क्रत्वंगं वा न चाङ्गता।
प्रक्रियाया अमानत्वान्नैराकाङ्क्ष्येण वाक्ययोः॥
प्रयाजादेः फला(लेऽ)पेक्षा कथंभावोऽ(वेऽ)पि च क्रतोः।
तेन प्रकरणाम्नानं तस्मा[1]दङ्गाङ्गिता तयोः॥

सार्धपादद्वये विनियोजकत्वेनोक्तानि यानि श्रुतिलिङ्गवाक्यानि तेभ्योऽतिरिक्तं किंचित्प्रकरणनामकं प्रमाणं न वेदे पश्यामः। न हि पदतत्सामर्थ्यान्वयैरसंसृष्टः कश्चिद्वेदभागः कचित्केनचिदाम्नायते। एकवाक्यतामापन्नो वाक्यसमूहः प्रकरणमिति चेत्। न। वाक्ययोः सतोः पश्चादेकवाक्यताया अभावात्। नहि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "समिधो यजति" इत्यनयोर्वाक्ययोः परस्पराकाङ्क्षाऽस्ति, येनैकवाक्यता कल्प्येत।

१ क. घ. ङ. °स्मात्क्रत्वङ्गता।

तस्मात्प्रयाजादीनां न दर्शपूर्णमासाङ्गत्वमिति प्राप्ते ब्रूमः—प्रयाजादयः फलहेतवः पुरुषप्रवृत्तिरूपत्वात्सेवादिवत् । दर्शपूर्णमासावुपकरणैरुपकार्यौ करणत्वात्प्रदीपोपकृतचक्षुर्वत् । तथा सति किं प्रयाजादेः फलं किं वा दर्शपूर्णमासयोरुपकरणमित्याकाङ्क्षायां संपन्नं वाक्यैकवाक्यतारूपं प्रकरणं, तेन च प्रयाजादीनामङ्गत्वं प्रतीयते ।

तृतीयाध्यायस्य प्रथमपादे चिन्तितम्—

" अभिक्रामं जुहोतीति युक्तं कर्त्राऽखिलस्य तत् ।
किं वा प्रयाजमात्रस्य कृत्स्नकर्तृयुतं भवेत् ॥
प्रयाजाभिक्रमणयोः क्रियात्वमु(त्वादु)भयोरपि ।
मिथःसंबन्धराहित्यान्मैवं तेऽपि समत्वतः ॥
कर्तृयोगाददोषश्चेत्समानेयं समाहितिः ।
ततः प्रयाजसांनिध्यात्तत्कर्त्रैवास्य संयुतिः ॥ "

दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते—" अभिक्रामं जुहोति " इति । तत्र होमकाले यदेतदाहवनीयस्याऽऽभिमुख्येन संचरणं तत्कृत्स्नदर्शपूर्णमासकर्त्रा संबध्यते, न तु प्रयाजमात्रकर्त्रा । कुतः, अभिक्रमणस्य क्रियारूपस्य कारकत्वाभावेन प्रयाजक्रियया संबन्धासंभवादिति चेत् । मैवं, क्रियारूपत्वादेव दर्शपूर्णमासक्रियया संबन्धासंभवात् । अथोच्येत, अभिक्रमणं कर्तृकारकेण साक्षात्संबध्यते, तद्द्वारा कृत्स्नदर्शपूर्णमासकर्मणा संबध्यत इति । तदेतत्समाधानं प्रयाजसंबन्धेऽपि समानम् । अतः संनिधिबलात्प्रयाजकर्त्रा संबध्यते ।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" अभिघार्यं प्रयाजानां शेषेण हविरत्र किम् ।
शेषधारणतत्पात्रे कार्ये नो वाऽभिघारणम् ॥
नान्यथा तेन ते कार्ये न कार्ये प्रतिपत्तितः ।
प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात् ॥ "

प्रकृतौ श्रुतं " प्रयाजशेषेण हवीᳪंष्यभिघारयति " इति । तदेतद्विकृतावतिदिष्टम्[1] । विकृतयश्च वाजपेयगताः पशवः । ते च द्विविधाः—क्रतुपशवः प्राजापत्याः पशवश्चेति । आग्नेयं पशुमालभेतेत्यादिना विहिताः क्रतुपशवः । इतरे तु सप्तदश प्राजापत्यान्पशूनालभत इति विहिताः । ते चोभयविधाः पशवः प्रातःसवने सहैवोपक्रम्यन्ते । ततः सर्वेषामर्थे सकृदेव प्रयाजा अनु-

१ क. घ. ङ. °दिश्यते । वि° ।

( प्रयाजाविधिः )

छीयन्ते । तत्र क्रतुपशूनां प्रातःसवन एवाऽऽलब्धव्यत्वात्तदीयहविषां प्रयाजशेषेणाभिघारणं निर्विघ्नमेव सिध्यति । प्राजापत्यपशूनां तु पर्यग्निकरणपर्यन्तमेव तदानीमनुष्ठानम् । आलम्भस्तु माध्यंदिने सवने, तत्कालविशेषस्य ब्रह्मसाम्न्यालभत इति विधानात् । तेषां च प्राजापत्यपशूनामभिघारणार्थं प्रातःकालीनप्रयाजशेषो धारयितव्यः । न चात्र जुह्वां तद्धारणं संभवति । क्रतुपश्वनुष्ठाने जुह्वा व्यापृतत्वात् । अतः पात्रान्तरं संपाद्य तस्मिन्नयं शेषो धारयितव्यः । अन्यथा प्राजापत्यहविषां प्रयाजशेषेणाभिघारणासिद्धेः । तस्माच्छेषधारणतत्पात्रे संपादनीये इति प्राप्ते ब्रूमः—ते उभे न कर्तव्ये । कुतः । अभिघारणस्य शेषप्रतिपत्तिरूपत्वेन हविःसंस्कार[क]त्वाभावात् । नहि दृष्टेऽर्थे संभवति अदृष्टोऽर्थः संस्कारः कल्पयितुं युक्तः । दृष्टं च जुह्वा रिक्तीकरणमन्यथा प्रयाजशेषोपेतायां जुह्वामाज्यभागार्थतया गृह्यमाणं संकीर्येत । अतो रिक्तीकरणरूपप्रतिपत्त्यर्थमेव प्रकृतौ शेषेणाभिघारणम् । अस्तु वा तत्र हविःसंस्कारोऽपि । तथाऽपि प्राजापत्यवपायामभिघारणं व्यर्थम् । रूक्षत्वनिवारणाय ह्यभिघार्यते । नच प्राजापत्यवपायां रूक्षताऽस्ति । ब्रह्मसाम्नैव तद्रूक्षताया निवारितत्वात् । अत एव श्रूयते—“शम्या वा एतर्हि वपा यद्यनभिघृता ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते तेनाशम्यास्तेनाभिघृताः” इति । शम्या रूक्षा इत्यर्थः । तस्माच्छेषधारणतत्पात्रे न कर्तव्ये ।

तत्रैवान्यच्चिन्तितम्—

“ चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतम् ।
जुह्वामानयतीत्यौपभृतं नैषा प्रयोजयेत् ॥
प्रयोजयेद्दुताऽऽनीतिः प्रयाजाद्यखिलार्थता ।
श्रुतौपभृत आज्येऽतो जौहवेन विकल्पनात् ॥
न प्रयोजकता मैवं त्रितयार्थे हि जौहवम् ।
अतिहायेड इत्युक्तेश्चतुर्थे सा प्रयोजयेत् ॥ ”

दर्शपूर्णमासयोः श्रूयते—“ अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतम् ” इति । अस्यायमर्थः—पञ्चानां प्रयाजानां मध्ये तृतीयः प्रयाज इट्शब्देन बहुवचनान्तेनाभिधीयते । तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुमुपभृत्संज्ञकायां स्रुचि स्थितं घृतं जुह्वामानेतव्यमिति । तद्देतदानयनमुपभृत्याज्यग्रहणस्य न प्रयोजकम् । तथा हि—जुहूपभृद्ध्रुवासु

१ क. घ. ङ. च. °णं संस्कारार्थत्वं सि° । २ ख. °पत्यानां हविषाम° । ३ ख. °ष्टे प्रतिपादने सति । ४ क. घ. ङ. वाऽत्र । ५ क. घ. ङ. च. तेन श° । ६ च. नैव ।

तिसृषु स्रुक्ष्वाज्यग्रहणप्रकारस्तद्विनियोगश्चैवमाम्नायते—" चतुर्जुह्वां गृह्णाति । अष्टावुपभृति । चतुर्ध्रुवायाम् । यज्जुह्वां गृह्णाति । प्रयाजेभ्यस्तत् । यदुपभृति । प्रयाजानूयाजेभ्यस्तत् । सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम् " इति । तत्र जौहवं केवलं प्रयाजार्थमौपभृतं तु प्रयाजानूयाजार्थमिति प्रयाजेषु जौहवमौपभृतं चोभयं विकल्पते । तथा सति यदा जौहवेन प्रयाजा इज्यन्ते तदानीमौपभृतस्याऽऽनयनमेव नास्ति, कुत आनयनस्य प्रयोजकत्वम् । यदा त्वौपभृतेन प्रयाजहोमस्तदानीमौपभृतस्यार्धं प्रयाजार्थमितरदनूयाजार्थम् । तयोः प्रयाजसाधनमर्धं प्रथमप्रयाजकाल एव जुह्वामानीतमिति न तस्य चतुर्थप्रयाजं प्रति समानयनं विधीयते । यत्त्वनूयाजार्थमितरदर्धमुपभृत्यवशिष्टं तन्मध्ये किंचिच्चतुर्थप्रयाजं प्रति समानेतव्यम् । तत्त्वनूयाजैरेव प्रयुक्तमिति न तस्याऽऽनयनं प्रयोजकमिति प्राप्ते ब्रूमः—यज्जौहवं तत्प्रयाजत्रितयार्थं, यदौपभृतं तदेवावशिष्टप्रयाजद्वयार्थमनूयाजार्थं चेत्येवं वाक्यद्वयस्य व्यवस्थायां संभवन्त्यामष्टदोषदुष्टो विकल्पो नाऽऽश्रयितुं शक्यः । यदा जौहवस्वीकारस्तदानीमौपभृतवाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत, अप्राप्तमप्रामाण्यं स्वी क्रियेत, पुनरपि कदाचिदौपभृतस्वीकारे त्यक्तं प्रामाण्यं स्वी क्रियेत, स्वीकृतमप्रामाण्यं परित्यज्येतेत्यौपभृतवाक्ये चत्वारो दोषाः । जौहववाक्येऽप्येवं चत्वार इत्यष्टौ दोषाः । यथोक्तव्यवस्था च " अतिहायेडः " इति वाक्यादध्यवसीयते । तथा सत्यौपभृतस्यानूयाजा यथा प्रयोजकास्तथैव चतुर्थोत्तमप्रयाजनिष्पादकमानयनमपि प्रयोजकमेव ।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्—

" प्रयाजानूयाजसिद्ध्यै पात्रैक्यमुत भिन्नता ।
एकोपभृद्द्वयोरर्थे दृष्टाऽतो विकृतौ तथा ॥
विकृतौ पात्रभेदोऽस्तु शुद्धाज्यपृषदाज्ययोः ।
एकपात्रे ग्रहाशक्तेर्द्रव्यैक्यं प्रकृतौ द्वयोः ॥ "

अग्नीषोमीयपशौ प्रयाजानूयाजसाधनं द्रव्यं धारयितुमेकमेव पात्रं कर्तव्यम् । कुतः, प्रकृतावुभयार्थस्याऽऽज्यस्यैकयैवोपभृता धृतत्वेन विकृतावपि तदतिदेशादिति प्राप्ते ब्रूमः—प्रकृतिवत्केवलाज्येन प्रयाजा इज्यन्ते । अनूयाजास्तु पृषदाज्येन यष्टव्याः । " पृषदाज्येनानूयाजान्यजति " इति तद्विधानात् । पृषदाज्यं नाम दधिमिश्रमाज्यम् । नहि शुद्धमिश्रयोरेकेन पात्रेण धारणं संभ-

१ ख. °कल्प्यते । २ ख. °प्रयस्तो वि° । ३ ख. °तुर्थपञ्चम° । ४ क. घ. ङ. °भेदस्तु । ५ क. घ. च. °पात्रिग्रहेऽश° । ङ. °पात्रे ग्रहेऽश° ।

( आज्यभागविधिः )

वति। तस्मादत्र पृथक्पात्रम्। यत्तु चतुर्थस्य प्रथमपादे चिन्तितं जुह्वामाज्यग्रहणं प्रयाजत्रयार्थमुपभृत्याज्यग्रहणमनूयाजार्थं चेति। यदप्यत्रैव चिन्तितम्—उपभृति चतुर्गृहीतद्वयादष्टसंख्येति, तदुभयमस्माभिराज्यग्रहणविधायके प्रत्युष्टꣳ रक्ष इत्यनुवाके प्रदर्शितम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः। )

---

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति पूर्वार्धे जुहोति तस्मात्पूर्वार्धे चक्षुषी प्रबाहुग्जुहोति तस्मात्प्रबाहुक्चक्षुषी देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै राजानौ वा एतौ देवतानाम् (१) यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृता ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतोदतश्च पशून्दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधा-

रचैमनूच्यं हविषं ऋचा यंजति तेनोभयतोंदतो
दाधार मूर्धन्वतीं पुरोनुवाक्यां भवति मूर्धानं-
मेवैनꣳ समानानां करोति ( २ ) नियुत्वंत्या
यजति भ्रातृंव्यस्यैव पशून्नि युंवते केशिनꣳ ह
दाभ्र्यं केशी सात्यंकामिरुवाच सप्तपंदां ते
शक्करीꣳ श्वो यज्ञे प्रंयोक्तासे यस्यै वीर्येण प्र
जातान्भ्रातृंव्यान्नुदते प्रतिं जनिष्यमाणान्यस्यै
वीर्येणोभयोर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण
पूर्वार्धेनानड्वान्भुनक्तिं जघनार्धेनं धेनुरितिं
पुरस्ताल्लक्ष्मा पुरोनुवाक्यां भवति जातानेव
भ्रातृंव्यान्प्र णुंदत उपरिंष्टाल्लक्ष्मा ( ३ )
याज्यां जनिष्यमाणानेव प्रतिं नुदते पुरस्ता-
ल्लक्ष्मा पुरोनुवाक्यां भवत्यस्मिन्नेव लोके
ज्योतिर्धत्त उपरिंष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव
लोके ज्योतिर्धत्ते ज्योतिंष्मन्तावस्मा इमौ
लोकौ भंवतो य एवं वेदं पुरस्ताल्लक्ष्मा पुरोनु-
वाक्यां भवति तस्मात्पूर्वार्धेनानड्वान्भुनक्त्यु-
परिंष्टाल्लक्ष्मा याज्यां तस्माज्जघनार्धेनं धेनुर्य
एवं वेदं भुङ्क्त एनमेतौ वज्र आज्यं वज्र
आज्यभागौ ( ४ ) वज्रो वषट्कारस्त्रिवृतंमेव

वज्रं संभृत्य भ्रातृव्याय प्र हरत्यछम्बट्कारमपगूर्य वषट्करोति स्तृत्यै गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद प्रैवैनं पुरोनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेणैवैनं पुरोनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति (५) वषट्कारेण स्थापयति त्रिपदा पुरोनुवाक्या भवति त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात्प्रति तिष्ठति गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्करी यद्वा एतया देवा अशिक्षन्तदशकन्नुवन्य एवं वेद शक्नोत्येव यच्छिक्षति (६) ॥

( देवतानां करोत्युपरिष्टाल्लक्ष्माऽऽज्यभागौ प्रति शक्नोत्येव द्वे च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः । )

---

चक्षुषी इति । वै । एते इति । यज्ञस्य । यत्

आज्यंभागावित्याज्यं—भागौ । यत् । आज्यंभागा-
वित्याज्यं—भागौ । यजंति । चक्षुंषी इतिं । एव ।
तत् । यज्ञस्यं । प्रतीतिं । दधाति । पूर्वार्धे इतिं
पूर्व—अर्धे । जुहोति । तस्मांत् । पूर्वार्धे इतिं पूर्व—
अर्धे । चक्षुंषी इतिं । प्रबाहुगितिं प्र—बाहुंक् । जु-
होति । तस्मांत् । प्रबाहुगितिं प्र—बाहुंक् । चक्षुंषी
इतिं । देवलोकमितिं देव—लोकम् । वै । अग्निनां ।
यजंमानः । अन्वितिं । पश्यति । पितृलोकमितिं
पितृ—लोकम् । सोमेंन । उत्तरार्धे इत्युंत्तर—अर्धे ।
अग्नयें । जुहोति । दक्षिणार्धे इतिं दक्षिण—अर्धे ।
सोमांय । एवम् । इव । हि । इमौ । लोकौ । अन-
योंः । लोकयोंः । अनुंख्यात्या इत्यनुं—ख्यात्यै ।
राजांनौ । वै । एतौ । देवतांनाम् (१) । यत् । अग्नीषो-
मावित्यग्नी—सोमौं । अन्तरा । देवतांः । इज्येते
इतिं । देवतांनाम् । विधृंत्या इति वि—धृत्यै ।
तस्मांत् । राज्ञां । मनुष्यांः । विधृंता इति वि—
धृताः । ब्रह्मवादिन इतिं ब्रह्म—वादिनंः । वदन्ति ।
किम् । तत् । यज्ञे । यजंमानः । कुरुते । येनं । अ-
न्यतोंदत इत्यन्यतंः—दतः । च । पशून् । दाधारं ।
उभयतोंदत इत्युंभयतंः—दतः । च । इतिं । ऋचंम् ।

अनूच्येत्यनु—उच्य । आज्यभागस्येत्याज्य—भागस्य । जुषाणेन । यजति । तेन । अन्यतोदत इत्यन्यतः—दतः । दाधार । ऋचम् । अनूच्येत्य-नु—उच्य । हविषः । ऋचा । यजति । तेन । उभ-यतोदत इत्युभयतः—दतः । दाधार । मूर्धन्वतीति मूर्धन्—वती । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । मूर्धानम् । एव । एनम् । समानानाम् । करोति ( २ ) । नियुत्वत्येति नि—युत्वत्या । यज-ति । भ्रातृव्यस्य । एव । पशून् । नीति । युवते । केशिनम् । ह । दार्भ्यम् । केशी । सात्यकामिरिति सात्य—कामिः । उवाच । सप्तपदामिति सप्त—प-दाम् । ते । शक्करीम् । श्वः । यज्ञे । प्रयोक्तास इति प्र—योक्तासे । यस्यै । वीर्येण । प्रेति । जातान् । भ्रातृव्यान् । नुदते । प्रतीति । जनिष्यमाणान् । यस्यै । वीर्येण । उभयोः । लोकयोः । ज्योतिः । धत्ते । यस्यै । वीर्येण । पूर्वार्धेनेति पूर्व—अर्धेन । अनड्वान् । भुनक्ति । जघनार्धेनेति जघन—अर्धेन । धेनुः । इति । पुरस्ताल्लक्ष्मेति पुरस्तात्—लक्ष्मा । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । जातान् । एव । भ्रातृव्यान् ।

प्रेति । नुदते । उपरिष्टाल्लक्ष्मेत्युपरिष्टात्—लक्ष्मा ( ३ ) । याज्या । जनिष्यमाणान् । एव । प्रतीति । नुदते । पुरस्ताल्लक्ष्मेति पुरस्तात्—लक्ष्मा । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । अस्मिन् । एव । लोके । ज्योतिः । धत्ते । उपरिष्टाल्लक्ष्मेत्युपरिष्टात्—लक्ष्मा । याज्या । अमुष्मिन् । एव । लोके । ज्योतिः । धत्ते । ज्योतिष्मन्तौ । अस्मै । इमौ । लोकौ । भवतः । यः । एवम् । वेद । पुरस्ताल्लक्ष्मेति पुरस्तात्—लक्ष्मा । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । तस्मात् । पूर्वार्धेनेति पूर्व—अर्धेन । अनड्वान् । भुनक्ति । उपरिष्टाल्लक्ष्मेत्युपरिष्टात्—लक्ष्मा । याज्या । तस्मात् । जघनार्धेनेति जघन—अर्धेन । धेनुः । यः । एवम् । वेद । भुङ्क्तः । एनम् । एतौ । वज्रः । आज्यम् । वज्रः । आज्यभागावित्याज्य—भागौ ( ४ ) । वज्रः । वषट्कार इति वषट्—कारः । त्रिवृतमिति त्रि—वृतम् । एव । वज्रम् । संभृत्येति सं—भृत्य । भ्रातृव्याय । प्रेति । हरति । अछम्बट्कारमित्यछम्बट्—कारम् । अपगूर्येत्यप—गूर्य । वषट् । करोति । स्तृत्यै । गायत्री । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति ।

त्रिष्टुक् । याज्या । ब्रह्मन् । एव । क्षत्रम् । अन्वारम्भयतीत्यनु—आरम्भयति । तस्मात् । ब्राह्मणः । मुख्यः । मुख्यः । भवति । यः । एवम् । वेद । प्रेति । एव । एनम् । पुरोनुवाक्ययेति पुरः—अनुवाक्यया । आह । प्रेति । नयति । याज्यया । गमयति । वषट्कारेणेति वषट्—कारेण । एति । एव । एनम् । पुरोनुवाक्ययेति पुरः—अनुवाक्यया । दत्ते । प्रेति । यच्छति । याज्यया । प्रतीति (५) । वषट्कारेणेति वषट्—कारेण । स्थापयति । त्रिपदेति त्रि—पदा । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । त्रयः । इमे । लोकाः । एषु । एव । लोकेषु । प्रतीति । तिष्ठति । चतुष्पदेति चतुः—पदा । याज्या । चतुष्पद इति चतुः—पदः । एव । पशून् । अवेति । रुन्धे । द्व्यक्षर इति द्वि—अक्षरः । वषट्कार इति वषट्—कारः । द्विपादिति द्वि—पात् । यजमानः । पशुषु । एव । उपरिष्टात् । प्रतीति । तिष्ठति । गायत्री । पुरोनुवाक्येति पुरः—अनुवाक्या । भवति । त्रिष्टुक् । याज्या । एषा । वै । सप्तपदेति सप्त—पदा । शक्वरी । यत् । वै । एतया । देवाः । अशिक्षन् । तत् । अशक्नुवन् ।

यः । एवम् । वेद॑ । शक्नोति॑ । एव । यत् । शिक्ष॑ति (६) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ।)

---

आद्यानुवाके विस्पष्टं प्रयाजाः पञ्च वर्णिताः ।
अनुवाके द्वितीयेऽस्मिन्वक्तव्यावाज्यभागकौ ॥

तन्मन्त्रास्तन्मन्त्रकाण्डे समाम्नाताः ।

कल्पः—"यदा जानात्यग्नयेऽनुब्रूहीति तदाऽऽग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्यामन्वाहाग्निर्वृत्राणि जङ्घनदिति पौर्णमास्यामग्निः प्रत्नेन जन्मनेत्यमावास्यायां यदा जानात्यग्निं यजेति तज्जुषाणेन यजति जुषाणो अग्निराज्यस्य वेत्विति यदा जानाति सोमायानुब्रूहीति तत्सोमस्य पुरोनुवाक्यामन्वाह त्व९ सोमासि सत्पतिरिति पौर्णमास्यां सोम गीर्भिष्ट्वा वयमित्यमावास्यायां यदा जानाति सोमं यजेति तज्जुषाणेनैव यजति जुषाणः सोम आज्यस्य हविषो वेत्विति" इति ।

तत्र प्रथमस्याऽऽग्नेयस्य पाठस्तु—

"अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु ।" [ ब्रा० का० ३ प्र० ५ अ० ६ ] इति ।

अयमग्निरस्माननुगृह्णात्विति शेषः । कीदृशोऽग्निः । वृत्राणि कर्मानुष्ठाननिवारकाणि पापानि जङ्घनदतिशयेन हतवान् । विपन्यया विशिष्टयाऽस्मत्कृतया स्तुत्या द्रविणस्युरस्मदर्थं द्रविणेच्छुः समिद्धः सम्यग्ज्वालितः शुक्रः शोचमान आहुतः समन्तादस्माभिराकारितोऽनेनाऽऽज्येनाऽऽहुतो वा । जुषाणः प्रीयमाणोऽयमग्निराज्यस्य वेत्वस्मद्दत्तमिदमाज्यमश्नातु ॥

प्रथमस्य सौम्यस्य पाठस्तु—

"त्व९ सोमासि सत्पतिः । त्व९ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । जुषाणः सोम आज्यस्य हविषो वेतु ।" [ब्रा० का० ३ प्र० ५ अ० ६] इति ।

हे सोम त्वं सतां सद्भिरनुष्ठितानां कर्मणां पतिरसि । किं च, त्वं राजा

दीप्तिमान्। अपि च पापघाती। किं च, भद्रः फलप्रदत्वेन मङ्गलरूपः क्रतुरसि, तस्य क्रतोर्निष्पादकत्वात्। तादृशः सोम इदमाज्यं हविरश्नातु॥

द्वितीयस्याऽऽग्नेयस्य पाठस्तु—

"अग्निः प्रत्नेन जन्मना। शुम्भानस्तनुव९ स्वाम्। कविर्विप्रेण वावृधे। जुषाणो अग्निराज्यस्य वेतु।" [ ब्रा० का० ३ प्र० ५ अ० ६ ] इति।

अयमग्निः प्रत्नेन पुरातनेन स्वजन्मना स्वां तनुवं स्वतनुं शुम्भानः शोधयन्कविर्विपश्चित्पण्डितः पराभिप्रायज्ञो विप्रेणार्त्विजा कृतां स्तुतिं ज्ञात्वा वावृधे वृद्धिं प्राप्तः। जुषाण इत्यादि पूर्ववत्॥

द्वितीयस्य सौम्यस्य पाठस्तु—

"सोम गीर्भिष्ट्वा वयम्। वर्धयामो वचोविदः। सुमृडीको न आविश। जुषाणः सोम आज्यस्य हविषो वेतु।" [ब्रा० का० ३ प्र० ५ अ० ६]इति।

हे सोम वचोविदो वाक्यतात्पर्याभिज्ञा वयं गीर्भिः स्तुतिरूपाभिर्वाग्भिर्वर्धयामः। त्वं तु सुमृडीकः सम्यक्सुखयन्नोऽस्मानाविश। तादृशः सोम आज्यं हविरश्नातु॥

मन्त्रकाण्डोक्तैस्तैरेतैः साध्यावाज्यभागौ विधत्ते—

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति, इति।

यजमानब्राह्मणेऽग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मानित्युक्तत्वादाज्यभागयोर्यज्ञचक्षुष्ट्वम्॥

आहवनीयस्य पूर्वार्धभागं होमदेशत्वेन विधत्ते—

पूर्वार्धे जुहोति तस्मात्पूर्वार्धे चक्षुषी, इति।

लोकेऽपि शिरसः पूर्वभागे चक्षुषी तिष्ठतो न तु पृष्ठभागे॥

उभयोराहुत्योः पङ्क्तिरूपत्वं परिमाणवैषम्यं च वारयितुं साम्यं विधत्ते—

प्रबाहुग्जुहोति तस्मात्प्रबाहुक्चक्षुषी, इति।

प्रबाहुक्समं यथा भवति तथा जुहुयादित्यर्थः॥

एकस्यां पङ्क्तावुत्तरदक्षिणदेशं क्रमेण विधत्ते—

देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोक९ सोमेनोत्तरार्धेऽग्नये

जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै , इति ।

देवलोक उत्तरदेशस्थः, पितृलोको दक्षिणदेशस्थः । अतस्तथाविधेन होमेन तयोरनुख्यातिरभिज्ञानं भवति ॥

उभयोराज्यभागयोर्मध्यदेशं प्रधानयागस्थानत्वेन विधत्ते—

राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृताः, इति ।

इज्येते इत्यत्र बहुवचनव्यत्ययो द्रष्टव्यः। प्रधानदेवता हि तयोर्मध्य इज्यन्ते । अत एवाऽऽथर्वणिका आमनन्ति—

" यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरेणाऽऽहुतीः प्रतिपादयेत् ॥ " इति ॥

एवं च सत्युभयतोऽवस्थिताभ्यां राजभ्यां मध्येऽवस्थिताः प्रधानदेवता विशेषेण धृता भवन्ति । अथवाऽत्र देवताशब्देनावान्तरदेवता विवक्षिताः। ता अन्तरेण तासां मध्ये राजानावग्नीषोमाविज्येते । ताश्च देवताः परितोऽवस्थिताः सेवकभृत्यवदेतौ राजानौ विशेषेण धारयन्ति । अथवा राजभ्यां ताभ्यामन्या देवता जीवितप्रदानेनैव पोषिता भवन्ति । यस्मादेवं तस्माल्लोकेऽपि मनुष्याः सर्वे राज्ञा विधृता वर्तन्ते ॥

इत्थमाज्यभागौ निरूप्य तदीये याज्यानुवाक्ये उपरितनस्याऽऽग्नेयस्य प्रधानस्य हविषो याज्यानुवाक्ये च क्रमेण विधत्ते—

ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतोदतश्च पशून्दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार , इति ।

अन्यतोऽधोभाग एव दन्ता येषां ते गवादयोऽन्यतोदत(न्त)स्तान्पशून्येन यज्ञाङ्गेन यजमानो दाधार प्राप्नोति तद्यज्ञाङ्गं किं नाम यजमानः कुरुते । उभ-

१ क. घ. ङ. च. ह्यर्चिः । २ क. घ. ङ. च. 'नान्तरदे' । ३ ख. रोऽव्यभृ' ।

( आज्यभागविधिः )
यत ऊर्ध्वाधरयोर्दन्ता येषामश्वादीनां त उभयतोदत(न्त)स्तान्येन प्राप्नोति तदपि किमित्येवं ब्रह्मवादिष्वेके विज्ञाः पृष्टाः (ब्रुवन्तः)। इतरे विज्ञा उत्तरमवदन्—आज्यभागस्य होमकाले पुरोनुवाक्यारूपेण कांचिदृचं पठित्वा याज्यारूपेण जुषाण इत्यादियजुषा यागं करोति । तेनाधोभागे संपूर्णाया ऋचः पाठेनाधोभागस्थदन्तयुक्तान्पशूनाप्नोति । प्रधानस्याऽऽग्नेयस्य हविषो होमे पुरोनुवाक्यामप्यृचमेव पठित्वा याज्ययाऽप्यृचैव यजति। तेनाधऊर्ध्वभागयोर्ऋचोः संपूर्णत्वेन भागद्वयेऽपि दन्तयुक्तानश्वादीन्प्राप्नोति तत्राऽऽज्यभागविषया पुरोनुवाक्या यजुश्चेत्युभयं पूर्वमेवोक्तं व्याख्यातं च। आग्नेयविषये च याज्यानुवाक्ये वक्ष्येते। तस्मादीदृशमेवोभयत्र वक्तव्यमिति विधिः पर्यवस्यति॥

आग्नेययागस्य याज्यानुवाक्ये सामान्येन विधाय विशेषाकारेण विधत्ते—

**मूर्धन्वती पुरोनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति नियुत्वत्या यजति भ्रातृव्यस्यैव पशून्नि युवते,** इति।

मूर्धशब्दो यस्यामृच्यस्ति सा मूर्धन्वती, तया समानानां मध्ये यजमानं मूर्धानं मूर्धवदुत्कृष्टं करोति। नियुच्छब्दो यस्यामृच्यस्ति सा नियुत्वती, तया वैरिणां पशून्नितरां नि(वि)योजयति । एते याज्यानुवाक्ये मन्त्रकाण्डे समाम्नाते। तयोर्विनियोगं बौधायनो दर्शयति—" अथ हविषामग्निर्मूर्धा भुवो यज्ञस्येत्याग्नेयस्य पुरोडाशस्य " इति।

तत्र प्रथमायाः पाठस्तु—

" अग्निर्मूर्धा दिवः ककुत् । पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति। " [ ब्रा० का० ३ प्र० ५ अ० ७ ] इति।

अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुदुच्छ्रितो मूर्धा द्युलोकस्य शिरःस्थानीयः, पृथिव्याः पतिर्दाहकारित्वेन पालकोऽप्ययं, किं चापां रेतांस्युदककार्याणि स्थावरजङ्गमात्मकानि शरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति॥

द्वितीयस्याः पाठस्तु—

" भुवो यज्ञस्य रजसश्च नेता। यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षाम्। जिह्वामग्ने चकृषे हव्यवाहम्। " [ ब्रा० का ३ प्र० ५ अ० ७ ] इति।

---

१ ख. °भागयो° । २ क. घ. ङ. च. °स्मादृचमे° । ३ क. घ. ङ. च. विधिर्वि° । ४ ख. °हपाका/दिका° ।

अयमग्निर्भूलोकस्य तत्रानुष्ठेयस्य यज्ञस्य तस्मिन्यज्ञे प्रवर्तकस्य रजोगुणस्य च नेता प्रवर्तको निर्वाहकः। तादृश हेऽग्ने यत्र यस्यां दिवि सूर्यरूपो भूत्वा नियुंद्भी रथे नितरां योज्यमानाभिः शिवाभिरुत्तमाभिरश्वजातिभिः सचसे समवैषि तस्यां दिवि मूर्धानं शिरोवदुन्नतस्थितिं दधिषे धारयसि। कीदृशं मूर्धानं, सुवर्षां सुवः स्वर्गलोके स्यति सर्वदा तिष्ठतीति सुवर्षास्तं सुवर्षाम्। सोमपावत्पुंलिङ्गोऽयंशब्दः। हेऽग्ने त्वमस्मिन्यज्ञे हव्यवाहं हविषः प्रापिकां जिह्वां ज्वालां चकृषे करोषि ॥

तदिदं याज्यानुवाक्यायुगलमनेकप्रकारेण प्रशंसति—

केशिनꣳ ह दार्भ्यं केशी सात्यकामि-
रुवाच सप्तपदां ते शक्करीꣳ श्वो यज्ञे प्रयो-
क्तासे यस्यै वीर्येण प्र जातान्भ्रातृव्यान्नुदते
प्रति जनिष्यमाणान्यस्यै वीर्येणोभयोर्लो-
कयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनान-
ड्वान्भुनक्ति जघनार्धेन धेनुरिति, इति।

दर्भनाम्नः पुत्रः कश्चित्केशी, सत्यकामपुत्रोऽपरः केशी, तयोर्दार्भ्यं प्रति सात्यकामिर्ब्रूते—हे दार्भ्य श्वः प्रयोज्यमाने ते त्वदीये यज्ञे सप्तभिः पदैरुपेतां शक्करीछन्दस्कामृचं प्रयोक्ष्यसे। सा च ऋगत्यन्तवीर्यवती। "अग्निर्मूर्धा" इत्यादयस्त्रयः पादाः। "भुवो यज्ञस्य" इत्यादयश्चत्वारः पादाः। तदुभयं मिलित्वा सप्तपदा शक्करी भवति। शक्तिरस्या अस्तीति शक्करी। सा च शक्तिरेव द्रष्टव्या। यस्याः शक्कर्याः सामर्थ्येन पूर्वमुत्पन्नान्भ्रातृव्यान्प्रणुदते निराकरोति। जनिष्यमाणाश्च यथा नोत्पत्स्यन्ते तथा करोति। प्रतिनुदते प्रतिबध्नातीत्यर्थः। किं च, तदीयेन वीर्येण भूर्लोकस्वर्गलोकयोर्ज्योतिरुत्कर्षं पुरुषो धत्ते। किं च, तदीयेन वीर्येण बलीवर्दो लाङ्गलशकटवाहिना स्कन्धरूपेण पूर्वभागेन(ण) स्वामिनं पालयति। धेनुश्च क्षीरप्रदेनोधसाऽपरभागेन(ण) स्वामिनं पालयति। तथाविधेयं शक्करी ॥

याज्यानुवाक्ययोर्लक्षणं दर्शयति—

पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति जा-

१ क. घ. ङ. च. °युद्भिरश्वैर्नित°। २ क. घ. ङ. च. ऋक्त्ववार्थव°। ३ क. घ. ङ. च. °री। श°। ४ च. वैरिणः। ५ ख. °था प्र°। ६ क. घ. ङ. च. °त्कर्षतां पु°।

तानेव भ्रातृव्यान्प्र णुदत उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रति नुदते, इति।

मन्त्रप्रतिपाद्याया देवताया नामधेयं लक्ष्म, तद्यस्यामृचि पूर्वार्धे विद्यते सा पुरोनुवाक्या । तन्नाम यस्यामुत्तरार्धे विद्यते सा याज्या । तद्यथा—"अग्निर्मूर्धा" इति पूर्वार्धेऽग्निशब्दः । "जिह्वामग्ने चकृषे हव्यवाहम्" इत्युत्तरार्धेऽग्निशब्दः । पूर्वार्धगतेन लक्षणेन[1] पूर्वोत्पन्नभ्रातृव्यान्निराकरोति[2] । उत्तरार्धगतेन लक्ष्मणा जनिष्यमाणवैरिप्रतिबन्धः ॥

तदेव पूर्वोत्तरार्धगतं लक्ष्मद्वयमनूद्य पुनरपि द्वेधा प्रशंसति—

पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति तस्मात्पूर्वार्धेनानड्वान्भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ, इति ।

अस्य लोकस्य पूर्वभावित्वात्पूर्वभाविना लक्ष्मणा ज्योतिर्भवति । स्वर्गस्योपरिवर्तित्वादुपरिवर्तिना लक्ष्मणा ज्योतिः । वेदितुरपि तदेव फलम् । एवमनडुहो धेन्वाश्च पूर्वोत्तरार्धसाम्यं योज्यम् । एतस्योभयस्य वेदितारमेतौ धेन्वनडुहौ स्वस्वोपकारेण पालयतः ॥

अथ याज्यान्ते प्रयोज्यस्य वषट्कारस्य विधिमर्थवादेनोन्नयति—

वज्र आज्यं वज्र आज्यभागौ वज्रो वषट्कारस्त्रिवृतमेवं वज्रꣳ संभृत्य भ्रातृव्याय प्र हरत्यछम्बट्कारम् , इति ।

तानूनप्त्रब्राह्मणे—"घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्" इत्युक्तत्वादाज्यस्य वज्रत्वम् । "वृत्राणि जङ्घनत्" इति मन्त्राम्नानादाज्यभागयोर्वज्रत्वम् । "वषट्कारो वै गायत्रियै शिरोऽच्छिनदित्युक्तत्वाद्वषट्कारस्य

1 ख. लक्ष्मणा । 2 ख. 'तृव्यनिराकरणम् । उ० ।

वज्रत्वम् । तदेतत्त्रयमाज्यभागाख्यकर्मणि मिलित्वा त्रिगुणो वज्रः संपद्यते । तादृशेन भ्रातृव्यस्य प्रहरणे सति वषट्कारेण वैयर्थ्यं तस्य प्रहारस्य न भवति ॥

तस्य वषट्कारस्योच्चध्वनिं विधत्ते—

अपगूर्य वषट्करोति स्तृत्यै, इति ।

अपगूर्योच्चैर्ध्वनिं कृत्वेत्यर्थः । स च ध्वनिर्भ्रातृव्यस्य हिंसायै संपद्यते । अयं च वषट्कारविधिराग्नेयादियाज्यास्वपि समानो द्रष्टव्यः । वषट्कारिण्यः सर्वत्रेत्याश्वलायनवचनात् ॥

पुनरप्याग्नेयस्य याज्यानुवाक्ये छन्दोद्वारा प्रशंसति—

गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्म-
न्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यः, इति।

" अग्निर्मूर्धा " इति गायत्री । सा च ब्राह्मणेन सहोत्पन्नत्वाद्ब्रह्मस्वरूपा । " भुवो यज्ञस्य " इति त्रिष्टुप् । सा च क्षत्रेण सहोत्पन्नत्वात्क्षत्ररूपा । तथा सति गायत्रीत्रिष्टुभोः पौर्वापर्येण ब्राह्मणमनु पश्चात्क्षत्रियः प्रवर्तितवान्भवति । यस्माद्ब्राह्मणः पूर्वं प्रवृत्तस्तस्मान्मुख्यो भवति । मुखे भवतीति व्युत्पत्तेः ॥

तद्वेदनं प्रशंसति—

मुख्यो भवति य एवं वेद, इति ॥

पुनरपि पुरोनुवाक्यादित्रयं प्रदेयदेवतासमीपप्राप्तिद्वारेण प्रशंसति—

प्रैवैनं पुरोनुवाक्ययाऽऽह प्र णयति
याज्यया गमयति वषट्कारेण, इति ।

पुरोनुवाक्यापाठेन हविषो दातारमेव देवानामग्रे प्रकर्षेण कथितवान्भवति । याज्यया तं मार्गेण नयति । वषट्कारेण देवान्प्रापयति ॥

पुनरपि तस्य प्रापितस्य यजमानस्य प्रतिष्ठापनद्वारेण प्रशंसति—

ऐवैनं पुरोनुवाक्यया दत्ते प्र यच्छति
याज्यया प्रति वषट्कारेण स्थापयति, इति ।

एनं यजमानं त्रिभिर्मन्त्रैः क्रमाद्धस्तेन गृहीत्वा देवेभ्यः प्रदाय तत्रोपवेशयति ॥

पादसंख्यामक्षरसंख्यां च प्रशंसति—

त्रिपदा पुरोनुवाक्या भवति त्रय इमे लोका

१ क. घ. ङ. °रे वै° । २ ख. °ट्कारोऽन्त्यः स° ।

एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात्प्रति तिष्ठति, इति।

पशुषु प्राप्तेषु सत्सु पश्चादेव ब्राह्मणभोजनादौ क्षीरादिकं दातुं तत्पङ्क्तौ द्वाभ्यां पादाभ्यां स्थिरस्तिष्ठति ॥

पूर्वमुक्तं सप्तपदां ते शक्करीमिति तत्र पादोदाहरणेन प्रशंसति—

गायत्री पुरोनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्करी यद्वा एतया देवा अशिक्षन्तद्-शक्नुवन्य एवं वेद शक्नोत्येव यच्छिक्षति॥,इति॥

देवा यत्कार्यमुद्दिश्याशिक्षञ्शक्ता भवामेत्यैच्छन्। यद्वा परस्परमिदं कार्यं कर्तव्यमिति शिक्षितवन्त एतया शक्कर्या ते तत्कार्यं कर्तुं शक्ता अभवन्। एत-द्वेदिताऽपि यत्कार्यं कर्तुं शक्तिमिच्छति तत्कार्ये शक्तो भवत्येव। तदेवमाग्ने-यस्य याज्यापुरोनुवाक्ययो[3]र्विधानेन लक्षणेन प्रशंसया च प्राजापत्योपांशुया-जादीनां याज्यानुवाक्याः सर्वा मन्त्रकाण्डाम्नाता व्याख्याता द्रष्टव्याः। ताः स्वयमाम्नातक्रमेणोदाहृत्याक्षरार्थं वर्णयामः।

कल्पः—"प्रजापते स वेदेति यस्य प्राजापत्य उपांशुयाजो भवति" इति।

पाठस्तु—

"प्रजापते न त्व देतान्यन्यः। विश्वा जातानि परि ता बभूव। यत्का-मास्ते जुहुमस्तन्नो अस्तु। वयꣳ स्याम पतयो रयीणाम्। स वेद पुत्रः पितरꣳ स मातरम्। स सूनुर्भुवत्स भुवत्पुनर्मघः। स द्यामौर्णोदन्तरिक्षꣳ स सुवः। स विश्वा भुवो अभवत्स आऽभवत्।" [ब्रा० का० ३ प्र० ५ अ० ७]इति।

हे प्रजापते त्वदन्यः कोऽपि पुरुष उत्पन्नानि तान्येतानि विश्वानि न परि-बभूव परिभवितुं न समर्थोऽभूत्। [1]परिभवः सृष्टेरप्युपलक्षणम्। सृष्टिसंहारयो-रशक्त इत्यर्थः। अतस्ते तव वयं यत्कामा जुहुमस्तत्फल[3]मस्माकमस्तु। वयं धनपतयः स्याम। "द्यौः पिता। पृथिवी माता। प्रजापतिर्बन्धुः।" इति मन्त्रवर्णाद्ब्रह्माण्डमध्ये सत्यलोके वर्तमानस्य प्रजापतेरण्डस्योपरितनं कपालं द्यौः पिता। अधस्तनकपालरूपा पृथिवी माता। स पुत्रः प्रजापतिस्तं

---

१ ख. 'योर्द्विधाल'। २ क. घ. ङ. च. 'व्याः। अस्मदीयक'। ३ क. घ. ङ. च. 'मवि-कृतम'।

पितरं तां च मातरं वेत्ति। अभिज्ञः स प्रजापतिः सूनुर्भवति तयोर्मातापित्रोः पुत्रो भवति । अत एव तयोर्वेदनं तस्योपपन्नमेव । मघशब्दो धनवाची। पुनः पुनर्यजमानाय दातव्यं धनं यस्य स पुनर्मघः । तादृशोऽयं प्रजापतिर्भुवद्भवति। किं च, स प्रजापतिः सर्वव्यापि विराड्रूपं धृत्वा द्यामुपरितनकपालमौर्णोदाच्छादितवान् । तथाऽन्तरिक्षं स्वर्गं च स और्णोत् । किं च, स एव विश्वा भुव इमं लोकमारभ्याधस्तनाः पूर्वा भूमीरभवत्प्राप्तवानाच्छादितवानित्यर्थः। किं च, सत्यलोके समागत्य चतुर्मुखत्वेन रूपान्तरेण परिमितोऽभवत् ॥

कल्पः—" तथाऽग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयस्य पुरोडाशस्य " इति।

पाठस्तु—

" अग्नीषोमा सवेदसा। सहूती वनतं गिरः। सं देवत्रा बभूवथुः। युवमेतानि दिवि रोचनानि । अग्निश्च सोम सक्रतू अधत्तम् । युवꣳ सिन्धूꣳरभिशस्तेरवद्यात् । अग्नीषोमावमुञ्चतं गृभीतान्। " [ ब्रा० का० ३ प्र० ५ अ० ७ ] इति।

हेऽग्नीषोमौ गिरोऽस्मदीयाः स्तुतीर्वनतं भजतम् । कीदृशौ, सवेदसा समानज्ञानयुक्तौ, सहूती समानाह्वानयुक्तौ, देवत्रा देवेषु मध्ये संबभूवथुः। युवां संभूयैव स्थितौ न कदाचिदप्यन्योन्यवियुक्तावित्यर्थः । हे सोम त्वमग्निश्चेत्येतौ युवां सक्रतू समानसंकल्पौ सन्तौ दिव्येतानि रोचनानि नक्षत्राण्यधत्तमस्थापयतम्। हेऽग्नीषोमौ युवां गृहीतान्सिन्धून्रथ्योदकादिनिमित्तेनापूतत्वापवादेन पङ्कादिरूपेणावद्येन दोषेण च गृहीताः सर्वा नदीरभिशस्तेस्तस्मादपवादादवद्यात्पङ्कादिदुष्टदोषाच्चामुञ्चतं मोचितवन्तौ । यद्यप्येतत्सर्वमीश्वरकृतं तथाऽपि तद्रूपत्वेनैतौ स्तूयेते ॥

कल्पः—" इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्य " इति।

पाठस्तु—

" इन्द्राग्नी रोचना दिवः। परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम्। श्नथद्वृत्रमुत सनोति वाजम् । इन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेः । सहस्तमा सहसा वाजयन्ता। " [ ब्रा० का० ३ प्र० ५ अ० ७ ] इति।

---

१ क. ख. घ. ङ. 'ति ययो'। २ च. 'न न रू' । ३ ख. 'रेणाऽऽपरितो' । ४ ङ. 'ल्पः—अग्नी'।

( आज्यभागविधिः )

हे इन्द्राग्नी दिवस्परि स्वर्गस्योपरि रोचना दीप्यमानौ युवां वाजेषु यजमानसंबन्धिष्वन्नेषु निमित्तभूतेषु भूषथो दातारौ भवितुमिच्छथः। तत्तदीयं बुभूषुत्वं वां युवयोर्वीर्यं सामर्थ्यं प्रचेति चेतयति प्रकर्षेण ज्ञापयतीत्यर्थः। इन्द्रा यो अग्निरित्यत्र समस्तं पदं विच्छिद्य मध्ये य इति पदमाम्नातम्। तथा च हे इन्द्राग्नी इति संबोधनम्। यो यजमानो वृत्रं विरोधिनं पाप्मानं श्नथभिराकरोति, उत वाजं हविर्लक्षणमन्नं सनोति ददाति, [ अपि च ] सह्नुरी कौटिल्येन सह विद्यमानौ, ह्नुरिः कौटिल्यं, यजमानस्य श्रद्धाराहित्यादिच्छिद्रान्वेषणेन कुटिलावपि युवां सपर्या[1]दप्रमत्तो यो यजमानः परिचरति, तादृशं यजमानं युवामेवानुगृह्णीतमिति शेषः। कीदृशौ युवाम्, इरज्यन्ता, अनुग्रहेण भक्तचित्तं रञ्जयन्तौ, भूरेर्बहुलस्य वसव्यस्य धनसमूहस्य, दाताराविति शेषः। सहस्तमा, अतिशयेन सहिष्णू। सहसा बलवन्तौ। वाजयन्ता वाजं हविर्लक्षणमन्नं यन्तौ प्राप्नुवन्तौ ॥

कल्पः—" एन्द्र सानसिꣳ रयिं प्रससाहिषे पुरुहूत शत्रूनित्यैन्द्रस्य यद्यैन्द्रं सांनाय्यम् " इति।

पाठस्तु—

"एन्द्र सानसिꣳ रयिम्। सजित्वानꣳ सदासहम्। वर्षिष्ठमूतये भर। प्र ससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राऽऽभर दक्षिणेना वसूनि। पतिः सिन्धूनामसि रेवतीनाम्।"[ब्रा० का० ३ प्र०५अ०७] इति।

हे इन्द्र रयिं धनमूतयेऽस्मद्रक्षणार्थम्। भराऽऽहराऽऽनय। कीदृशं धनं, सानसिं सनसो दानस्य संबन्धिनं बहुभ्यो दातुं पर्याप्तमित्यर्थः। सजित्वानं जित्वभिर्जयशीलैः पुत्रादिभिरुपेतम्। सदासहं सर्वदा विरोधिनां सोढारं तिरस्कार[2]क्षममित्यर्थः। वर्षिष्ठमतिशयेन प्रवृद्धम्। हे पुरुहूत पुरुषु बहुषु यज्ञेष्वाहूयमान शत्रून्प्रकर्षेण ससाहिषे सर्वदा सहसे तिरस्कुरुष इत्यर्थः। ते शुष्मो ज्येष्ठस्तव बलं प्रशस्तमित्यर्थः। इहास्मिन्कर्मणि रातिरस्तु फलदानमस्तु। हे इन्द्र दक्षिणेन हस्तेन वसूनि धनान्याभर समानय। सिन्धूनां धनवाहिनीनां समुद्रसमानानां रेवतीनां प्रजानां पतिरसि ॥

कल्पः—" यद्यु वै माहेन्द्रं महाꣳ इन्द्रो य ओजसा महाꣳ इन्द्रो नृवदा चर्षणिप्रा इति माहेन्द्रस्य " इति।

पाठस्तु—

" महाꣳ इन्द्रो य ओजसा। पर्जन्यो वृष्टिमाꣳ इव। स्तोमैर्वत्सस्य वावृधे।

१ क. घ. ङ. च. °र्यात्। अपि च, अप्र°। २ घ. ङ. च. रक्षय°।

महा१ँ इन्द्रो नृवदा चर्षणिप्राः । उत द्विबर्हा अमिनः सहोभिः । अस्मद्रिय-ग्वावृधे वीर्याय । उरुः पृथुः सुकृतः कर्तृभिर्भूत् । " [ ब्रा० का० ३ प्र० ९ अ० ७ ] इति ।

वृष्टिमान्पर्जन्य इव य इन्द्र ओजसा बलेन महान्स इन्द्रो वत्सस्थानीयस्य यजमानस्य स्तोमैः स्तोत्रैर्वावृधे वर्धताम् । अयं महानिन्द्रो नृवन्मनुष्यवदा चर्षणिप्राः, चर्षणीन्मनुष्यान्प्रति तदभीष्टदानैर्भोगैः पूरयतीति चर्षणिप्राः । यथा राजामात्यादिमनुष्यः सेवकानभीष्टभोगैरापूरयति तद्वत् । अपिचायं द्वयोः प्रकृतिविकृतिरूपयोर्यागयोर्बर्हो वृद्धिर्यस्येति द्विबर्हाः । अमिन उपमार-हितः सहोभिर्युक्तो बलवानस्मद्रियगस्मत्सदृशो वावृधे वृद्धिं प्राप्तः । यथा वय-मस्यानुग्रहाद्वृद्धिं प्राप्तास्तथाऽयमप्यस्मदीयैर्हविर्भिर्विवृद्धः । एतदेव प्रपञ्च्यते वीर्याय सामर्थ्यसिद्धये । कर्तृभिर्यजमानैरयं सुकृतोऽभूत्सुष्ठु वर्धितोऽभूत् । कीदृशी तस्याभिवृद्धिः, उरुर्यशसा विपुलः । पृथुर्बलेन विस्तीर्णः ॥

कल्पः—" अथ स्विष्टकृतः पिप्रीहि देवानिति पुरोनुवाक्यामनूच्य ये यजामहेऽग्निँ स्विष्टकृतमयाडग्निरग्नेरित्युक्त्वा यथादैवतं निगदमुक्त्वा जातवेदा जुषता१ँ हविरग्ने यदद्य विशो अध्वरस्येत्यृचमनूच्य यजति " इति ।

तत्र पुरोनुवाक्यायाः पाठस्तु—

" पिप्रीहि देवा१ँ उशतो यविष्ठ । विद्वा१ँ ऋतू१ँ ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने । त्व१ँ होतॄणामस्याऽऽयजिष्ठः । " [ ब्रा० का० ३ प्र० ९ अ० ७ ] इति ।

हेऽग्ने यविष्ठ युवतमोशतः कामयमानान्देवान्पिप्रीहि अतिशयेन प्रीणय । हे ऋतुपते सूर्यात्मना कालपरिपालकाग्ने त्वमृतून्यागकालविशेषान्विद्वाञ्ज्ञान-न्वर्तसे । तस्मादिहोचिते काले यज । देवेषु भवा ये दैव्या ऋत्विजः सन्ति " अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । " इत्यादिनाऽऽम्नातास्तेभिस्तै-र्दैव्यैः सह त्वमस्य यजमानस्य संबन्धिनां होतॄणामृत्विजां मध्य आयजिष्ठः सर्वतो यष्टृतमोऽसि ॥

निगदपाठस्तु—

" अग्नि१ँ स्विष्टकृतम् । अयाडग्निरग्नेः प्रिया धामानि । अयाट्सोमस्य प्रिया धामानि । अयाडग्नेः प्रिया धामानि । अयाट्प्रजापतेः प्रिया धामानि । अयाडग्नीषोमयोः प्रिया धामानि । अयाडिन्द्राग्नियोः प्रिया धामानि । अया-डिन्द्रस्य प्रिया धामानि । अयाण्महेन्द्रस्य प्रिया धामानि । अयाड्देवानामा-

१ ख. °भीष्टैर्भो° । २ ख. °रिति य° ।

ज्यपानां प्रिया धामानि। यक्षदग्नेर्होतुः प्रिया धामानि। यक्षत्स्वं महिमानम्। आयजतामेज्या इषः। कृणोतु सो अध्वरा जातवेदाः। जुषताꣳ हविः।" [ब्रा० का० ३ प्र० ५ अ० ७] इति।

स्विष्टकृतमग्निं ये यजामह इति शेषः पूरणीयः। ये वयं होतारः स्मस्ते वयं स्विष्टकृतमग्निं यजामहे। प्रथमाज्यभागदेवस्याग्नेर्यानि प्रियस्थानानि तेषु सर्वेषु दैव्यहोतृरूपोऽग्निरयाडिष्टवान्। एवमयाट्सोमस्येत्यादिषु योज्यम्। देवानामानुपूर्वी चाऽऽवाहननिगदवद्व्याख्येया। होतुरग्नेर्होमस्य स्विष्टकृत्त्वसंपादकस्याग्नेः प्रियधामानि यानि सन्ति तेषु दैव्यो होता यक्षद्यजतु। उक्तानां सर्वेषां देवानां स्वकीयो महिमा योऽस्ति तमुद्दिश्य दैव्यो होता यक्षद्यजतु। आयजतामाभिमुख्येन यागं कुर्वतां यजमानानामेज्या आभिमुख्येन यष्टव्या इषोऽभीष्टा या देवताः सन्ति ताः सर्वा अध्वराऽस्मिन्यज्ञे स जातवेदाः स्विष्टकृत्सोऽग्निः कृणोतु स्विष्टाः करोतु। तदर्थमयं स्विष्टकृदग्निरिदं हविर्जुषताम्।

याज्यायाः पाठस्तु—

"अग्ने यदद्य विशो अध्वरस्य होतः। पावक शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूः। हव्या वह यविष्ठ या ते अद्य। [ब्रा० का० ३ प्र० ५ अ० ७ इति।

हे स्विष्टकृदग्ने विशः प्रविष्टस्यानुष्ठितस्याध्वरस्य संबन्धि यद्धविरस्ति तदद्य वेरशान भक्षय। होतर्होमकर्तः पावक शोधक शोचे दीप्यमान। तान्येतान्यग्निविशेषणानि। हि यस्मात्त्वं यज्वा यागस्य कर्ता तस्माद्दतर्तेऽस्मदीये यज्ञे महिना महिम्ना देवान्यजासि प्रीणयसि। यद्यस्मात्कारणाद्विभूर्विशिष्टो भवसि तस्मात्कारणाद्धे यविष्ठ युवतमाद्य ते तव या हव्या यानि हव्यान्यस्माभिर्दीयन्ते तानि सर्वाणि वह स्वी कुरु। तावतोदाहृताः सर्वा याज्यानुवाक्या आग्नेययाज्यानुवाक्यादिकथनादेवावगन्तव्या इति मत्वा ब्राह्मणेन न पृथग्व्याख्याताः।

अत्र मीमांसा।

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

"आज्यभागो य आग्नेयः किं मुख्याग्नेः स संस्कृतिः।
आराद्वुतोपकारी स्यात्पूर्वन्यायेन संस्कृतिः॥

१ ख. °द्य वेः, वेरित्यशनार्थः, अशा°। २ ख. च. °स्मात्कारणात्त्वं।

निगदेऽग्नेर्द्विरुक्तत्वाद्विधावेकपदोक्तितः ।
उपकारी ततः सोऽग्निः सौर्यादौ न निवर्तते ॥ ”

दर्शपूर्णमासयोः श्रूयते—“ आज्यभागावग्नीषोमाभ्यां यजति ” इति । तयोः प्रथम आग्नेयो द्वितीयः सौम्यः । तत्र सौम्यस्य नास्ति संदेहः । प्रधानदेवतासु केवलस्य सोमस्याभावात् । अग्निस्तु केवल आग्नेयपुरोडाशे विद्यते । तस्मादाग्नेय आज्यभागः पुरोडाशदेवताया अग्नेः किं संस्कार उतेष्टेरारादुपकारक इति संदिह्यते । तत्र यथोत्तमप्रयाजो मन्त्रोक्तानां यक्ष्यमाणदेवतानां संस्कारस्तथा प्रथमाज्यभागोऽप्यग्निमग्न आवहेतिनिगदोक्तस्य प्रधानयागदेवतारूपस्याग्नेः संस्कार इति पूर्वः पक्षः । अत्रोच्यते—निगदस्तावदेवं पठ्यते—“ अग्निमग्न आवह । सोममावह । अग्निमावह । ” इति । अस्यायमर्थः—हेऽग्न आहुत्यधिकरणीभूत हविर्ग्राहिण आज्यभागद्वयाष्टाकपालपुरोडाशदेवतारूपानग्निः सोमोऽग्निरित्येतांस्त्रीनिहेष्टावावहेति । तत्र पुरोडाशदेवतारूपादग्नेः प्रथमाज्यभागदेवतारूपोऽग्निर्भिन्न इत्यवगम्यते । अन्यथाऽऽवाह्यस्याग्नेरेकत्वे द्विरुक्तिवैयर्थ्यात् । अतः प्रथमाज्यभाग इज्यमानस्याग्नेः पुरोडाशदेवतात्वाभावात्तत्संस्कारत्वमयुक्तम् । किं चाऽऽज्यभागविधावग्नीषोमाभ्यामाज्यभागौ यजतीति देवताद्वयं समस्तेनैकेन पदेनोच्यते । तत्र यथा सोमस्य यागं प्रति गुणत्वं भवताऽभ्युपगतं तथाऽग्नेरप्यभ्युपगन्तव्यम् । तत्तु संस्कारपक्षे विरुद्धं संस्कारत्वे प्राधान्यावश्यंभावात् । तस्मात्संस्कारपक्षासंभवात्प्रथमाज्यभागो द्वितीयाज्यभागवदिष्टेरारादुपकारकः । एवं च सति सौर्ययागेऽपि प्रथमाज्यभागेऽग्निर्न निवर्तत इति बाधापवादो विचारफलं भविष्यति ।

तत्रैव चतुर्थपादे चिन्तितम्—

“ अन्वाहेत्यर्थकर्म स्यात्संस्कारो वाऽर्थकर्मता ।
शस्त्रवत्कार्यताज्ञानाद्दृष्टार्थत्वेन संस्कृतिः ॥ ”

“ तिष्ठन्याज्यामन्वाहाऽऽसीनः पुरोनुवाक्याम् ” इति दर्शपूर्णमासयोराम्नातम् । तदेतच्छस्त्रादिवदर्थकर्म स्यात् । यथा स्तौति शंसतीत्यत्र कर्तव्यताप्रतीतेः स्तोत्रशस्त्रयोरर्थकर्मत्वं तथाऽनुवचनस्यापि । मैवम् । चोदितदेवतास्मरणसंस्कारस्य दृष्टप्रयोजनत्वात् । तस्मिन्सत्यदृष्टस्य कल्पयितुमशक्यत्वात् । ननु मन्त्रसामर्थ्यादेव देवतास्मरणसिद्धेरन्वाहेति तद्विधानं व्यर्थम् । एवं तर्हि प्रागनुवचनमनूद्य तिष्ठन्नासीन इति स्थानासनगुणौ विधीयेयाताम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( प्रधानभूताग्नेयपुरोडाशाभिधानम् )

( अथ द्वितीयाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः । )

---

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान्व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्यमिति प्राजापत्यम् ( १ ) इति ब्रूयादयातयामा हि देवानां प्रजापतिरिति छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन्पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्त्यङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन्तदृषयो यज्ञवास्त्वभ्यवायन्ते ( २ ) अपश्यन्पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदा-

ग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै तमब्रुवन्कथाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाऽक्षोऽनुपाक्तः ( ३ ) अवाछैत्येवमवाऽऽरमित्युपरिष्टादभ्यज्याधस्तादुपानक्ति सुवर्गस्य लोकस्य समष्ट्यै सर्वाणि कपालान्यभि प्रथयति तावतः पुरोडाशानमुष्मिँल्लोकेऽभि जयति यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतंकृत्यः सदेवत्वाय भस्मनाऽभि वासयति तस्मान्मांसेनास्थि छन्नं वेदेनाभि वासयति तस्मात् ( ४ ) केशैः शिरश्छन्नं प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतं हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्र मीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्र मीयेत संख्यायोद्वासयति यजमानस्य ( ५ ) गोपीथाय यदि नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपा-

(प्रधानभूताग्नेयपुरोडाशाभिधानम्)

त्वमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्यं एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनंद्विन्दति प्रतिष्ठित्यै (६) ॥

(प्राजापत्यं तेऽक्षोऽनुंपाक्तो वेदेनाभि वांसयति तस्माद्यजं-मानस्य द्वात्रिꣳशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ द्वितीयाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ।)

---

प्रजापंतिरितिं प्रजा—पतिः । देवेभ्यः । यज्ञान् । व्यादिंशदितिं वि—आदिंशत् । सः । आत्मन् । आज्यंम् । अधत्त । तम् । देवाः । अब्रुवन् । एषः । वाव । यज्ञः । यत् । आज्यंम् । अपीतिं । एव । नः । अत्रं । अस्तु । इतिं । सः । अब्रवीत् । यजांन् । वः । आज्यंभागावित्याज्यं—भागौ । उपेतिं । स्तृणान् । अभीतिं । घारयान् । इतिं । तस्मांत् । यजंन्ति । आज्यंभागावित्याज्यं—भागौ । उपेतिं । स्तृणन्ति । अभीतिं । घारयन्ति । ब्रह्मवादिन इतिं ब्रह्म—वादिनंः । वदन्ति । कस्मांत् । सत्यात् । यातयामानीतिं यात—यामानि । अन्यानिं । हवीꣳषिं ।

अयातयाममित्ययात—यामम् । आज्यम् । इति । प्राजापत्यमिति प्राजा—पत्यम् ( १ ) । इति । ब्रूयात् । अयातयामेत्ययात—यामा । हि । देवानाम् । प्रजापतिरिति प्रजा—पतिः । इति । छन्दांꣳसि । देवेभ्यः । अपेति । अक्रामन् । न । वः । अभागानि । हव्यम् । वक्ष्यामः । इति । तेभ्यः । एतत् । चतुरवत्तमिति चतुः—अवत्तम् । अधारयन् । पुरोनुवाक्याया इति पुरः—अनुवाक्यायै । याज्यायै । देवतायै । वषट्कारायेति वषट्—काराय । यत् । चतुरवत्तमिति चतुः—अवत्तम् । जुहोति । छन्दांꣳसि । एव । तत् । प्रीणाति । तानि । अस्य । प्रीतानि । देवेभ्यः । हव्यम् । वहन्ति । अङ्गिरसः । वै । इतः । उत्तमा इत्युत्—तमाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । तत् । ऋषयः । यज्ञवास्त्विति यज्ञ—वास्तु । अभ्यवायन्नित्यभि—अवायन् । ते ( २ ) । अपश्यन् । पुरोडाशम् । कूर्मम् । भूतम् । सर्पन्तम् । तम् । अब्रुवन् । इन्द्राय । ध्रियस्व । बृहस्पतये । ध्रियस्व । विश्वेभ्यः । देवेभ्यः । ध्रियस्व । इति । सः । न । अध्रियत । तम् । अब्रुवन् । अग्नये । ध्रियस्व । इति । सः । अग्नये । अध्रियत । यत् ।

आग्नेयः। अष्टाकपाल इत्यष्टा—कपालः। अमावास्यायामित्यमा—वास्यायाम्। च। पौर्णमास्यामिति पौर्ण—मास्याम्। च। अच्युतः। भवति। सुवर्गस्येति सुवः—गस्य। लोकस्य। अभिजित्या इत्यभि—जित्यै। तम्। अब्रुवन्। कथा। अहास्थाः। इति। अनुपाक्त इत्यनुप—अक्तः। अभूवम्। इति। अब्रवीत्। यथा। अक्षः। अनुपाक्त इत्यनुप—अक्तः ( ३ )। अवार्छतीत्यव—ऋच्छति। एवम्। अवेति। आरम्। इति। उपरिष्टात्। अभ्यज्येत्यभि—अज्य। अधस्तात्। उपेति। अनक्ति। सुवर्गस्येति सुवः—गस्य। लोकस्य। समष्ट्या इति सम्—अष्ट्यै। सर्वाणि। कपालानि। अभीति। प्रथयति। तावतः। पुरोडाशान्। अमुष्मिन्। लोके। अभीति। जयति। यः। विदग्ध इति वि—दग्धः। सः। नैर्ऋत इति नैः—ऋतः। यः। अशृतः। सः। रौद्रः। यः। शृतः। सः। सदेव इति स—देवः। तस्मात्। अविदहतेत्यवि—दहता। शृतंकृत्य इतिशृतं—कृत्यः। सदेवत्वायेति सदेव—त्वाय। भस्मना। अभीति। वासयति। तस्मात्। मांसेन। अस्थि। छन्नम्। वेदेन। अभीति।

वासयति । तस्मात् ( ४ ) । केशैः । शिरः । छन्नम् । प्रच्युतमिति प्र—च्युतम् । वै । एतत् । अस्मात् । लोकात् । अगतम् । देवलोकमिति देव—लोकम् । यत् । शृतम् । हविः । अनभिघारितमित्यनभि—घारितम् । अभिघार्येत्यभि—घार्य । उदिति । वासयति । देवत्रेति देव—त्रा । एव । एनत् । गमयति । यदि । एकम् । कपालम् । नश्येत् । एकः । मासः । संवत्सरस्येति सं—वत्सरस्य । अनवेत इत्यनव—इतः । स्यात् । अथ । यजमानः । प्रेति । मीयेत । यत् । द्वे इति । नश्येताम् । द्वौ । मासौ । संवत्सरस्येति सं—वत्सरस्य । अनवेतावित्यनव—इतौ । स्याताम् । अथ । यजमानः । प्रेति । मीयेत । संख्यायेति सं—ख्याय । उदिति । वासयति । यजमानस्य ( ५ ) । गोपीथाय । यदि । नश्येत् । आश्विनम् । द्विकपालमिति द्वि—कपालम् । निरिति । वपेत् । द्यावापृथिव्यमिति द्यावा—पृथिव्यम् । एककपालमित्येक—कपालम् । अश्विनौ । वै । देवानाम् । भिषजौ । ताभ्याम् । एव । अस्मै । भेषजम् । करोति । द्यावापृथिव्य इति द्यावा—पृथिव्यः । एककपाल इत्येक—कपालः । भवति । अनयोः । वै ।

( प्रधानभूताग्नेयपुरोडाशाभिधानम् )

एतत् । नश्यति । यत् । नश्यति । अनयोः । एव । एनत् । विन्दति । प्रतिष्ठित्या इति प्रति—स्थित्यै ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः । )

---

आज्यभागौ च याज्यानुवाक्या उक्ता द्वितीयके ॥
अथ तृतीयानुवाके प्रधानभूत आग्नेयपुरोडाशोऽभिधातव्यः ।
तत्राऽऽदौ तावदुपस्तरणाभिघारणे विधत्ते—

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान्व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति, इति ।

तवेदं तवेदमिति यज्ञसाधनद्रव्याणि देवेभ्यो विभज्य दत्त्वाऽऽत्मन्याज्यद्रव्यं प्रजापतिः स्थापितवान् । तं प्रजापतिं देवा एवमब्रुवन्—आज्यमिति यत्, एष एव यज्ञो नाम सर्वेषु यज्ञियेषु द्रव्येषु घृतस्यैव सारत्वात् । तस्मादस्माकमप्यस्मिन्नाज्ये कियानपि भागोऽस्त्विति । ततः स प्रजापतिस्तान्देवानेवमब्रवीत्—हे देवा युष्मानुद्दिश्य यष्टार आज्यभागौ यजन्तु । प्रधाने च हविष्यधस्तादुपस्तरणमुपर्यभिघारणं कुर्वन्त्विति । उपस्तृणानुपस्तृणन्तु । अभिघारयानभिघारयन्त्वित्यर्थः । यस्मादेवं तस्मादाज्यभागावाज्येन यजेयुः, प्रधानहविषोऽधस्तादुपस्तृणीयुरुपरिष्टाच्चाभिघारयेयुः ॥

अथैतदुपस्तरणादिसाधनमाज्यं प्रशंसति—

ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्य-

मिति प्राजापत्यमिति ब्रूयादयातयामा
हि देवानां प्रजापतिरिति , इति।

अन्यानि पुरोडाशचर्वादीनि हवींषि द्वित्रैर्दिवसैर्यातयामानि गतसाराणि भवन्ति। आज्यं तु ससारमेव तिष्ठति न तु स्वादिमानं परित्यजति। तत्कस्मादिति ब्रह्मवादिनः परस्परं पप्रच्छुः। तत्र कश्चिद्बुद्धिमान्ब्रह्मवादी प्राजापत्यमेतदाज्यमिति ब्रूयात्। इन्द्राग्न्यादयो देवाः कल्पे कल्पे विनश्वरत्वाद्गतसारास्तेषां मध्ये प्रजापतिस्तु जगदीश्वरत्वात्पुनः पुनस्तादृशानुत्पादयन्नुपसंहरंश्च यथापूर्वमेव तिष्ठतीत्यगतसारस्तदीयत्वादाज्यमपि सर्वदा ससारमिति॥

अत्र हविष उपस्तरणाभिघारणाभ्यां सह चतुरवदानं विधत्ते—

छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन्पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति, इति।

पुरोनुवाक्यादिमन्त्रगतानि यानि गायत्र्यादिच्छन्दांसि तानि हविर्भाग्भ्यो देवेभ्यो विमुखानि सन्त्यपाक्रामन्वयं भागरहितानि भूत्वा युष्माकं हव्यानि न वक्ष्याम इति वदन्ति निर्गतानि। अत्र च्छन्दःशब्देन तदभिमानिदेवता उच्यन्ते। ततो हविर्भाजो देवास्तेभ्यश्छन्दोभ्यो देवताभूतेभ्यो भागत्वेन चतुरवत्तं दत्तवन्तः। तत्र पुरोनुवाक्यादिशब्दाभिधेयाश्छन्दोभिमानिन्यः। आहुत्याधारभूतोऽग्निर्देवताशब्देनोच्यते। यस्मादेवं तस्मादेतच्छन्दसां प्रीत्यै चतुरवत्तं जुहुयात्। तेन प्रीतानि च्छन्दांसि हविर्भाग्भ्यो देवेभ्यो हव्यं वहन्ति॥

अथाऽऽग्नेयं पुरोडाशं विधत्ते—

अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन्तदृषयो यज्ञवास्त्वभ्यवायन्तेऽपश्यन्पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये

( प्रधानभूताग्नेयपुरोडाशाभिधानम् )

ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपा-
लोऽमावास्यायां च पौर्णमास्यां चाच्युतो
भवति सुवर्गस्य लोकस्याभिजित्यै , इति ।

अङ्गिरोनामका ऋषय इतो भूलोकादुत्तमा उद्गततमास्त्वरया निर्गताः स्वर्गं प्राप्ताः । तत्र स्वर्गे त ऋषयो यज्ञवास्तु यज्ञभूमिमभिलक्ष्य समागताः । तस्यां भूमौ पुरोडाशाभिमानी देवः स्वशरीरमन्तर्धाय कूर्मशरीरी भूत्वा प्रकर्षेण पलायत । तं दृष्ट्वा त ऋषयोऽब्रुवन्—इन्द्रादीनां मध्येऽन्यतमस्मै(माय) त्वा दास्यामस्त्वं ध्रियस्व त्वमवतिष्ठस्वेति । ततः स पुरोडाशो नातिष्ठत् । अग्न्यर्थं तिष्ठेत्युक्ते स्थितवान् । अतो दिनद्वयेऽप्यष्टाकपालः पुरोडाश आग्नेयोऽच्युतः कर्तव्यः । तेन स्वर्गाभिजयो भवतीति ॥

अथ कपालेभ्य उद्वासितस्य पुरोडाशस्याभ्यञ्जनोपाञ्जनरूपमलंकरणं विधत्ते—

तमब्रुवन्कथाऽहास्था इत्यनुपाक्तोऽभूव-
मित्यब्रवीद्यथाऽक्षोऽनुपाक्तोऽवार्छत्येव-
मवाऽऽरमित्युपरिष्टादभ्यज्याधस्तादुपा-
नक्ति सुवर्गस्य लोकस्य समष्ट्यै, इति ।

तं पुरोडाशं त ऋषयोऽब्रुवन् । केन हेतुना त्वमहास्था यज्ञदेशं परित्यक्तवा-[1]नसि । ततः पुरोडाशोऽब्रवीत्—अनुपाक्तोऽभूवमञ्जनकृतालंकरणरहितोऽभूवम्, तस्मात्त्यक्तवानस्मि । यथा लोके शकटस्याक्षोऽञ्जनरहितोऽवार्छति विनश्यति एवमहमप्यञ्जनरहितोऽवारं विनष्टोऽस्मीति । तस्मात्पुरोडाशमुपरिष्टादधस्ता-च्चाऽऽज्येनालं कुर्यात् । तेन स्वर्गस्य सम्यग्व्याप्तिर्भवति ॥

अथोद्वासनात्पुरा कपालेषु स्थापितस्य हस्तेन प्रसारणं विधत्ते—

सर्वाणि कपालान्यभि प्रथयति तावतः
पुरोडाशानमुष्मिँल्लोकेऽभि जयति,इति ।

यावन्ति कपालानि स्थापितानि तावन्ति सर्वाणि यथाऽभि व्याप्नोति तथा प्रसारयेत् । तथा सति कपालसंख्यान्पुरोडाशान्निर्वृतिसाधनत्वेन स्वर्गं प्राप्नोति ॥

---

१ क. घ. ङ. च. 'त्यज्याऽऽगतवा' ।

पाके सौकर्यविशेषं विधत्ते—

यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्माद्विदहता शृतंकृत्यः सदेवत्वाय, इति।

विपरीतत्वेन दग्धो विदग्धः क्वचित्पक्कः क्वचिदपक्क इति वाऽऽमभावेन वा विपरीतत्वं, तादृशो राक्षसप्रियः। अशृतोऽपक्को रुद्रस्य प्रियः। सुष्ठु पक्को देवप्रियः। तस्माद्विपरीतदाहमकुर्वता पुरोडाशः शृतंकृत्यः सम्यक्पक्को यथा भवति तथा कर्तव्यः। तथा सति देवप्रियो भवति ॥

यदुक्तं सूत्रकारेण—"सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति" इति, तदेतद्विधत्ते—

भस्मनाऽभि वासयति तस्मान्माꣳसेनास्थि छन्नं वेदेनाभि वासयति तस्मात्केशैः शिरश्छन्नम्, इति।

पक्कस्य कठिनस्य पुरोडाशस्योपरि भस्मनाऽऽच्छादनमस्थ्न उपरि मांसच्छादनमिव भवति। आच्छादनकाले वेदगतदर्भनाडीसंस्पर्शेन[1] केशच्छन्नं शिर इव भवति। पौरोडाशिककाण्डे विद्यमानस्यापि विधेरत्रोपन्यासः प्रत्यभिज्ञानार्थः। यद्वा ब्राह्मणयोः शाखाभेदमभिप्रेत्येयमीदृशी पुनरुक्तिः परिहर्तव्या ॥

पूर्वमवदानकालेऽभिघारणं विहितमिदानीमुद्वासनकालीनमभिघारणं विधत्ते—

प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतꣳ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति, इति।

हविषो मन्त्रेण पाके सति लौकिकत्वमपेतमित्यस्माल्लोकात्प्रच्युतिः। अभिघारणाभावे शास्त्रीयत्वमसंपूर्णमिति स्वर्गाप्राप्तिः। तस्माच्छास्त्रीयत्वसंपूर्त्यर्थमाज्येनाभिघार्य पश्चादुद्वासयेत्। तथा सति देवेष्वेनद्धविः प्रापितं भवति ॥

कपालानामुद्वासनकाले गणनां विधत्ते—

यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्र

---

१ क. घ. ङ. च. °स्पर्शनं के°।

(प्रधानभूताग्नेयपुरोडाशाभिधानम्)

मीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यान- वेतौ स्यातामथ यजमानः प्र मीयेत संख्यायो- द्वासयति यजमानस्य गोपीथाय, इति।

एककपालनाशेन मास एको न्यूनो भवेत्। ततो यजमानो म्रियते। तथा द्विकपालनाशेनापि। अतो यजमानस्य रक्षणाय गणयेत्॥

अथ प्रमादादिना नाशे प्रायश्चित्तं विधत्ते—

यदि नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृ- थिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्न- श्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै॥, इति॥

स्पष्टोऽर्थः॥

अत्र मीमांसा।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा।
नामाग्निहोत्रवन्मैवं नामत्वे देवता न हि॥
मन्त्रो हि नेह प्रत्यक्षस्तद्धिताद्देवताविधिः।
देवद्रव्यविशिष्टस्य विधानादेकवाक्यता॥"

दर्शपूर्णमासयोः श्रूयते—"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्ण- मास्यां चाच्युतो भवति" इति। तत्र यथाऽग्निहोत्रशब्दोऽग्नये होत्रमत्रेत्यमु- मर्थं निमित्तीकृत्य कर्मनामधेयं तथाऽऽग्नेयशब्दोऽप्यग्निसंबन्धं निमित्तीकृत्य कर्मनाम स्यादिति चेन्मैवम्। नामत्वे देवताराहित्यप्रसङ्गात्। अग्निहोत्रे त्वग्नि- र्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीत्यनेन वचनेन विहितो मन्त्रः प्रत्यक्ष इति मान्त्रवर्णिकी देवता लभ्यते। इह तु न तादृशो मन्त्रोऽस्ति। आग्नेयश- ब्दस्तु देवतां विधातुं शक्नोति। अग्निर्देवताऽस्येत्यस्मिन्नर्थे तद्धितस्योत्पन्न- त्वात्। न च द्रव्यदेवतयोरुभयोर्गुणयोर्विधानाद्वाक्यभेद इति वाच्यम्। कर्म- णोऽप्राप्तत्वेन द्रव्यदेवतारूपगुणद्वयविशिष्टस्य कर्मणो विधानादेकवाक्यत्वोप- पत्तेः। तस्मादाग्नेयशब्देन देवतागुणो विधीयते।

---

१ ख. 'शेऽपि। २ ख. च. 'क्षविहित इ'।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" यागे हविर्यजेत्कृत्स्नं कोऽप्यंशः शिष्यतेऽथवा ।
देवार्थत्वाद्यजेत्सर्वं शिष्यते द्विरवत्ततः ॥ "

आग्नेयोऽष्टाकपाल इत्यत्र कृत्स्नोऽपि पुरोडाशोऽग्नये त्यक्तव्यः । तद्धितेन कृत्स्नस्याग्निदेवतासंबन्धावगतेस्त्यागमन्तरेण तदनुपपत्तेरिति चेन्न । द्विर्हविषोऽवद्यतीत्यवदानद्वयं श्रूयते । अवदेयं चाङ्गुष्ठपर्वमात्रम् । तथा च सूत्रकारः—" आग्नेयस्य पुरोडाशमध्यादङ्गुष्ठपर्वमात्रमवदानं तिरश्चीनमवद्यति " इति । तत्र हविषः सकाशादङ्गुष्ठपर्वमात्रद्वयं त्रोटयित्वा त्यक्तव्यम् । इतरच्छेषणीयम् । देवतासंबन्धश्चांशद्वाराऽप्युपपद्यते ।

दशमाध्यायस्याष्टमपादे चिन्तितम्—

" चतुर्द्विर्वा पुरोडाशेऽवदानं होम्यतोक्तितः ।
चतुर्मैवं सहाऽऽज्येन सिद्धस्यात्रानुवादतः ॥ "

दर्शपूर्णमासयोराम्नायते—"चतुरवत्तं जुहोति " इति । तत्र किं पुरोडाशद्रव्यगतस्यावत्तस्य चतुःसंख्या । किं वा तत्र द्विसंख्या, चतुष्ट्वं तूपस्तरणाभिघारणाभ्यामाज्यावत्ताभ्यां सह संपद्यत इति संशयः । तत्र चतुरवत्तस्य द्वितीयाविभक्त्या होमकर्मत्वमुच्यते । न चोपस्तरणा[द्य]र्थस्य होमकर्मत्वमस्ति । तस्मात्पुरोडाशावदाने चतुःसंख्येति प्राप्ते ब्रूमः—उपस्तरणाभिघारणाभ्यामवदानाभ्यां प्रसिद्धं चतुरवत्तमनूद्य होमस्य विधानाद्धविषो मध्यात्पूर्वार्धादिति द्विरवदानस्यैव प्राप्तिः । तस्माद्द्विर्हविषोऽवदानम् ॥

पञ्चमाध्यायस्य चतुर्थपादे—

" अवदानादि सांनाय्ये पूर्वमाग्नेयकेऽथवा ।
धर्मप्रवृत्तिक्रमतः सांनाय्ये पूर्वतोचिता ॥
प्रदानं पूर्वमाग्नेयेऽवदानं च तथोचितम् ।
अङ्गानां मुख्यतन्त्रत्वान्मुख्यक्रमबल(लि)त्वतः ॥ "

दर्शपूर्णमासयोः सांनाय्यधर्मा वत्सापाकरणदोहनादयः प्रथममाम्नाताः । पुरोडाशधर्मा निर्वापावघातादयः पश्चादाम्नाताः । ततश्च तेनैव पाठक्रमेण धर्मानुष्ठानं प्रवृत्तम् । ततः प्रावृत्तिकक्रमेणावदानमपि सांनाय्ये पूर्वमेव कर्तव्यमिति प्राप्ते ब्रूमः—याज्यानुवाक्यादिमन्त्रबलादाग्नेये पूर्वं प्रदानमित्युक्तम् । तत्र(च) प्रदानं फलप्रत्यासत्त्या मुख्यमवदानं तु तदङ्गम् । तथा सति मुख्यस्य क्रममनुसृत्यावदानमप्याग्नेये पूर्वं कर्तव्यम् । मुख्यक्रमो हि प्रावृत्तिकक्रमात्प्र-

१ ख. च. होमतो॰ । २ ख. ॰वदानस्य । ३ ख. ॰वदानाभ्यां ।

बलः। प्रावृत्तिके हि क्रमे सांनाय्ये पूर्वमवदानमभिघारणमासादनं च कृत्वा प्रदानमकृत्वैवाऽऽग्नेयेऽवदानादीनि कर्तव्यानि । तथा सति सांनाय्येऽनुष्ठितान्यवदानादीन्यङ्गानि मुख्यप्रदानाद्विप्रकृष्यन्ते। मुख्यक्रमाश्रयणे तु आग्नेये प्रथममवदानादिप्रदानान्तं कृत्वा पश्चात्सांनाय्ये तदनुष्ठीयते । तत्र नास्त्यङ्गाङ्गिविप्रकर्षः । नन्ववदानादिप्रदानान्त एकः पदार्थ इत्युक्तम्। तत्र कुतः क्रमविचारः। एवं तर्हि कृत्वाचिन्ताऽस्तु। अथवा स्विष्टकृदवदानादिविषयैव चिन्ताऽस्तु ॥

तत्रैव द्वितीयपादे चिन्तितम्—

"अवदानेऽनुसमयो होमान्ते वाऽवदानके ।
पदार्थत्वं विधेयत्वात्तेनानुसमयस्ततः ॥
अवद्यतिः प्रदानान्तोऽवदानस्य तदर्थतः(ता) ।
अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात् ॥"

दर्शपूर्णमासयोर्द्विर्हविषोऽवद्यतीत्येकेन विधिना विहितत्वाद्द्विसंख्याविशिष्टमवदानमेकः पदार्थः। ततस्तेनावदानमात्रेणानुसमयः कर्तव्यः । आग्नेयस्य द्विरवदानं कृत्वा तद्धोमात्प्रागेवाग्नीषोमीयस्य द्विरवदानमिति प्राप्ते ब्रूमः— अवदानं तु होमपर्यन्तमेकः पदार्थः । होमस्यावदानमन्तरेणानुपपत्तेर्होमविधिनैवाऽऽक्षिप्तं होमार्थमवदानम् । अत एव चतुरवत्तं जुहोतीत्येकेन विधिना सावदानक एको होमपदार्थो विहितः। उपस्तरणाभिघारणाभ्यां सह यच्चतुरवत्तं तस्मिन्हविर्विषयमवदानाद्वित्वं विधातुं द्विर्हविषोऽवद्यतीत्युच्यते । ततो होमान्तस्यावदानस्यैकपदार्थत्वादाग्नेयमवदाय हुत्वा पश्चादग्नीषोमीयावदानमित्यनुसमयः।

षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

"अवत्तनाशे तच्छेषात्पुरोडाशादवद्यति ।
यजेदाज्येन वाऽऽद्योऽत्र मध्यपूर्वार्धसंभवात् ॥
कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्थे न ते ततः ।
हविर्नाशादाज्यविधिः सुतरां सर्वनाशने ॥"

दर्शपूर्णमासयोः पुरोडाशावदाने श्रूयते—"मध्यादवद्यति पूर्वार्धादवद्यति" इति । तत्र यद्यवत्तं नश्येत्तदानीमवशिष्टात्पुरोडाशात्पुनरप्यवदातव्यम् । कुतः, अवदानापादानयोर्मध्यपूर्वार्धयोः शिष्टेऽपि संभवादिति चेन्मैवम् । कृत्स्नपुरोडाशगते मध्यपूर्वार्धे अपादानत्वेन श्रूयेते, न त्ववशिष्टभागगते मध्यपू-

१ क. घ. ङ. अवघातः ।

र्वार्धे । ततो मुख्यहविषो नाशादाज्यं प्रतिनिधाय यष्टव्यम् । अत एव श्रूयते—“ यस्य सर्वाणि हवीꣳषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽज्येनैता देवताः परिसंख्याय यजेत ” इति । तत्र सर्वशब्दस्य निमित्तविशेषणत्वेनाविवक्षितत्वान्नाशमात्रे सर्वत्राऽऽज्यस्य विधिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत्सꣳ श्यति भ्रातृव्याय प्रहरिष्यन्त्स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति (१) तस्मान्नाभागं निर्भजन्ति त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति तूष्णीं चतुर्थꣳ हरत्यपरिमितादेवैनं निर्भजत्युद्धन्ति यदेवास्या अमेध्यं तदप हन्त्युद्धन्ति तस्मादोषधयः परा भवन्ति मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति पितृदेवत्याऽ-

---

१ ख. 'ज्येन ता ।

( वेदिविधिः )

तिखातेयंतीं खनाति प्रजापतिना ( २ ) यज्ञ-
मुखेन संमितामा प्रतिष्ठायै खनति यजमान-
मेव प्रतिष्ठां गमयति दक्षिणतो वर्षीयसीं
करोति देवयजनस्यैव रूपमकः पुरीषवतीं
करोति प्रजा वै पशवः पुरीषं प्रजयैवैनं पशुभिः
पुरीषवन्तं करोत्युत्तरं परिग्राहं परि गृह्णात्ये-
तावती वै पृथिवी यावती वेदिस्तस्या एतावत
एव भ्रातृव्यं निर्भज्याऽऽत्मन उत्तरं परिग्राहं
परि गृह्णाति क्रूरमिव वै ( ३ ) एतत्करोति
यद्वेदिं करोति धा असि स्वधा असीति योयु-
प्यते शान्त्यै प्रोक्षणीरा सादयत्यापो वै रक्षो-
घ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति
यज्ञस्य संतत्यै यं द्विष्यात्तं ध्यायेच्छुचैवैनं-
मर्पयति ( ४ ॥

( भजति प्रजापतिनेव वै त्रयस्त्रिंशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे ।
इति । स्फ्यम् । एति । दत्ते । प्रसूत्या इति प्र—

सूत्यै । अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । इति । आह । अश्विनौ । हि । देवानाम् । अध्वर्यू इति । आस्ताम् । पूष्णः । हस्ताभ्याम् । इति । आह । यत्यै । शतभृष्टिरिति शत—भृष्टिः । असि । वानस्पत्यः । द्विषतः । वधः । इति । आह । वज्रम् । एव । तत् । समिति । श्यति । भ्रातृव्याय । प्रहरिष्यन्निति प्र—हरिष्यन् । स्तम्बयजुरिति स्तम्ब—यजुः । हरति । एतावती । वै । पृथिवी । यावती । वेदिः । तस्याः । एतावतः । एव । भ्रातृव्यम् । निरिति । भजति ( १ )। तस्मात् । न । अभागम् । निरिति । भजन्ति । त्रिः । हरति । त्रयः । इमे । लोकाः । एभ्यः । एव । एनम् । लोकेभ्यः । निरिति । भजति । तूष्णीम् । चतुर्थम् । हरति । अपरिमितादित्यपरि—मितात् । एव । एनम् । निरिति । भजति । उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । उदिति । हन्ति । तस्मात् । ओषधयः । परेति । भवन्ति । मूलम् । छिनत्ति । भ्रातृव्यस्य । एव । मूलम् । छिनत्ति । पितृदेवत्येति पितृ—देवत्या । अतिखातेत्यति—खाता । इयतीम् । खनन्ति । प्रजापतिनेति प्रजा—पतिना ( २ )। यज्ञमुखे-

नेति यज्ञ—मुखेन। संमितामिति सं—मिताम्। एति।
प्रतिष्ठाया इति प्रति—स्थायै। खनति। यजमानम्।
एव। प्रतिष्ठामिति प्रति—स्थाम्। गमयति। दक्षि-
णतः। वर्षीयसीम्। करोति। देवयजनस्येति देव—
यजनस्य। एव। रूपम्। अकः। पुरीषवतीमिति
पुरीष—वतीम्। करोति। प्रजेति प्र—जा। वै।
पशवः। पुरीषम्। प्रजयेति प्र—जया। एव। एनम्।
पशुभिरिति पशु—भिः। पुरीषवन्तमिति पुरीष—
वन्तम्। करोति। उत्तरमित्युत्—तरम्। परिग्राह-
मिति परि—ग्राहम्। परीति। गृह्णाति। एतावती।
वै। पृथिवी। यावती। वेदिः। तस्याः। एतावतः।
एव। भ्रातृव्यम्। निर्भज्येति निः—भज्य। आरभते।
उत्तरमित्युत्—तरम्। परिग्राहमिति परि—ग्राहम्।
परीति। गृह्णाति। क्रूरम्। इव। वै (३)। एतत्।
करोति। यत्। वेदिम्। करोति। धाः। असि।
स्वधेति स्व—धा। असि। इति। योयुप्यते।
शान्त्यै। प्रोक्षणीरिति प्र—उक्षणीः। एति। साद-
यति। आपः। वै। रक्षोघ्नीरिति रक्षः—घ्नीः। रक्ष-
साम्। अपहत्या इत्यप—हत्यै। स्फ्यस्य। वर्त्मन्।
सादयति। यज्ञस्य। संतत्या इति सं—तत्यै। यम्।

द्विष्यात् । तम् । ध्यायेत् । शुचा । एव । एनम् । अर्पयति (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीये प्रोक्त आग्नेयः पुरोडाशो दिनद्वये ॥

अथ चतुर्थेऽनुवाके वेदिर्विधातव्या ।

तस्याश्च वेदेः साधनभूतस्य स्फ्यस्य मन्त्रेणाऽऽदानं विधत्ते—

देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै, इति ।

*आध्वर्यवशेषेण पठितम् [ सं० का० १ प्र० ३ अ० १ ] ।

यदुक्तं सूत्रकारेण—" शतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात्प्रत्यञ्चमुत्करे स्फ्यमुदस्यति द्वेष्यं मनसा ध्यायन् " इति, तत्रोक्तमेतं मन्त्रमुत्पाद्य तात्पर्यं दर्शयति—

शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत्सꣳश्यति भ्रातृव्याय प्रहरिष्यन्, इति ।

हे स्फ्य त्वं शतभृष्टिरसि शतसंख्याका भृष्टिः शत्रूणां संतापरूपं भर्जनं यस्य स शतभृष्टिः । वनस्पतेर्विकारो वानस्पत्यः । द्विषतो द्वेषं कुर्वतो वैरिणो वधो वधहेतुरसि । अनेन मन्त्रेण भ्रातृव्यार्थं वज्रं प्रहर्तुमिच्छन्सम्यक्तीक्ष्णीकरोति । यद्यपि स्फ्यस्यानेन मन्त्रेणोत्करे प्रक्षेपो वेदिनिर्माणादूर्ध्वभावी तथाऽप्यादानप्रसङ्गेन बुद्धिस्थत्वादिदानीमेवोक्तम् ॥

वेदिस्थानात्सतृणस्य पांसोर्मन्त्रेणान्यत्र हरणं विधत्ते—

---

* एतद्वाक्यस्थाने—" आध्वर्यवशेषे पठितो मन्त्रः । " इति वाक्यं युक्तं भवेत् ।

---

१ क. घ. ङ. च. °मेकं म° ।

स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति तस्मान्नाभागं निर्भजन्ति, इति।

यजुषा मन्त्रेण हरणीयः पांसुसहितः स्तम्बः स्तम्बयजुस्तस्य हरणं कुर्यात्। पृथिवि देवयजनीति त्रिभिराध्वर्यवोक्तैर्वेदिस्थाने स्थापितं दर्भं छित्त्वा पांसुसहितमुत्करे निनयेत्। तत्प्रकारः सर्वोऽपि पौरोडाशिककाण्ड एव स्पष्टमभिहितः। वेदिर्यावती विद्यत एतावत्येवोपयुक्ता पृथिवी। तस्याः पृथिव्या एतावतः प्रदेशादनेन स्तम्बयजुर्हरणेन भ्रातृव्यं निःसारितवानेव भवति। यस्मादत्र भ्रातृव्यो भागार्थीति कृत्वा निःसार्यते तस्माल्लोकेऽभागं भागाभिलाषरहितं (तम)विरोधित्वान्निः(न्न निः)सारयन्ति॥

उक्तस्य स्तम्बयजुर्हरणस्याऽऽवृत्तिं विधत्ते—

त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति, इति।

चतुर्थे पर्याये त्वमन्त्रकं हरणं विधत्ते—

तूष्णीं चतुर्थꣳ हरत्यपरिमितादेवैनं निर्भजति, इति।

त्रिरावृत्त्यैव लोकत्रयान्निःसारितत्वाच्चतुर्थेन हरणेन लोकत्रयबहिर्भूतात्सर्वस्मादपि देशान्निःसारितो भवति॥

वेदिस्थाने स्थितस्योपरितनमृद्भागस्यापसारणं विधत्ते—

उद्धन्ति यदेवास्या अमेध्यं तदप हन्ति, इति।

उपरिभागस्योच्छिष्टादिस्पर्शसंभवान्मेधानर्हत्वम्॥

विहितमुद्धननमनूद्य प्रशंसति—

उद्धन्ति तस्मादोषधयः परा भवन्ति, इति।

तस्मादुद्धननादन्नोत्पन्नास्तृणादयः पराकृता विनाशिता भवन्ति॥

तत्रत्यानामोषधीनां यानि मूलानि पुनःप्ररोहाय भूमौ स्थितानि तेषां छेदनं विधत्ते—

मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति, इति।

---

१ क. °त्करदेशं न°।

पुनःप्ररूढानामन्तस्तृणानां दर्भास्तरणहविःसादनविरोधित्वाद्भ्रातृव्यत्वम् । चु ( चि ) बुकमारभ्यै यजमानस्य यन्मुखपरिमाणं तद्धस्तेन प्रदर्शयित्वा (ऽर्थं) तत्परिमितं खननं विधत्ते—

पितृदेवत्याऽतिखातेयतीं खनति प्रजापतिना यज्ञमुखेन संमिताम्, इति ।

प्रादेशपरिमाणमतिक्रम्य खनने पैतृकी वेदिः स्यात् । यज्ञस्य यज्ञानुष्ठातुर्यजमानस्य मुखं यज्ञमुखं, तच्च प्रजापतिस्वरूपं यागद्वारा प्रजापालकत्वात् । तेन मुखेन संमितां कृतवान्भवति ॥

पक्षान्तरं विधत्ते—

आ प्रतिष्ठायै खनति यजमानमेव प्रतिष्ठां गमयति, इति ।

अनायासेनापनेतुं शक्याः पांसवोऽप्रतिष्ठाः । या त्वधस्ताद्दृढा भूमिः सा प्रतिष्ठा, तत्पर्यन्तं खननेन यजमानः प्रतिष्ठां प्रापितो भवति ॥

दक्षिणभागस्यौन्नत्यं विधत्ते—

दक्षिणतो वर्षीयसीं करोति देवयजनस्यैव रूपमकः, इति।

दक्षिणभागस्य निम्नत्वे पितृयजनस्य रूपं स्यात् ॥

मार्दवकारिपांसुयुक्तत्वं विधत्ते—

पुरीषवतीं करोति प्रजा वै पशवः पुरीषं प्रजयैवैनं पशुभिः पुरीषवन्तं करोति, इति ।

यस्यां भूमौ प्रजापशुसंचारबाहुल्यं तस्यां पांसुबाहुल्यात्प्रजादीनां पुरीषत्वम् । यजमानोऽपि प्रजादिभिः पुरीषवान्भवति ॥

वेदिनिर्माणात्पूर्वं वसवस्त्वेत्यादिभिर्मन्त्रैर्वेदिसीमनिर्देशः पूर्वपरिग्रहः । निर्माणादूर्ध्वमृतमसीत्यादिभिर्मन्त्रैस्तन्निर्देश उत्तरपरिग्रहस्तमिमं विधत्ते—

उत्तरं परिग्राहं परि गृह्णात्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भज्याऽऽत्मन उत्तरं परिग्राहं परि गृह्णाति, इति ।

---

१ ख. 'ढानां तृणा' । २ ख. 'हविरासादनादिवि' । ३ ख. 'भ्य केशपर्यन्तं य' ।

( वेद्यां बर्हिर्विषयप्रयोगाभिधानम् )

पूर्वपरिग्रहेणैव वेदिमर्यादायां सिद्धायामपि पुनरुत्तरपरिग्रह आत्मने स्वकीयत्वाय भवति ॥

मन्त्रकाण्डोक्तेन मन्त्रेण समीकरणं विधत्ते—

क्रूरमिव वा एतत्करोति यद्वेदिं करोति धा असि स्वधा असीति योयुप्यते शान्त्यै, इति।

खननेन निम्नोन्नतभावापादनं क्रूरं, समीकरणेन तच्छान्तिर्भवति । हे वेदे धा असि धारयित्र्यसि । तदेतद्विशेष्यते—स्वधेति । तव स्वरूपं बर्हिरादिकं धारयतीत्यर्थः ॥

यदुक्तं सूत्रकारेण—"प्रोक्षणीरभिपूर्योदश्चꣳ स्फ्यमपोह्य दक्षिणेन स्फ्यमसꣳस्पृष्टा उपनिनीय स्फ्यस्य वर्त्मन्त्सादयति" इति, तदेतद्विधत्ते—

प्रोक्षणीरा सादयत्यापो वै रक्षोघ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य संतत्यै , इति।

अर्घ्यविधिप्रस्तावे—"तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति" इति श्रुतत्वादेषां रक्षोघ्नत्वम् । स्फ्यरेखाया अविच्छिन्नत्वात्तत्र सादनं यज्ञस्याविच्छेदाय भवति ॥

सादनकाले द्वेष्यस्य पाप्मनोऽद्भिर्विनाशध्यानं विधत्ते—

यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति ॥, इति ॥

योजयतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

ब्रह्मवादिनो वदन्त्यद्भिर्हवीꣳषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयादद्भिर्ह्येव हवीꣳषि

---

१ ख. च. ॰यसीत्य॰ ।

प्रोक्षति ब्रह्मणाऽप इध्माबर्हिः प्रोक्षति मेध्य-
मेवैनत्करोति वेदिं प्रोक्षत्यृक्षा वा एषाऽलोम-
काऽमेध्या यद्वेदिर्मेध्यामेवैनां करोति दिवे
त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य
प्र ( १ ) उक्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति
क्रूरमिव वा एतत्करोति यत्खनत्यपो नि नय-
ति शान्त्यै पुरस्तात्प्रस्तरं गृह्णाति मुख्यमेवैनं
करोतीयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन
संमितं बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी
वेदिः प्रजा एव पृथिव्यां प्रति ष्ठापयत्यनति-
दृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं
करोति ( २ ) उत्तरं बर्हिषः प्रस्तरꣳ सादयति
प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवाय-
जमानादुत्तरं करोति तस्माद्यजमानोऽयजमा-
नादुत्तरोऽन्तर्दधाति व्यावृत्त्या अनक्ति हवि-
ष्कृतमेवैनꣳ सुवर्गं लोकं गमयति त्रेधाऽनक्ति
त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति
न प्रति शृणाति यत्प्रतिशृणीयादनूर्ध्वभावुकं
यजमानस्य स्यादुपरीव प्र हरति ( ३ ) उप-
रीव हि सुवर्गो लोको नि यच्छति वृष्टिमेवास्मै

( वेद्यां बर्हिर्विषयप्रयोगाभिधानम् )

नि यच्छति नात्यग्रं प्र हरेद्यदत्यग्रं प्रहरेद॰
त्यासारिण्यध्वर्योर्नाशुका स्यान्न पुरस्तात्प्रत्य॰
स्येद्यत्पुरस्तात्प्रत्यस्येत्सुवर्गाल्लोकाद्यजमानं प्र-
ति नुदेत्प्राञ्चं प्र हरति यजमानमेव सुवर्गं
लोकं गमयति न विष्वञ्चं वि युयाद्यद्विष्वञ्चं
वियुयात् ( ४ ) स्त्र्यस्य जायेतोर्ध्वमुद्यौत्यूर्ध्व-
मिव हि पुꣳसः पुमानेवास्य जायते यत्स्फ्येनं
वोपवेषेण वा योयुप्येत स्तृतिरेवास्य सा
हस्तेन योयुप्यते यजमानस्य गोपीथाय ब्रह्म-
वादिनो वदन्ति किं यज्ञस्य यजमान इति
प्रस्तर इति तस्य क्व सुवर्गो लोक इत्याहव-
नीय इति ब्रूयाद्यत्प्रस्तरमाहवनीये प्रहरति
यजमानमेव ( ५ ) सुवर्गं लोकं गमयति वि वा
एतद्यजमानो लिशते यत्प्रस्तरं योयुप्यन्ते
बर्हिरनु प्र हरति शान्त्या अनारम्भण इव
वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवाऽ-
सीतीमामभि मृशतीयं वै ध्रुवाऽस्यामेव प्रति
तिष्ठति न वेपनो भवत्यगा३नग्नीदित्याह
यद्ब्रूयादगन्नग्निरित्यग्नावग्निं गमयेन्निर्यजमानꣳ
सुवर्गाल्लोकाद्भजेदगन्नित्येव ब्रूयाद्यजमानमेव
सुवर्गं लोकं गमयति ( ६ ) ॥

( आसाद्य प्रानतिदक्षं करोति हरति वियुयाद्यजमानमेवाग्नि-
रिति सप्तदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः । )

---

ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । अद्भिरित्यत्—भिः । हवीꣳषि । प्रेति । औक्षीः । केन । अपः । इति । ब्रह्मणा । इति । ब्रूयात् । अद्भिरित्यत्—भिः । हि । एव । हवीꣳषि । प्रोक्षतीति प्र—उक्षति । ब्रह्मणा । अपः । इध्माबर्हिरितीध्मा—बर्हिः । प्रेति । उक्षति । मेध्यम् । एव । एनत् । करोति । वेदिम् । प्रेति । उक्षति । ऋक्षा । वै । एषा । अलोमका । अमेध्या । यत् । वेदिः । मेध्याम् । एव । एनाम् । करोति । दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । इति । बर्हिः । आसाद्येत्या—साद्य । प्रेति ( १ ) । उक्षति । एभ्यः । एव । एनत् । लोकेभ्यः । प्रेति । उक्षति । क्रूरम् । इव । वै । एतत् । करोति । यत् । खनति । अपः । नीति । नयति । शान्त्यै । पुरस्तात् । प्रस्तरमिति प्र—स्तरम् । गृह्णाति । मुख्यम् । एव ।

एनम् । करोति । इयन्तम् । गृह्णाति । प्रजापतिनेति प्रजा—पतिना । यज्ञमुखेनेति यज्ञ—मुखेन । संमितमिति सं—मितम् । बर्हिः । स्तृणाति । प्रजा इति प्र—जाः । वै । बर्हिः । पृथिवी । वेदिः । प्रजा इति प्र—जाः । एव । पृथिव्याम् । प्रतीति । स्थापयति । अनतिदृश्नमित्यनति—दृश्नम् । स्तृणाति । प्रजयेति प्र—जया । एव । एनम् । पशुभिरिति पशु—भिः । अनतिदृश्नमित्यनति—दृश्नम् । करोति (२)। उत्तरमित्युत्—तरम् । बर्हिषः । प्रस्तरमिति प्र—स्तरम् । सादयति । प्रजा इति प्र—जाः । वै । बर्हिः । यजमानः । प्रस्तर इति प्र—स्तरः । यजमानम् । एव । अयजमानात् । उत्तरमित्युत्—तरम् । करोति । तस्मात् । यजमानः । अयजमानात् । उत्तर इत्युत्—तरः । अन्तः । दधाति । व्यावृत्त्या इति वि—आवृत्त्यै । अनक्ति । हविष्कृतमिति हविः—कृतम् । एव । एनम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । त्रेधा । अनक्ति । त्रयः । इमे । लोकाः । एभ्यः । एव । एनम् । लोकेभ्यः । अनक्ति । न । प्रतीति । शृणाति । यत् । प्रतिशृणीयादिति प्रति—शृणीयात् । अनूर्ध्वभावुकमित्यनूर्ध्व—भावुकम् ।

यजमानस्य । स्यात् । उपरि । इव । प्रेति । हरति । ( ३ ) । उपरि । इव । हि । सुवर्ग इति सुवः—गः । लोकः । नीति । यच्छति । वृष्टिम् । एव । अस्मै । नीति । यच्छति । न । अत्यग्रमित्यति—अग्रम् । प्रेति । हरेत् । यत् । अत्यग्रमित्यति—अग्रम् । प्रहरेदिति प्र—हरेत् । अत्यासारिणीत्यति—आसारिणी । अध्वर्योः । नाशुका । स्यात् । न । पुरस्तात् । प्रतीति । अस्येत् । यत् । पुरस्तात् । प्रत्यस्येदिति प्रति—अस्येत् । सुवर्गादिति सुवः—गात् । लोकात् । यजमानम् । प्रतीति । नुदेत् । प्राञ्चम् । प्रेति । हरति । यजमानम् । एव । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । न । विष्वञ्चम् । वीति । युयात् । यत् । विष्वञ्चम् । वियुयादिति वि—युयात् । ( ४ ) । स्त्री । अस्य । जायेत । ऊर्ध्वम् । उदिति । यौति । ऊर्ध्वम् । इव । हि । पुंसः । पुमान् । एव । अस्य । जायते । यत् । स्फ्येन । वा । उपवेषेणेत्युप—वेषेण । वा । योयुप्येत । स्तृतिः । एव । अस्य । सा । हस्तेन । योयुप्यते । यजमानस्य । गोपीथाय । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । किम् । यज्ञस्य । यजमानः । इति । प्रस्तर इति

( वेद्यां बर्हिर्विषयप्रयोगाभिधानम् )

प्र—स्तरः। इति। तस्य। क्व। सुवर्ग इति सुवः—गः। लोकः। इति। आहवनीय इत्या—हवनीयः। इति। ब्रूयात्। यत्। प्रस्तरमिति प्र—स्तरम्। आ-हवनीय इत्या—हवनीये। प्रहरतीति प्र—हरति। यज-मानम्। एव (५)। सुवर्गमिति सुवः—गम्। लोकम्। गमयति। वीति। वै। एतत्। यजमानः। लिशते। यत्। प्रस्तरमिति प्र—स्तरम्। योयुप्यन्ते। बर्हिः। अनु। प्रेति। हरति। शान्त्यै। अनारम्भण इत्य-ना—रम्भणः। इव। वै। एतर्हि। अध्वर्युः। सः। ईश्वरः। वेपनः। भवितोः। ध्रुवा। असि। इति। इमाम्। अभीति। मृशति। इयम्। वै। ध्रुवा। अस्याम्। एव। प्रतीति। तिष्ठति। न। वेपनः। भवति। अगा३न्। अग्नीदित्यग्नि—इत्। इति। आह। यत्। ब्रूयात्। अगन्। अग्निः। इति। अग्नौ। अग्निम्। गमयेत्। निरिति। यजमानम्। सुवर्गादिति सुवः—गात्। लोकात्। भजेत्। अगन्। इति। एव। ब्रूयात्। यजमानम्। एव। सुवर्गमिति सुवः—गम्। लोकम्। गमयति (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

(अथ द्वितीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ।)

---

चतुर्थे वेदिनिर्माणमशेषेण प्रपञ्चितम् ॥
अथ पञ्चमे तस्यां वेद्यां बर्हिर्विषयप्रयोगोऽभिधीयते ।
तत्र बर्हिषः प्रोक्षणं विधातुं प्रस्तौति—

ब्रह्मवादिनो वदन्त्यद्भिर्हवीꣳषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयादद्भिर्ह्येव हवीꣳषि प्रोक्षति ब्रह्मणाऽपः, इति ।

हेऽध्वर्यो शुद्ध्यर्थं हवींषि त्वमद्भिः प्रौक्षीः प्रोक्षितवानसि । केनान्येन शुद्धेन द्रव्येणेमा अपः प्रोक्षितवानसीति ब्रह्मवादिभिः पृष्टेऽध्वर्युर्ब्रह्मणा मन्त्रेणेत्युत्तरं ब्रूयात् । यस्मादेतदुभयं प्रोक्षणं[1] तथैव वर्तते । अत एव मन्त्रव्याख्याने श्रूयते—“प्रोक्षिताः स्थेत्याह । तेनाऽऽपः प्रोक्षिताः” इति । तेन मन्त्रोच्चारणेनेत्यर्थः ॥

इदानीं विधत्ते—

इध्माबर्हिः प्रोक्षति मेध्यमेवैनत्करोति, इति ।

एनदिध्मा(ध्मं) बर्हिश्चेत्युभयम् ॥
इध्माबर्हिःप्रोक्षणवद्वेदेरद्भिः प्रोक्षणं विधत्ते—

वेदिं प्रोक्षत्यृक्षा वा एषाऽलोमकाऽमेध्या यद्वेदिर्मेध्यामेवैनां करोति, इति ।

लोमरहितत्वादृक्षा परुषा सती यागयोग्या न भवति । तस्माद्योग्यत्वाय प्रोक्षणम् ॥

यदुक्तं सूत्रकारेण—“अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम्” इति, तदेतद्विधत्ते—

दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति, इति ।

दिवे त्वेत्यादिमन्त्रास्तत्काण्ड एव व्याख्याताः ॥

---

१ ख. ॑णं यथोक्तं त॑ ।

( वेद्यां बर्हिर्विषयप्रयोगाभिधानम् )

यदुक्तं सूत्रकारेण—“ प्रोक्षणीशेषं स्वधा पितृभ्य इति दक्षिणायै श्रोणेरोत्तरस्याः संततं निनयेत् ” इति, तदेतद्विधत्ते—

क्रूरमिव वा एतत्करोति यत्खनत्यपो नि नयति शान्त्यै, इति ॥

प्रस्तरस्य धारणं विधत्ते—

पुरस्तात्प्रस्तरं गृह्णाति मुख्यमेवैनं करोति, इति।

वेदिपूर्वभागे ब्रह्मा यजमानो वा प्रस्तरं धारयेत्। तच्च सूत्रेऽभिहितं “ ब्रह्मा प्रस्तरं धारयति यजमानो वा ” इति ॥

धारणाय मुखसमानमौन्नत्यं हस्तेनाभिनीय विधत्ते—

इयन्तं गृह्णाति प्रजापतिना यज्ञमुखेन संमितम्, इति।

वेदिखननवद्व्याख्येयम् ॥

वेद्यां स्तरणं विधत्ते—

बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रति ष्ठापयति, इति ॥

स्तरणे नीरन्ध्रत्वं विधत्ते—

अनतिदृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोति, इति।

अतिशयेन भूमेर्दर्शनमतिदृश्नं तद्यथा न भवति तथा स्तृणीयात्। तेन यजमानं प्रजया पशुभिश्च सर्वतो वेष्टितत्वादि(द)तिस्पष्टं द्रष्टुमयोग्यं करोति ॥

स्तीर्णस्य बर्हिष उपरि प्रस्तरसादनं विधत्ते—

उत्तरं बर्हिषः प्रस्तरꣳ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः, इति।

स्तरणार्थस्य बर्हिषोऽधःस्थितत्वात्प्रजात्वम्। प्रस्तरस्य प्रधानभूतत्वाद्यजमानत्वम् ॥

अधस्तादास्तीर्णस्य बर्हिष उपरिष्टात्साद्यमानस्य प्रस्तरस्य [च] मध्ये तिर्यक्तया द्वाभ्यां दर्भाभ्यां व्यवधानं विधत्ते—

---

१ क. घ. ङ. च. निनीय' इ°।

अन्तर्दधाति व्यावृत्त्यै, इति ।

तदेतदन्तर्धानं मन्त्रकाण्डोक्तेन विशो यन्त्रे स्थ इति मन्त्रेण क्रियते ॥

प्रस्तरस्याऽऽसादनप्रसङ्गेन बुद्धिस्थान्प्रहरणकालीनान्विशेषान्विधित्सुरादौ प्रस्तरस्य घृतेनाञ्जनं विधत्ते—

अनक्ति हविष्कृतमेवैनꣳ सुवर्गं लोकं गमयति, इति ।

प्रस्तरस्य दर्भमुष्टेरनदनीयद्रव्यत्वेन स्वरूपतो हविष्ट्वाभावेऽप्यञ्जनेन हविष्टं कृतं भवतीति तादृशमेनं प्रस्तरं स्वर्गप्राप्तियोग्यं करोति ॥

यदुक्तं सूत्रकारेण—" स्रुक्षु प्रस्तरमनक्त्यक्तꣳ रिहाणा इति जुह्वामग्रं प्रजां योनिमित्युपभृति मध्यमाप्यायन्तामाप ओषधय इति ध्रुवायां मूलमेवं त्रिः " इति, तदेतद्विधत्ते—

त्रेधाऽनक्ति त्रय इमे लोका एभ्य
एवैनं लोकेभ्योऽनक्ति, इति ॥

प्रस्तरस्य प्रहरणे हेयोपादेयौ प्रकारौ विधत्ते—

न प्रति शृणाति यत्प्रतिशृणीयादनूर्ध्व-
भावुकं यजमानस्य स्यादुपरीव प्र
हरत्युपरीव हि सुवर्गो लोकः, इति ।

अङ्गारेषु क्षुण्णेषु प्रतिक्षेपः प्रतिशरणं तन्न कुर्यात् । यदि कुर्याद्यजमानस्यानूर्ध्वभावुकं स्यात्, स्वर्गप्राप्तिसाधनं न भवेदित्यर्थः । तस्माद्धस्तमुन्नतं कृत्वा प्रस्तरमग्नेरुपर्येव प्रहरेत्स्वर्गलोकस्योपर्येव वर्तमानत्वात्तत्प्राप्तिसाधनं भवति ॥

प्रस्तरयुक्तस्य हस्तस्याधोमुखत्वं विधत्ते—

नि यच्छति वृष्टिमेवास्मै नि यच्छति, इति ।

हस्तो न्यग्भूतो यथा भवति तथा कुर्यात् । तेन यजमानार्थं वृष्टिमेव न्यग्भूतां करोति ॥

प्रस्तराग्रस्याऽऽहवनीयातिक्रमं निषेधति—

नात्यग्रं प्र हरेद्यदत्यग्रं प्रहरेदत्या-
सारिण्यध्वर्योर्नाशुका स्यात्, इति ।

अतिक्रान्तमग्रं यस्य तदत्यग्रम् । तद्यथा भवति तथा न प्रहरेत् । किं तु प्रस्तराग्रमाहवनीयस्योत्तरत एव नयेत् । अत्यग्रप्रहरणे हि वृष्टिरत्यासारिणी

( वेद्यां बर्हिर्विषयप्रयोगाभिधानम् )

भवति तस्याध्वर्योर्विनाशनशीला स्यात्। अत्याधिक्येन वर्षणमतिसारिणीत्वं, तेन सस्यानि फलितुमयोग्यानि भवन्ति, सोऽयमध्वर्योर्नाशः। अथ वा व्याधिविशेषेणाध्वर्युर्नश्येत् ॥

पूर्वस्यां दिशि प्रस्तरस्य मूलं पश्चिमायामग्रमित्येवंविधं प्रहरणं निषेधति—

न पुरस्तात्प्रत्यस्येद्यत्पुरस्तात्प्रत्यस्येत्सु-
वर्गाल्लोकाद्यजमानं प्रति नुदेत्, इति ॥

पश्चिमाग्रत्वं निषिध्य प्रागग्रत्वं विधत्ते—

प्राञ्चं प्र हरति यजमानमेव सुवर्गं लोकं गमयति, इति ॥

प्रस्तरगतानां दर्भाग्राणां सर्वतो विश्लेषणं निषेधति—

न विष्वञ्चं वि युयाद्यद्विष्वञ्चं वियुयात्स्त्र्यस्य जायेत, इति।

विष्वञ्चं नानादिग्गतं यथा भवति तथा न वियुयान्न विश्लेषयेत्। तद्विश्लेषणे यजमानस्य स्त्र्यपत्यमेव जायेत। स्त्रीव्यञ्जनस्य विश्लिष्टरूपत्वात् ॥

दर्भाग्राणां समूहरूपेणैकीभावं विधत्ते—

ऊर्ध्वमुद्यौत्यूर्ध्वमिव हि पुꣳसः
पुमानेवास्य जायते, इति।

ऊर्ध्वं दण्डाकारेणैकाग्रं यथा भवति तथोद्यौति उत्कर्षेण मिश्रयेत्। पुंसां व्यञ्जनमूर्ध्वाकारं भवति, ततोऽस्य पुमानेव जायते। सोऽयमाग्नीध्रस्य व्यापारः। तथा च सूत्रकार आह—“त्रिरञ्जलिनाऽऽग्नीध्रो विष्वञ्चं प्रस्तरमूर्ध्वमुद्यौति” इति ॥

तस्मिन्नेकीकरणे साधनान्तरं निषिध्य हस्तं विधत्ते—

यत्स्फ्येन वोपवेषेण वा योयुप्येत
स्तृतिरेवास्य सा हस्तेन योयु-
प्यते यजमानस्य गोपीथाय, इति।

योयुपनं विश्लिष्टभूतस्यैकीकरणम्। अथ वा प्रस्तरस्य सम्यग्दाहायोत्क्षेपणं, तद्यदि स्फ्येनोपवेषेण वा क्रियेत सेयं यजमानस्य हिंसा। हस्तेनैव योयुपनं रक्षायै भवति ॥

प्रस्तरप्रहरणस्याऽऽधारत्वेनाऽऽहवनीयं विधत्ते—

१ ख. °रमूलस्य। २ ख. च. °म्यगविश्लिष्टं विहा°।

ब्रह्मवादिनो वदन्ति किं यज्ञस्य यजमान इति प्रस्तर इति तस्य क्व सुवर्गो लोक इत्याहवनीय इति ब्रूयाद्यत्प्रस्तरमाहवनीये प्रहरति यजमानमेव सुवर्गं लोकं गमयति, इति।

यज्ञस्य संबन्धि किमङ्गं यजमानस्थानीयमिति ब्रह्मवादिभिः पृष्टे बुद्धिमान्प्रस्तर इति ब्रूयादुत्तरम् ॥

स्रुक्षु प्रस्तरस्याञ्जनं कृत्वा तत्रैकं तृणं पृथक्कृत्य प्रज्ञातं स्थापयेत् । तस्येदानीमग्नौ प्रहरणं विधत्ते—

वि वा एतद्यजमानो लिशते यत्प्रस्तरं योयुप्यन्ते बर्हिरनु प्र हरति शान्त्यै, इति।

प्रस्तरमूलमुत्क्षिपन्तीति यदेतेन यजमानो विलिशते विशेषेणाल्पी भवति रोगेण कृशो भवतीत्यर्थः । प्रज्ञातत्वेन स्थापितस्य बर्हिषोऽनुप्रहरणे तस्याल्पीभावस्य शान्तिर्भवति। तदेतद्बर्हिष्प्रहरणं सूत्रकारेण स्पष्टीकृतम्—"आयुषे त्वेत्युक्तस्य तृणमपादाय प्रज्ञातं निधाय" इति । "अथैनमाहाऽऽग्नीध्रोऽनुप्रहरेति यत्प्रस्तरात्तृणमपात्तं तदनुप्रहरति" इति च ॥

मन्त्रकाण्डे पठितेन मन्त्रेण भूमिस्पर्शनं विधत्ते—

अनारम्भण इव वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवाऽसीतीमामभि मृशतीयं वै ध्रुवाऽस्यामेव प्रति तिष्ठति न वेपनो भवति, इति।

एतर्हि प्रस्तरप्रहरणादूर्ध्वं प्रस्तररूपस्य यजमानस्य स्वर्गेऽवस्थितत्वादध्वर्युरनारम्भण इव निरालम्बन इव भवति ।स च वेपनो भवितोरीश्वरः पालनस्वामिराहित्यभयेन सर्वदा कम्पनशीलो भवितुं समर्थो भवति, निरन्तरं भवति कम्पमान इत्यर्थः। ध्रुवाऽसीति भूमिस्पर्शनेन लब्धप्रतिष्ठो न कम्पते ॥

यदुक्तं सूत्रकारेण—"अथैनमाहाऽऽग्नीध्रः संवदस्वेत्यगानग्नीदित्यध्वर्युरगन्नित्याग्नीध्रः" इति, अनयोः प्रश्नोत्तरमन्त्रयोरुत्तरमन्त्रस्य शाखान्तरपाठनिराकरणपूर्वकं मन्त्रद्वयोच्चारणं विधत्ते—

---

१ क. घ. ङ. च. 'माग्नी'। २ क. घ. ङ. च. 'माग्नी'। ३ ख. 'न्त्रयोः शा'।

( उपांशुयाजस्विष्टकृदभिधानम् )

अगा३नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्यग्नावग्निं गमयेन्निर्यजमानꣳ सुवर्गाल्लोकाद्भजेदगन्नित्येव ब्रूयाद्यजमानमेव सुवर्गं लोकं गमयति॥, इति ॥

हेऽग्नीद्धे आग्नीध्र किं यजमानः स्वर्गं गतवान् । प्रश्नद्योतनायेयं प्लुतिः । अगन्नग्निरित्येष शाखान्तरगतो मन्त्रपाठस्तस्मिन्पाठे वह्निः स्वर्गंगत इत्यर्थो भवति, तत्त्वयुक्तम् । आहवनीयोऽत्र स्वर्गत्वेन विवक्षितः । तस्मिन्स्वर्गरूपेऽग्नौ तमग्निमेव प्रापितवान्भवति । यजमानं स्वर्गाल्लोकान्निःसारितवान्भवति । तस्मादग्निरित्येतत्पदं मन्त्रे परित्यज्यागान्नित्येतावदेव ब्रूयात् । तेन यजमानः स्वर्गं लोकं गतवानित्यर्थो लभ्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः । )

---

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत्तं देवताः प्रैषमैच्छन्तं मत्स्यः प्राब्रवीत्तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तः ( १ ) हि तमन्वविन्दन्तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिः-

---

१ क. घ. ङ. च. तदग्नि ।

परिधि स्कन्दात्तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति परिधीन्परि दधाति रक्षसामपहत्यै सꣳ स्पर्शयति ( २ ) रक्षसामनन्ववचाराय न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्त्यूर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्या वसीयान्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानाम् ( ३ ) पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान्भवति भूयसीर्हि देवताः प्रीणाति जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा . यजत्यजामित्वायाथो मिथुनत्वायाग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन्ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निम् ( ४ ) उपामन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो

यमः पितृणाꣳ राजा य एवं वेद प्र राज्यम-न्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन्य-दग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽ-वद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति सकृ-त्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्धादव द्यत्येषा वै रुद्रस्य ( ५ ) दिक्स्वायामेव दिशि रुद्रं निरवदयते द्विरभि घारयति चतुरवत्त-स्याऽऽप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत्पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशू-नपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ( ६ ) ॥

( शप्तः स्पर्शयति भूतानामग्निꣳ रुद्रस्य सप्तत्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः । )

---

अग्नेः । त्रयः । ज्यायाꣳसः । भ्रातरः । आसन् । ते । देवेभ्यः । हव्यम् । वहन्तः । प्रेति । अमी-यन्त । सः । अग्निः । अबिभेत् । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । निलायत । सः । अपः । प्रेति । अविशत् । तम् ।

देवताः । प्रैषमिति प्र—एषम् । ऐच्छन् । तम् ।
मत्स्यः । प्रेति । अब्रवीत् । तम् । अशपत् । धिया-
धियेति धिया—धिया । त्वा । वध्यासुः । यः ।
मा । प्रेति । अवोचः । इति । तस्मात् । मत्स्यम् ।
धियाधियेति धिया—धिया । घ्नन्ति । शप्तः ( १ ) ।
हि । तम् । अन्विति । अविन्दन् । तम् । अब्रुवन् ।
उपेति । नः । एति । वर्तस्व । हव्यम् । नः । वह ।
इति । सः । अब्रवीत् । वरम् । वृणै । यत् । एव ।
गृहीतस्य । अहुतस्य । बहिःपरिधीति बहिः—प-
रिधि । स्कन्दात् । तत् । मे । भ्रातॄणाम् । भागधे-
यमिति भाग—धेयम् । असत् । इति । तस्मात् ।
यत् । गृहीतस्य । अहुतस्य । बहिःपरिधीति
बहिः—परिधि । स्कन्दति । तेषाम् । तत् । भागधे-
यमिति भाग—धेयम् । तान् । एव । तेन । प्री-
णाति । परिधीनिति परि—धीन् । परीति । दधाति ।
रक्षसाम् । अपहत्या इत्यप—हत्यै । समिति । स्पर्श-
यति ( २ ) । रक्षसाम् । अनन्ववचारायेत्यनन्‌—
अवचाराय । न । पुरस्तात् । परीति । दधाति ।
आदित्यः । हि । एव । उद्यन्नित्युत्—यन् । पुर-
स्तात् । रक्षांसि । अपहन्तीत्यप—हन्ति । ऊर्ध्वे

इति। समिधाविति सम्—इधौ। एति। दधाति।
उपरिष्टात्। एव। रक्षांसि। अपेति। हन्ति।
यजुषा। अन्याम्। तूष्णीम्। अन्याम्। मिथुन-
त्वायेति मिथुन—त्वाय। द्वे इति। एति। दधाति।
द्विपादिति द्वि—पात्। यजमानः। प्रतिष्ठित्या इति
प्रति—स्थित्यै। ब्रह्मवादिन इति ब्रह्म—वादिनः।
वदन्ति। सः। तु। वै। यजेत। यः। यज्ञस्य।
आर्त्यौ। वसीयान्। स्यात्। इति। भूपतय इति
भू—पतये। स्वाहा। भुवनपतय इति भुवन—पतये।
स्वाहा। भूतानाम् ( २ )। पतये। स्वाहा। इति।
स्कन्नम्। अन्विति। मन्त्रयेत। यज्ञस्य। एव।
तत्। आर्त्यौ। यजमानः। वसीयान्। भवति।
भूयसीः। हि। देवताः। प्रीणाति। जामि। वै।
एतत्। यज्ञस्य। क्रियते। यत्। अन्वञ्चौ। पुरो-
डाशौ। उपांशुयाजमित्युपांशु—याजम्। अन्तरा।
यजति। अजामित्वायेत्यजामि—त्वाय। अथो इति।
मिथुनत्वायेति मिथुन—त्वाय। अग्निः। अमुष्मिन्।
लोके। आसीत्। यमः। अस्मिन्। ते। देवाः।
अब्रुवन्। एति। इत। इमौ। वि। परीति।
ऊहाम। इति। अन्नाद्येनेत्यन्न—अद्येन। देवाः।

अग्निम् (४)। उपामन्त्रयन्तेत्युप—अमन्त्रयन्त। राज्येन। पितरः। यमम्। तस्मात्। अग्निः। देवानाम्। अन्नाद इत्यन्न—अदः। यमः। पितृणाम्। राजा। यः। एवम्। वेद। प्रेति। राज्यम्। अन्नाद्यमित्यन्न—अद्यम्। आप्नोति। तस्मै। एतत्। भागधेयमिति भाग—धेयम्। प्रेति। अयच्छन्। यत्। अग्नये। स्विष्टकृत इति स्विष्ट—कृते। अवद्यन्तीत्यव—द्यन्ति। यत्। अग्नये। स्विष्टकृत इति स्विष्ट—कृते। अवद्यतीत्यव—द्यति। भागधेयेनेति भाग—धेयेन। एव। तत्। रुद्रम्। समिति। अर्धयति। सकृत्सकृदिति सकृत्—सकृत्। अवेति। द्यति। सकृत्। इव। हि। रुद्रः। उत्तरार्धादित्युत्तर—अर्धात्। अवेति। द्यति। एषा। वै। रुद्रस्य (५)। दिक्। स्वायाम्। एव। दिशि। रुद्रम्। निरवदयत इति निः—अवदयते। द्विः। अभीति। घारयति। चतुरवत्तस्येति चतुः—अवत्तस्य। आप्त्यै। पशवः। वै। पूर्वाः। आहुतय इत्या—हुतयः। एषः। रुद्रः। यत्। अग्निः। यत्। पूर्वाः। आहुतीरित्या—हुतीः। अभीति। जुहुयात्। रुद्राय। पशून्। अपीति। दध्यात्।

(उपांशुयाजस्विष्टकृदभिधानम्)

अपशुः। यजमानः। स्यात्। अतिहायेत्यंति—हार्य। पूर्वाः। आहुतीरित्या—हुतीः। जुहोति। पशूनाम्। गोपीथार्य (६)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

(अथ द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः।)

---

प्रयोगो बर्हिषः स्पष्टं पञ्चमे प्रतिपादितः॥

अथ षष्ठेऽनुवाक उपांशुयाजस्विष्टकृतौ वक्तव्यौ। तत्राऽऽदौ तावत्परिधीनां परिधानं विधातुं प्रस्तौति—

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत्तं देवताः प्रैषमैच्छन्तं मत्स्यः प्राब्रवीत्तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो हि तमन्वविन्दन्तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात्तन्मे भ्रातॄणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति, इति।

यथा भ्रातरस्त्रयो हविर्वहन्तो मृता इत्थमेव स्य आर्तिमारिष्यतीति यो हवि-

---

१ ख. °हन्नेव मृ°।

र्वहति स मरणं प्राप्नोतीति भीतोऽग्निर्निलायत यथा देवैर्न ज्ञायते तथा निलीनोऽभूत्। निलीय चोदकमध्ये प्राविशत्। तमुद्दिश्य प्रकर्षेणान्वेषणं कर्तुमैच्छन्। तदा जलस्थितो मत्स्यस्तत्र स्थितमग्निं देवानामग्रेऽब्रवीत्। ततोऽग्निस्तं मत्स्यमेवमशपत्—हे मत्स्य यस्त्वं देवानामग्रे मामेवं ज्ञापितवानसि पिशुनो भूत्वा प्राब्रवीः, तादृशं त्वां जालधारिणः कैवर्ता धियाधिया वध्यासुः, तेन तेन जालादिना साधनेन, यद्वा यदा यदा हन्तुं धीर्भवति तदा तदा रात्रावहनि वा वधं कुर्वन्त्विति। यस्मादेवं शप्तस्तस्मान्मत्स्यं तदा तदा घ्नन्ति। मत्स्यमुखेन विज्ञाते वह्नौ देवा( वै )स्तमग्निं प्रति अस्मत्समीपे समागच्छ हव्यं चास्मदीयं वहेत्युक्ते सोऽग्निर्वरमवृणीत—स्रुचि गृहीतस्य हविषः संबन्धि यदेव द्रव्यं होमात्पुरा परिधिभ्यो बहिः प्रच्यवेत तदस्मदीयानां भ्रातॄणां भागधेयमस्त्विति। ततस्तथैव देवैर्वरो दत्तः। तेन स्कन्नेन तानग्निभ्रातॄन्यजमानः प्रीणयति ॥

इदानीं विधत्ते—

परिधीन्परि दधाति रक्षसामपहत्यै, इति।

यस्मात्परिधिभ्यो बहिर्देशोऽग्नेर्भ्रातॄणामुपयुक्तस्तस्मात्परिधीनग्नेः परितः स्थापयेत्। तत्तु रक्षसामपघाताय भवति ॥

पश्चिमदिशि स्थापितस्य मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां संस्पर्शनं विधत्ते—

सꣳ स्पर्शयति रक्षसामनन्ववचाराय, इति।

परिधीनां समीचीने स्पर्शे सति [1]रक्षसां प्रवेष्टुं छिद्राभावादग्निसमीपे संचारो न भवति ॥

दिक्त्रयदृष्टान्तेन पूर्वस्यामपि दिशि प्रसक्तं परिधिं वारयति—

न पुरस्तात्परि दधात्यादित्यो ह्येवो-
द्यन्पुरस्ताद्रक्षाꣳस्यपहन्ति, इति।

रक्षसामपघातः परिधेः प्रयोजनं, तच्चाऽऽदित्योदयेनैव सिध्यति ॥

आग्नेय्यामैशान्यां चाऽऽघारसमिधोः स्थापनं विधत्ते—

ऊर्ध्वे समिधावा दधात्युपरिष्टा-
देव रक्षाꣳस्यप हन्ति, इति।

---

१ क. घ. ङ. च. 'न्ति। अन्यमु'।

( उपांशुयाजस्विष्टकृदभिधानम् )

दक्षिणोत्तरपरिध्योरग्रदेशे स्थापनीये ते ऊर्ध्वे। तेन स्थापनेन दिक्चतुष्टय इवोर्ध्वदेशेऽपि रक्षसामपघातो भवति ॥

तयोर्दक्षिणसमिधः स्थापने मन्त्रकाण्डाम्नातं वीतिहोत्रं त्वा कव इति मन्त्रं विधत्ते—

यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय, इति।

स्त्रीपुरुषयोरिव समन्त्रकामन्त्रकयोः परस्परं वैलक्षण्यान्मिथुनत्वम् ॥

समिधो द्वित्वं प्रशंसति—

द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै, इति ॥

प्रायश्चित्तरूपेण स्कन्नानुमन्त्रणं विधत्ते—

ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान्भवति भूयसीर्हि देवताः प्रीणाति, इति।

हविषः स्कन्दने सति यज्ञस्य विनाशेन यो यजमानो विनाशाभिमुखो भवति स कथं तत्परिहारेण वसुमत्तरो भवेदिति[1] प्रश्नवादिभिः पृष्टो बुद्धिमानुत्तरं ब्रूते—त्रिभिरेतैर्मन्त्रैः स्कन्नमनुमन्त्रयेतेति। भूपत्यादयो देवताविशेषा अग्निभ्रातरो वा, तेभ्यः स्वाहेति यदनुमन्त्रणं तेन यज्ञस्याप्यार्त्या +विनाशं प्राप्य यजमानो वसुमत्तरो भवति। यस्मादयं भूपत्यादिका भूयसीर्देवताः प्रीणयति तस्माद्युक्तं तस्य वसुमत्तरत्वम् ॥

अथोपांशुयाजं विधत्ते—

जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वाय, इति।

यदन्वञ्चावनुक्रमगतावाग्नेयाग्नीषोमीयपुरोडाशौ स्यातामेतेन यज्ञस्य जाम्या-

---

+ अत्र ख. पुस्तके विनाशमप्राप्येति पाठः। स केवलं भ्रान्त्या शोधनकर्त्रा कल्पित इति प्रतिभाति।

---

१ ख. 'ति ब्रह्मवा'।

लस्याय क्रियते। अत आलस्यपरिहाराय तयोः पुरोडाशयोर्मध्य उपांशु-याजं यजेत्। किं च पुरोडाशद्रव्यक एको याग आज्यद्रव्यकोऽपर इति मिथुनत्वम् ॥

अथ स्विष्टकृतं विधत्ते—

अग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन्ते देवा अब्रु-वन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निमुपा-मन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवा-नामन्नादो यमः पितृणाꣳ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छ-न्यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽ-वद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति, इति।

पुरा कदाचिदग्निः स्वर्गे स्थितः, यमस्तु भूलोके, तदा मनुष्याणां पाकादि-निष्पादनाभावात्पितृणां राजाभावाच्चाग्नियमयोर्विपरिवर्तनं कर्तुमिच्छावन्तो देवा आगच्छतेति परस्परमाहूयान्नाद्येनोत्कोचेन तमग्निं भूलोके समागन्तुमुपच्छ-न्दितवन्तः। पितरस्तु राज्येनोत्कोचेन यमं स्वर्गलोके गन्तुं प्रलोभितवन्तः। यस्मादेवं तस्माद्देवानां मध्येऽग्निरन्नादो बह्वन्नभक्षकोऽभूत्। यमश्च पितृणां राजाऽभूत्। य एतदुभयं वेद स प्रकृष्टराज्यमन्नाद्यं च प्राप्नोति। ततो देवास्त-स्मा अग्नये भागं दत्तवन्तः। कोऽसौ भागः, यजमाना अग्नये स्विष्टकृते यद्धविरवद्यन्ति सोऽस्य भागः। तस्मादग्नये स्विष्टकृतेऽवद्येत्। तथा सति तदग्नये[1] दत्तेन भागेन रुद्रं क्रूरमग्निं समृद्धं करोति ॥

यदुक्तं सूत्रकारेण—"सर्वेषां हविषामुत्तरार्धात्सकृत्सकृदवद्यति स्विष्ट-कृते" इति, तदेतद्विधत्ते—

सकृत्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्धादव द्यत्येषा वै रुद्रस्य दिक्स्वा-यामेव दिशि रुद्रं निरवदयते, इति।

एक एव रुद्र इति श्रुत्यन्तरात्सकृदवदानसदृशो रुद्रः। येयमैशानी सैवैषा

१ ख. 'ये देवैर्दत्ते'।

(उपांशुयाजस्विष्टकृदभिधानम्)

रुद्रस्य दिक्। सा चोत्तरभागवर्तिनी। तस्मादुत्तरार्धादवदानेन स्वकीयायामेव दिशि रुद्रं निःशेषेण तोषयति ॥

इतरहविषामिव सकृदभिघारणं प्राप्तमपवदति—

द्विरभि घारयति चतुरवत्तस्याऽऽप्त्यै, इति।

उपस्तरणमेकं हविरवदानं द्वितीयं द्विरभिघारणं चान्तत इति चतुरवत्तं संपद्यते ॥

यदुक्तं सूत्रकारेण—"उत्तरार्धपूर्वार्धे जुहोत्यसंसृष्टामितराभिराहुतिभिः" इति, तदेतद्विधत्ते—

पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्य-त्पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ॥, इति ॥

पूर्वाः पुरोडाशाद्याहुतयः पशुस्वरूपाः पशुवदिष्टार्थप्रापकत्वात्। अयं त्वग्निः क्रूरत्वाद्रुद्रः। यदि पूर्वा आहुतीरभिसंबध्य तासामुपरि जुहुयात्तदा पशून्सर्वान्घातुकाय रुद्राय प्रयच्छेत्। ततो यजमानोऽपशुः स्यात्। तस्मात्पूर्वा आहुतीः परित्यज्य दूरे जुहुयात्। एवं होमः पशूनां संरक्षणाय भवति ॥

अत्र मीमांसा।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"उपांशुयाज इ(मि)त्येषोऽनुवादोऽत्राथवा विधिः।
विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता ॥
जामित्वोक्तेरन्तराल उपांशुगणके विधौ।
सत्यर्थवादो विष्ण्वादिस्तद्रूपं ध्रौवमन्त्रतः ॥"

दर्शपूर्णमासयोः श्रूयते—"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति" इति। "विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय" इति [च]। तत्र विष्ण्वादिवाक्येषु विहितस्य यागत्रयसमुदायस्यानुवादो जामि वा एतदिति वाक्यमिति चेन्न। आग्नेयाग्नीषोमीयपुरोडाशद्वयनैरन्तर्यकृतस्य जामित्वदोषस्य वाक्योपक्रम उपन्यासात्पुरोडाशयोरन्तराले किंचिद्विधित्सितम्।

१ ख. ख. घ. च. °ध्रौव°। २ ख. °यं, ततो द्विरभिघारणेन चतुरवत्तसंपत्तिः। य°। ३ ख. °तः। इदमाम्नाय°। ४ ख. च. °वाद इति चे°।

न ह्यन्तरालगुणविशिष्टं विधेयं विष्ण्वादिवाक्येषु प्रतीयते। पूर्ववाक्ये तु तत्प्रतीयत इति विधायकं तद्वाक्यम्। न चात्र यजतीति वर्तमाननिर्देशः शङ्कनीयः। पञ्चमलकारस्याऽऽश्रयणात्। अन्तरालकालवदुपांशुत्वगुणस्यापि विशेषणत्वात्तद्विशिष्टकर्मण उपांशुयाजनामकत्वम्। सत्येवं गुणद्वयविशिष्टकर्मण्याद्येन वाक्येन विहिते विष्ण्वादिवाक्यमर्थवादः स्यात्। न चात्र विहितयागानुवादेन देवताविधिः शङ्कनीयः। समाधातव्येन जामित्वदोषेणोपक्रमादजामित्वेन समाधानेनोपसंहाराच्च। जामि वा इत्यादेरजामित्वायेत्यन्तस्य सर्वस्य महावाक्यस्यैकवाक्यत्वप्रतीतेः। न खल्वेकस्मिन्वाक्ये विधेयबाहुल्यं संभवति। न चात्र विधित्सितस्योपांशुयाजस्य द्रव्याभावः। ध्रौवस्यैव द्रव्यत्वात्। नापि देवताया असंभवः। नानाशाखासूपांशुयाजक्रमे पठितैर्वैष्णवप्राजापत्याग्नीषोमीयमन्त्रैर्विकल्पेन देवतात्रयस्य प्रतीयमानत्वात्। तस्माद्यजतीत्येतद्विधायकम्।

दशमाध्यायस्यान्तिमपादे चिन्तितम्—

" उपांशुयाजे यत्किंचिद्द्रव्यमाज्यमुताग्रिमः।
विशेषानुक्तितो मैवं ध्रौवाज्यस्य विधानतः॥ "

"उपांशुयाजमन्तरा यजति"इत्यत्र द्रव्यविशेषस्यानुक्तत्वादैच्छिकं द्रव्यमिति चेन्न। आज्यस्य श्रुतत्वात्। तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजान्निति श्रुतम्। न चैवमप्यनियतं यत्किंचिदाज्यं स्यादिति शङ्कनीयम्। ध्रौवस्य विहितत्वात्। " सर्वस्मै वा एतद्यज्ञाय गृह्यते। यद्ध्रुवायामाज्यम्। " इति विहितम्। विध्यश्रवणेऽपि ध्रौवाज्यस्य सप्रयोजनत्वाय विपरिणामः कर्तव्यः॥

तत्रैवान्यच्चिन्तितम्—

" तत्र यः कोऽपि देवः स्यात्तान्त्रिको वाऽग्रिमो भवेत्।
अविशेषात्प्रकरणात्तान्त्रिकोऽत्र नियम्यते॥ "

तत्रोपांशुयाजे या काचिद्देवता स्यात्। विष्णुरुपांशु यष्टव्य इत्यादेरर्थवादत्वेनाविधायकत्वात्, अन्यस्य च देवताविधेरदर्शनात्, यागेन देवतामात्रस्यैव कल्पनाच्च। मैवम्। उपांशुयाजस्य दर्शपूर्णमासप्रकरणपठितत्वाद्दर्शपूर्णमासतन्त्रमध्यपठित एव कश्चिद्देवः प्रत्यासत्त्योपांशुयाजे नियम्यते॥

तत्रैवान्यच्चिन्तितम्—

" कोऽपि देवस्तान्त्रिकेषु नियतो वा तदाऽपि किम्।
प्रजापतिरुताग्निः स्यादग्नीषोमावुतापि वा॥

---

१ ख. घ. च. °काल उपां°।

( उपांशुयाजस्विष्टकृदभिधानम् )

विष्णुर्यद्वाऽग्निमुत्सृज्य विकल्प्यं देवतात्रयम्।
कोऽप्यत्रानियमान्नैवमुपांशुत्वादियन्त्रणात् ॥
प्रजापतिरुपांशुत्वान्न तूष्णींभावयोगतः।
अग्निर्मुख्यत्वतो नैवं तद्याज्यादेरपाठतः ॥
अग्नीषोमौ तदुक्तेर्नो तत्र कालविधानतः।
विष्णुर्याज्यादितस्तन्न प्राजापत्योक्तिबाधनात् ॥
याज्यात्रैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः।
विधिशेषार्थवादेऽपि प्राप्तं त्रयमनूद्यते ॥ ''

तान्त्रिकदेवेषु नियामकाभावाद्यः कोऽपीति चेन्न। वक्ष्यमाणानामुपांशुत्वादीनां नियामकत्वात्। ''यत्किंचित्प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियते'' इतिवचनादुपांशुत्वधर्मसाम्येन प्रजापतिर्देवतेति चेन्न। प्रजापतिं मनसा ध्यायेदिति विधेस्तूष्णींभावस्यैव प्रजापतिधर्मत्वात्। प्रथमयागदेवत्वेन मुख्यत्वादग्निर्देवतेति चेन्न। तदुपांशुयाजक्रमेऽग्निविषययाज्याद्यपाठात्। तावब्रूतामित्यादिपूर्वोदाहृतवाक्यादग्नीषोमौ देवतेति चेन्न। तस्य वाक्यस्य पौर्णमासीकालविधायकत्वात्। कस्यांचिच्छाखायामुपांशुयाजक्रमे वैष्णवयाज्यापुरोनुवाक्ययोः पाठाद्विष्णुर्देवतेति चेन्न। तथा सति शाखान्तरप्रोक्तयोः प्राजापत्ययाज्यापुरोनुवाक्ययोर्बाधः प्रसज्येत। तस्मान्नानाशाखासु पठिताभ्यां विष्णुप्रजापत्यग्नीषोमविषयाभ्यां याज्यापुरोनुवाक्याभ्यां प्राप्तास्तिस्रो देवता विकल्पन्ते। अत एवोपांशुयाजविधिशेषेऽर्थवादेऽप्येतदेव प्राप्तं देवतात्रयमनूद्यते—'' विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय'' इति। तस्माद्देवताविकल्पः सिद्धान्तः।

तत्रैवान्यच्चिन्तितम्—

'' दर्शादिर्वा तस्य कालो दर्श एवान्य एव वा।
द्विपुरोडाशसांनिध्यादाद्यो दर्शेऽग्नितोऽग्रतः ॥
विष्णुयाज्योक्तितो युक्तो मध्यमः पूर्णिमाविधेः।
स एव कालो याज्याया उत्कर्षः पूर्णिमादिने ॥ ''

'' जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा यजत्यजामित्वाय '' इति पुरोडाशयोर्मध्येऽसौ यागो विहितः। पुरोडाशौ च पौर्णमास्यामाग्नेयाग्नीषोमीयौ। अमावास्यायामाग्नेयैन्द्राग्नौ। ततो द्विपुरोडाशसंनिधेः समानत्वाद्दर्शः पूर्णिमा चेत्युभयमपि तस्योपांशुयाजस्य काल

१ क. घ. ङ. श्रूयते। २ क. घ. ङ. °पांशु च त°।

इत्याद्यः पक्षः। अमावास्यां प्रकृत्य याज्याकाण्ड आग्नेययाज्याया ऊर्ध्वमैन्द्राग्नयाज्याया अधस्ताद्वैष्णवयाज्यायाः पाठात्प्रकरणस्य संनिधितः प्रबलत्वाद्दर्श एव काल इति मध्यमः पक्षः। तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति पौर्णमास्यास्तत्कालत्वेन विधानाद्वाचनिकस्य च विधेः प्रबलत्वात्पौर्णमास्येव कालः। तथा सति वैष्णवयाज्या प्रकरणादुत्कृष्यताम्॥

तत्रैवान्यच्चिन्तितम्—

" पुरोडाशैक्ययुक्तायां पौर्णमास्यामयं न हि।
स्याद्वा नास्त्यन्तरेत्युक्तेर्लक्ष्ये कालेऽस्ति शङ्खवत्॥ "

सोमात्प्रागग्नीषोमीयपुरोडाशरहिता केवलाग्नेयपुरोडाशयुक्ता पौर्णमासी भवति। स सोमेनेष्ट्वाऽग्नीषोमीयो भवतीति वाक्येनाग्नीषोमयोः सोमोत्तरकालीनत्वावगमात्तस्यामयमुपांशुयाजो यागो नास्ति। कुतः। उपांशुयाजमन्तरा यजतीति पुरोडाशद्वयान्तरालवत्त्वस्य गुणत्वेन विधानादिति प्राप्ते ब्रूमः— किं यागे पुरोडाशावन्तरालकालस्य विशेषणभूतावुतोपलक्षणीभूतौ। नाऽऽद्यः, अन्तरालवत्तद्विशेषणयोरप्युपांशुयाजगुणत्वप्रसङ्गात्। न चैतद्युक्तम्, उपांशुयाजवत्तयोरपि स्वातन्त्र्येणैव फलान्वयात्। द्वितीये तु शङ्खन्यायेनोपलक्षकस्याग्नीषोमीयपुरोडाशस्याभावेऽप्युपलक्षिते काले यागोऽस्ति। यथा शङ्खध्वनिवेलायां राजसेवार्थं प्रतिदिनमागन्तव्यमित्युक्ते कस्मिंश्चिद्दिने शङ्खं धमतः पुरुषस्याभावेनोपलक्षकस्य ध्वनेरभावेऽप्युपलक्षिते तस्मिन्काले सेवकः समागच्छति तथाऽत्रापि द्रष्टव्यम्। यदि तत्र कालोपलक्षकमन्यदेव व्यापारसूर्यगत्यादिकं संभाव्येत तर्ह्यत्रापि संभवत्येवाऽऽग्नेयपुरोडाश उपलक्षकः। तस्मादेकपुरोडाशायामपि पौर्णमास्यामस्त्युपांशुयाजः।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" उपांशुयाजद्रव्येण शेषकार्यं भवेन्न वा।
भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः॥
उक्ताज्यद्रव्यशेषस्तु भाव्युपस्तरणादिकृत्।
अतो न प्रतिपत्त्यर्हः शेषकार्यं ततः कथम्॥ "

ध्रौवादाज्यादुपांशुयाजार्थमवदाने कृते तच्छेषेण ध्रौवेण स्विष्टकृदादिकं शेषकार्यं कर्तव्यम्। कुतः। " तद्यत्सर्वेभ्यो हविर्भ्यः समवद्यति " इति वाक्येन प्रापितत्वादिति चेन्मैवम्। कृतार्थद्रव्यशेषो ह्युपयोगापेक्षः प्रतिपत्ति-

१ ख. °मात्। तस्मादुपांशुयाजो ना°।

मर्हति । ध्रौवं त्वाज्यं न कृतार्थम् । तेन कर्तव्यानां भविष्यतामुपस्तरणादीनां सद्भावात् । तस्मान्न तेन शेषकार्यं भवति ।

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" स्विष्टकृत्संस्कृतौ क्षीण उतापूर्वोपयोग्यपि ।
प्रयोजनैक्यमेकस्मिन्युक्तं कर्मण्यतः क्षयी ॥
मन्त्रेण देवसंस्कारः प्रक्षेपाद्द्रव्यसंस्कृतिः ।
त्यागादपूर्वमुत्पन्नं प्रधानापूर्वगं च तत् ॥ "

योऽयं स्विष्टकृद्यागः सोऽयमुपयुक्तहविःशेषसंस्कार इत्यविवादम् । तत्र संस्कारस्य दृष्टप्रयोजनत्वेनावश्यंभावे सति तावतैवोपक्षीणः स्विष्टकृद्यागो नापूर्वस्योपकरोति । नह्येकस्मिन्कर्मणि प्रयोजनद्वयं युक्तमिति प्राप्ते ब्रूमः—कर्मण एकत्वेऽप्यंशभेदात्प्रयोजनभेदो न विरुध्यते । मन्त्रपाठो द्रव्यप्रक्षेपो देवतोद्देशेन त्यागश्चेति त्रयोंऽशाः । तत्र त्यागेन परमापूर्वोपयुक्तमवान्तरापूर्वमुत्पद्यते । तस्मात्स्विष्टकृदुभयार्थः । एवमन्त्यप्रयाजपशुपुरोडाशावप्युदाहार्यौ ।

तत्रैवान्यच्चिन्तितम्—

" प्रयोजकः स्विष्टकृत्किं पुरोडाशोत्तरार्धयोः ।
यद्वा प्रयुक्तोपजीवी स्यादाद्यः स्वस्य सिद्धये ॥
उत्तरार्धेतिशब्दस्य प्रकृताकाङ्क्षणे सति ।
अग्न्याद्यर्थं पुरोडाशमुपजीव्यैष वर्तताम् ॥ "

दर्शपूर्णमासयोः श्रूयते—" उत्तरार्धात्स्विष्टकृते समवद्यति " इति। सोऽयं स्विष्टकृद्यागः कस्यचिन्नूतनस्य पुरोडाशस्य तदुत्तरार्धस्य च प्रयोजकः । तदुभयाभावे स्वसिद्ध्यभावादिति चेन्मैवम् । उत्तरशब्दोऽर्धशब्दश्च सर्वनामत्वाद्भागवाचित्वाच्च प्रकृतं कंचिद्भागिनमाकाङ्क्षतः । अग्न्यादिदेवतार्थः पुरोडाशः प्रकृतो भागवांश्च । तस्मात्तमेवोपजीव्य स्विष्टकृद्यागः प्रवर्तते न त्वन्यस्य प्रयोजकः ।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" शेषात्स्विष्टकृदेकस्मात्सर्वेभ्यो वैकृतः कृते ।
शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः संस्कारसाम्यतः ॥ "

दर्शपूर्णमासयोः श्रूयते—" शेषात्स्विष्टकृते समवद्यति " इति । तत्राऽऽग्नेयादीनां त्रयाणां हविषां मध्ये यस्य कस्यचिदेकस्य हविषः शेषादवदातव्यं,

---

१ क. घ. ङ. °न भ° । २ ख. च. क्षयः ।

तावतैव शास्त्रार्थानुष्ठानसिद्धेरिति चेन्मैवम् । उपयुक्तं हविः संस्कर्तुमिदमवदीयते। संस्कारश्च सर्वेष्वपि हविःषु समानः । तस्मात्सर्वेभ्यो हविःशेषेभ्यः स्विष्टकृदनुष्ठेयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

मनुः पृथिव्या यज्ञियमैच्छत्स घृतं निषिक्तमविन्दत्सोऽब्रवीत्कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्मोपहूतꣳ रथंतरꣳ सह पृथिव्येत्याह ( १ ) इयं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयत उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयत उपहूतं बृहत्सह दिवेत्याहेरं वै बृहदिरामेव सह दिवोप ह्वयत उपहूताः सप्त होत्रा इत्याह होत्रा एवोप ह्वयत उपहूता धेनुः ( २ ) सहर्षभेत्याह मिथुनमेवोप ह्वयत उपहूतो भक्षः सखेत्याह सोमपीथमेवोप ह्वयत उपहूता३ हो इत्या-

( इडोपाह्वानविधितन्मन्त्रव्याख्यानयोः प्रस्तावः )

हाऽऽत्मानमेवोप ह्वयत आत्मा ह्युपहूतानां वसिष्ठ इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येताम् ( ३ ) अग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयतां ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते य इमं यज्ञमवान्ये यज्ञपतिं वर्धानित्याह ( ४ ) यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्त उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोप ह्वयते पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे उपहूतोऽयं यजमान इत्याह यजमानमेवोप ह्वयत उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूतः ( ५ ) इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामेदमसीदम-

सीत्येव यज्ञस्य प्रियं धामोप ह्वयते विश्वमस्य प्रियमुपहूतमित्याहाछम्बट्कारमेवोप ह्वयते ( ६ ) ॥

( आह धेनुरेतां वर्धानित्याह धामन्नुपहूतश्चतुस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

मनुः । पृथिव्याः । यज्ञियम् । ऐच्छत् । सः । घृतम् । निषिक्तमिति नि—सिक्तम् । अविन्दत् । सः । अब्रवीत् । कः । अस्य । ईश्वरः । यज्ञे । अपीति । कर्तोः । इति । तौ । अब्रूताम् । मित्रावरुणाविति मित्रा—वरुणौ । गोः । एव । आवम् । ईश्वरौ । कर्तोः । स्वः । इति । तौ । ततः । गाम् । समिति । ऐरयताम् । सा । यत्रयत्रेति यत्र—यत्र । न्यक्रामदिति नि—अक्रामत् । ततः । घृतम् । अपीड्यत । तस्मात् । घृतपदीति घृत—पदी । उच्यते । तत् । अस्यै । जन्म । उपहूतमित्युप—हूतम् । रथंतरमिति रथं—तरम् । सह । पृथिव्या । इति । आह ( १ ) । इयम् । वै । रथंतरमिति रथं—तरम् । इमाम् । एव । सह । अन्नाद्येनेत्यन्न—अद्येन । उपेति ।

ह्वयते । उपहूतमित्युप—हूतम् । वामदेव्यमिति वा-
म—देव्यम् । सह । अन्तरिक्षेण । इति । आह ।
पशवः । वै । वामदेव्यमिति वाम—देव्यम् । पशून् ।
एव । सह । अन्तरिक्षेण । उपेति । ह्वयते । उपहूत-
मित्युप—हूतम् । बृहत् । सह । दिवा । इति । आह ।
ऐरम् । वै । बृहत् । इराम् । एव । सह । दिवा ।
उपेति । ह्वयते । उपहूता इत्युप—हूताः । सप्त ।
होत्राः । इति । आह । होत्राः । एव । उपेति ।
ह्वयते । उपहूतेत्युप—हूता । धेनुः ( २ ) । सहर्ष-
भेति सह—ऋषभा । इति । आह । मिथुनम् । एव ।
उपेति । ह्वयते । उपहूत इत्युप—हूतः । भक्षः ।
सखा । इति । आह । सोमपीथमिति सोम—पीथम् ।
एव । उपेति । ह्वयते । उपहूता३म् इत्युप—हूता-
३म् । हो इति । इति । आह । आत्मानम् । एव ।
उपेति । ह्वयते । आत्मा । हि । उपहूतानामित्युप—
हूतानाम् । वसिष्ठः । इडाम् । उपेति । ह्वयते ।
पशवः । वै । इडा । पशून् । एव । उपेति । ह्वयते ।
चतुः । उपेति । ह्वयते । चतुष्पाद इति चतुः—पादः ।
हि । पशवः । मानवी । इति । आह । मनुः । हि ।
एताम् ( ३ ) । अग्रे । अपश्यत् । घृतपदीति घृत—

पदी । इति । आह । यत्र । एव । अस्यै । पदात् । घृतम् । अपीड्यत । तस्मात् । एवम् । आह । मैत्रावरुणीति मैत्रा—वरुणी । इति । आह । मित्रावरुणाविति मित्रा—वरुणौ । हि । एनाम् । समैरयतामिति सम्—ऐरयताम् । ब्रह्म । देवकृतमिति देव—कृतम् । उपहूतमित्युप—हूतम् । इति । आह । ब्रह्म । एव । उपेति । ह्वयते । दैव्याः । अध्वर्यवः । उपहूता इत्युप—हूताः । उपहूता इत्युप—हूताः । मनुष्याः । इति । आह । देवमनुष्यानिति देव—मनुष्यान् । एव । उपेति । ह्वयते । ये । इमम् । यज्ञम् । अवान् । ये । यज्ञपतिमिति यज्ञ—पतिम् । वर्धान् । इति । आह (४) । यज्ञाय । च । एव । यजमानाय । च । आशिषमित्या—शिषम् । एति । शास्ते । उपहूते इत्युप—हूते । द्यावापृथिवी इति द्यावा—पृथिवी । इति । आह । द्यावापृथिवी इति द्यावा—पृथिवी । एव । उपेति । ह्वयते । पूर्वजे इति पूर्व—जे । ऋतावरी इत्यृत—वरी । इति । आह । पूर्वजे इति पूर्व—जे । हि । एते इति । ऋतावरी इत्यृत—वरी । देवी इति । देवपुत्रे इति देव—पुत्रे । इति । आह । देवी इति ।

हि । एते इति । देवपुत्रे इति देव—पुत्रे । उपहूत इत्युप—हूतः । अयम् । यजमानः । इति । आह । यजमानम् । एव । उपेति । ह्वयते । उत्तरस्यामित्युत्—तरस्याम् । देवयज्यायामिति देव—यज्यायाम् । उपहूत इत्युप—हूतः । भूयसि । हविष्करण इति हविः—करणे । उपहूत इत्युप—हूतः । दिव्ये । धामन् । उपहूत इत्युप—हूतः ( ५ ) । इति । आह । प्रजेति प्र—जा । वै । उत्तरेत्युत्—तरा । देवयज्येति देव—यज्या । पशवः । भूयः । हविष्करणमिति हविः—करणम् । सुवर्ग इति सुवः—गः । लोकः । दिव्यम् । धाम । इदम् । असि । इदम् । असि । इति । एव । यज्ञस्य । प्रियम् । धाम । उपेति । ह्वयते । विश्वम् । अस्य । प्रियम् । उपहूतमित्युप—हूतम् । इति । आह । अछम्बट्कारमित्यछम्बट्—कारम् । एव । उपेति । ह्वयते ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः । )

---

उपांशुयाजः षष्ठेऽस्मिन्स्विष्टकृच्च समीरितः ।
आध्वर्यवं समाप्याथ हौत्रशेषो निरूप्यते ॥ १ ॥

तत्रास्मिन्सप्तमानुवाक इडोपाह्वानविधिस्तन्मन्त्रव्याख्यानं च प्रस्तूयते। मन्त्रास्तु मन्त्रकाण्ड एव समाम्नाताः—

"उपहूतꣳ रथंतरꣳ सह पृथिव्या। उप मा रथंतरꣳ सह पृथिव्या ह्वयताम्। उपहूतं वामदेव्यꣳ सहान्तरिक्षेण। उप मा वामदेव्यꣳ सहान्तरिक्षेण ह्वयताम्। उपहूतं बृहत्सह दिवा। उप मा बृहत्सह दिवा ह्वयताम्। उपहूताः सप्त होत्राः। उप मा सप्त होत्रा ह्वयन्ताम्। उपहूता धेनुः सहर्षभा। उप मा धेनुः सहर्षभा ह्वयताम्। उपहूतो भक्षः सखा। उप मा भक्षः सखा ह्वयताम्। उपहूताꣳ३ हो। इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयताम्। इडोपहूता। उपहूतेडा। मानवीं घृतपदीं मैत्रावरुणी। ब्रह्म देवकृतमुपहूतम्। दैव्या अध्वर्यव उपहूताः। उपहूता मनुष्याः। य इमं यज्ञमवान्। ये यज्ञपतिं वर्धान्। उपहूते द्यावापृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे। उपहूतोऽयं यजमानः। उत्तरस्यां देवयज्यायामुपहूतः। भूयसि हविष्करण उपहूतः। दिव्ये धामन्नुपहूतः। इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः। विश्वमस्य प्रियमुपहूतम्। विश्वस्य प्रियस्योपहूतस्योपहूतः।" [ब्रा० का० ३ प्र० ५ अ० ८] इति।

एतद्विनियोगं बौधायनो दर्शयति—"उक्ता इडाया जपास्तानुपाꣳशूक्त्वोच्चैरुपह्वयत उपहूतेडेति प्रतीचीमिडोपहूतेति पराचीम्" इति। अस्यायमर्थः—गोशरीररूपाया इडाया देव्या जपा वेदे स्पष्टं प्रोक्ता उपहूतꣳ रथंतरमित्येवमारभ्योपहूताꣳ३ हो, इत्येवमन्ताः। तान्मन्त्रानुपांशु जपेत्। तत ऊर्ध्वमिडोपहूतेत्यादिकमुच्चैः पठेत्। उपहूतशब्दस्य प्रथमप्रयोगेऽ+पीडा प्रतीचीनमुखा भवति। चरमप्रयोगे पराचीनमुखेत्युच्यत इति ॥

तानेतान्मन्त्रान्व्याचिख्यासुरादाविडाजन्मप्रकारं दर्शयति—

मनुः पृथिव्या यज्ञियमैच्छत्स घृतं निषिक्तमविन्दत्सोऽब्रवीत्कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते तदस्यै जन्म, इति।

पुरा कदाचिन्मनुः पृथिव्या उपरि यज्ञार्थं किं द्रव्यमस्तीति सर्वत्रान्वेषणमकरोत्। अन्विष्य च तत्र गोः पादाङ्कितेषु भूप्रदेशेषु निषिक्तं घृतं

+ अपिशब्दस्यार्थो न ज्ञायते।

( इडोपाह्वानविधितन्मन्त्रव्याख्यानयोः प्रस्तावः )

लब्धवान्। लब्ध्वा च देवानामग्रे स एवमब्रवीत्—अस्या गोः पदेषु स्थितस्य घृतस्य स्वरूपं यथा लौकिकभोजनादिषूपयुक्तं तथा यज्ञेषूपयुक्तं कर्तुं कः समर्थ इति। तच्छ्रुत्वा तत्र स्थितौ मित्रावरुणौ मनुं प्रत्यब्रूताम्—किं गोः कार्यभूतेन घृतेन, तत्कारणभूताया गोरेव यज्ञाङ्गभावं कर्तुमावां समर्थौ स्व इति। एवमुक्त्वा तौ तत ऊर्ध्वं तामिडारूपां गां भूमौ समैरयतां समानयताम्। सा च गौर्भूमौ यत्र यत्र नितरां पादं प्रक्षिप्तवती तत्र तत्र गोपदाङ्किते भूप्रदेशे घृतं निष्पीडितमासीत्। यस्मादस्याः पादेभ्यो घृतं निर्गतमासीत्तस्मादियं घृतपदीति प्रसिद्धाऽभूत्। एवमस्या इडाया यज्ञभूमौ जन्म संपन्नम्॥

अथ मन्त्रं व्याचष्टे—

उपहूतꣳ रथंतरꣳ सह पृथिव्येत्याहेयं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयते, इति।

रथंतरं साम, तत्पृथिव्या सह मयोपहूतं समीपे यथा तिष्ठति तथाऽऽह्वानं कृतमित्यर्थः। एतन्मन्त्रगतरथंतरशब्देन भूमिरुपलक्ष्यते। यथा षट्सु पृष्ठस्तोत्रेषु रथंतरं सामाऽऽद्यं तथा त्रिषु लोकेषु भूमिराद्या। मन्त्रगतेन पृथिवीशब्देन तत्कार्यमन्नाद्यमुपलक्ष्यते। तथा सत्यन्नाद्येन सह भूमिरुपहूतेत्येवं मन्त्रवाक्यस्यार्थः। एवमुत्तरेऽपि मन्त्रा अनूद्य व्याख्यायन्ते॥

तत्र सामविशेषवाचिना वामदेव्यशब्देन तत्सामसाध्याः पशव उपलक्ष्यन्ते, तदेतद्दर्शयति—

उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयते, इति॥

इराशब्दवाच्यो वृष्टिस्तत्संबन्धि बृहत्सामैरं वृष्टेर्बृहत्सामसाध्यत्वादित्येतमर्थं दर्शयति—

उपहूतं बृहत्सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयते, इति॥

आश्वलायनेन ये होत्रका दर्शिता होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाक इति, तदुपह्वानपरत्वं दर्शयति—

---

१ ख. °म्—किमनेन गोः। २ ख. °ति। यद्रथं°। ३ ख. °स्तोत्रसामसु र°। ४ ख. °त्येव म°। ५ ख. °च्या पुष्टि°। ६ ख. °रं पुष्टे°।

उपहूताः सप्त होत्रा इत्याह
होत्रा एवोप ह्वयते, इति ॥

सहर्षभेति पदेन सूचितमर्थं दर्शयति—

उपहूता धेनुः सहर्षभेत्याह
मिथुनमेवोप ह्वयते, इति ॥

भक्षः सखेत्यनेन स्वोपकारकसोमपानमुपलक्ष्यत इति दर्शयति—

उपहूतो भक्षः सखेत्याह सोम-
पीथमेवोप ह्वयते, इति ॥

होशब्दः प्रयुक्तः स्वरूपप्राचीत्येतद्दर्शयति—

उपहूतां३ हो इत्याहाऽऽत्मानमेवोप ह्वयते, इति।

उपहूतशब्दे रङ्गप्लुतिर्दूरादाह्वानस्य घटनेनाऽऽदरार्था ॥

आत्मन उपह्वाने प्रयोजनं दर्शयति—

आत्मा ह्युपहूतानां वसिष्ठः, इति।

यस्मादिहाऽऽहूतानां रथंतरपृथिव्यादीनां भक्षः सखेत्यन्तानामुपवासयितृतम आत्मा, तदधीनत्वादितरोपह्वानस्य, तस्मादात्मनोऽप्युपह्वानं कर्तव्यम् ॥

इडोपहूतेत्यारभ्य मानवीत्येतस्मात्प्राचीनस्य वाक्यसमूहस्य तात्पर्यं दर्शयति—

इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते
चतुरुप ह्वयते चतुष्पादो हि पशवः, इति।

इडाशब्देन गोशरीरधारिणी देवतोच्यते। तस्या उपह्वानमिडोपहूतेत्यादिवाक्येन कुर्यात्। इडायाः पशुरूपत्वात्तदुपह्वानेन पशुप्राप्तिर्भवति। आरोहावरोहरूपयोर्वाक्ययोर्द्विरावृत्तत्वाच्चतुर्वारमुपह्वानं संपद्यते। पशूनां चतुष्पदत्वादेतदुपपन्नम्। तयोरावृत्त्या मध्ये सेयमिडाऽस्मानुपह्वयतामित्येतदिडादेवतायाः प्रार्थना स्वस्मिन्देवतानुग्रहार्थम् ॥

मनुः पृथिव्या इत्यस्मिन्नुपाख्याने मानवीत्यादिशब्दार्थः प्रसिद्ध इत्येतद्दर्शयति—

मानवीत्याह मनुर्ह्येतामग्रेऽपश्यद्घृतप-

---

१ ख. °शब्दाह्°। २ क. घ. ङ. च. °नस्यामेराद°। ३ ख. °स्मादुपहू°।

दीत्याह यदेवास्यै पदादूघृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयताम्, इति ॥

पुरा देवैर्निष्पादितमिडोपह्वानरूपं यत्परिवृत्तं(ढं) कर्म तस्योपह्वानं दर्शयति

ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते, इति ॥

अश्विनौ हि देवानामध्वर्यू आस्तामित्यादिश्रुतिषु श्रुता ये दैव्या अध्वर्यवो ये च दृश्यमाना मानुषास्तेषामुपाह्वानं दर्शयति—

दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते, इति ॥

पूर्वोक्ता दैव्या मानुषाश्च येऽध्वर्यवस्ते सर्वेऽपीमं यज्ञमवन्तु यज्ञपतिं च वर्धयन्त्वित्येवमाशीःपरतां दर्शयति—

य इमं यज्ञमवान्ये यज्ञपतिं वर्धानित्याह यज्ञाय चैव यजमानाय चाऽऽशिषमा शास्ते, इति ॥

उपहूतꣳ रथंतरꣳ सह पृथिव्येत्यत्र यथा पृथिवीशब्दोऽन्नलक्षको नात्र तथा द्यावापृथिवीशब्दार्थौ किं तु स्वार्थपरावित्येतद्दर्शयति—

उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोप ह्वयते, इति ॥

ते च द्यावापृथिव्यौ देवतिर्यङ्मनुष्याद्युत्पत्तेः पूर्वमेवोत्पन्ने, ऋतशब्दवाच्यो यज्ञोऽनयोर्वर्तत इति ऋतावर्यौ, नैते केवलमृत्तिकादिरूपे किंतु दैव्यौ, देवाः पुत्रा ययोस्ते देवपुत्रे इत्येतां विशेषणार्थसिद्धिं दर्शयति—

पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे,[2] इति ॥

यजमानः प्रस्तर इत्यादिवदत्र यजमानशब्दो नार्थान्तरलक्षक इत्येतद्दर्शयति—

---

१ ख. यत्कर्म। २ क. घ. ङ. च. °वी वाचकौ किं।

उपहूतोऽयं यजमान इत्याह
यजमानमेवोप ह्वयते , इति ॥

येषां देवयज्यादीनामर्थं यजमानोपह्वानं तानेतान्विस्पष्टं दर्शयति—

उत्तरस्यां देवयज्यायामुपहूतो भूयसि हवि-
ष्करण उपहूतो दिव्ये धामन्नुपहूत इत्याह
प्रजा वा उत्तरा देवयज्या पशवो भूयो
हविष्करणꣳ सुवर्गो लोको दिव्यं धाम , इति ।

सोमयागादिरूपाया उत्तरदेवयज्यायाः प्रजाहेतुत्वेन प्रजात्वम् । अस्यामेवेष्टौ बहुहविःसंपादकस्य पशुहेतुत्वेन पशुत्वम् ॥

इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इत्यस्य स्पष्टार्थस्य मन्त्रवाक्यस्य विवक्षितं तात्पर्यं दर्शयति—

इदमसीदमसीत्येव यज्ञस्य प्रियं धामोपह्वयते, इति ।

इदं प्रवर्तमानं मदीयं हविर्देवा जुषन्तामिति वक्तुं तस्मिन्दर्शपूर्णमासकर्मणि यजमान उपहूत इत्येतावदेव न भवति किं त्विदं निरूढपशुबन्धरूपं कर्म चिकीर्षुरसि सोमयागरूपमिदं कर्म चिकीर्षुरसीत्येवं सर्वकर्मानुष्ठानविवक्षया यज्ञस्य प्रियमिदं धाम स्थानं प्रति यजमान उपह्वयते । सर्वकर्मविवक्षाद्योतनार्था वीप्सा ॥

अन्यद्यजमानस्य यत्प्रियं तत्सर्वमुपहूतं, तस्य चोपहूतस्य सर्वस्य प्रियस्य स्वामी यजमान उपहूत इत्यनेनोपाह्वानस्य न्यूनतां विचार्य संपूर्णता संपद्यत इत्येतद्दर्शयति—

विश्वमस्य प्रियमुपहूतमित्याहाछ-
म्बट्कारमेवोप ह्वयते॥ , इति ॥

अपेक्षितस्यार्थस्य प्रच्छादनेनानुष्ठानवैयर्थ्यं छम्बट्कारस्तद्यथा न भवति तथैवैनं यजमानमुपहूतवान्भवति ॥

अत्र मीमांसा ।

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

“ ऊह्यो यज्ञपतिर्नो वा वृद्ध्यर्थोत्साहतोऽग्रिमः ।
प्रत्यक्षोक्त्या कृत्स्नमत्र इडार्थो नोहनं ततः ॥ ”

( इडाप्राशित्रभक्षयोरभिधानम् )

दर्शपूर्णमासयोरिडोपाह्वानमन्त्रे वाक्यमेतदाम्नायते—"दैव्या अध्वर्यव उपहूताः । उपहूता मनुष्याः । य इमं यज्ञमवान् । ये यज्ञपतिं वर्धान् ।" इति । ये दैव्या अध्वर्यवो यज्ञमवन्ति ये च मनुष्या यज्ञपतिं वर्धयन्ति ते सर्वेऽप्यत्रोपहूता इत्यर्थः । अस्मिन्वाक्ये यज्ञपतेरभिवृद्धिकथनेनोत्साहजननेन समवेतोऽर्थः प्रतीयते । तत इडोपह्वानमन्त्रात्पृथक्कृत्याभिवृद्ध्यर्थे जपे मन्त्रवाक्यमिदं लिङ्गेन विनियुज्यताम् । तथा सति सत्रे यज्ञपतीनां बहुत्वाद्बहुवचनान्ततया यज्ञपतिशब्द ऊहनीय इति प्राप्ते ब्रूमः—प्रत्यक्षश्रुत्या कृत्स्नो मन्त्र इडोपह्वाने विनियुक्तः । एकवाक्यत्वं च कृत्स्नमन्त्र उपलभ्यते । प्रकरणं चेदमिडायाः । अतः श्रुतिवाक्यप्रकरणैर्विरोधान्न लिङ्गविनियोगः संभवति । तदभावे च यज्ञपतिवृद्धिप्रतिपादकमवान्तरवाक्यमिडाप्रतिपादकेन महावाक्येन सहैकवाक्यतापन्नमिडां प्रशंसति । प्रशंसा चैकवचनान्तेनापि यज्ञपतिशब्देन सिध्यतीति नास्ति सत्रे तदूहः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके
सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

पशवो वा इडा स्वयमा दत्ते काममेवाऽऽत्मना पशूनामा दत्ते न ह्यन्यः कामं पशूनां प्रयच्छति वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तं यद्धोता प्राश्नीयाद्धोता ( १ ) आर्तिमार्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वा-

चस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनं-
ज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामीत्याह
स्वगाकृत्यै प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां
ददाति तीर्थ एव दक्षिणां ददाति वि वा एत-
द्यज्ञम् ( २ ) छिन्दन्ति यन्मध्यतः प्राश्नन्त्य-
द्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभि-
रेव यज्ञꣳ सं तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरा-
यन्त्स यज्ञमविध्यत्तं देवा अभि समगच्छन्त
कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं
भविष्यति यदिमꣳ राधयिष्याम इति तत्स्वि-
ष्टकृतः स्विष्टकृत्त्वं तस्याऽऽविद्धं निः ( ३ )
अकृन्तन्यवेन संमितं तस्माद्यवमात्रमव द्येद्य-
ज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य यदुप च स्तृणी-
यादभि च घारयेदुभयतः सꣳश्रायि कुर्यादव-
दायाभि घारयति द्विः सं पद्यते द्विपाद्यज-
मानः प्रतिष्ठित्यै यत्तिरश्चीनमतिहरेदनभिविद्धं
यज्ञस्याभि विध्येदग्रेण परि हरति तीर्थेनैव
परि हरति तत्पूष्णे पर्यहरन्तत् ( ४ ) पूषा
प्राश्य दतोऽरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्त-

को हि तं देवा अब्रुवन्निव वा अयमाध्र्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमाऽरिष्यतीति स एतं मन्त्रमपश्यत्सूर्यस्य त्वा चक्षुषा प्रति पश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षुः ( ५ ) किं चन हिनस्ति सोऽबिभेत्प्रतिगृह्णन्तं मा हिꣳसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णामीत्यब्रवीत्सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णात्सोऽबिभेत्प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत् ( ६ ) प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किं चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठोऽप वा एतस्मात्प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सं मृशतेऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप ह्वयते ( ७ ) ॥

( इडाप्राशित्रभक्षयोरभिधानम् )

( प्राश्नीयाद्धोता यज्ञं निरहरन्तचक्षुराश्यं किं चन हिनस्ति सोऽ-
बिभेच्चतुश्चत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

पशवः । वै । इडा । स्वयम् । एति । दत्ते । कामम् । एव । आत्मना । पशूनाम् । एति । दत्ते । न । हि । अन्यः । कामम् । पशूनाम् । प्रयच्छतीति प्र—यच्छति । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । वाचम् । एव । भागधेयेनेति भाग—धेयेन । प्रीणाति । सदसः । पतये । त्वा । हुतम् । प्रेति । अश्नामि । इति । आह । स्वगाकृत्या इति स्वगा—कृत्यै । चतुरवत्तमिति चतुः—अवत्तम् । भवति । हविः । वै । चतुरवत्तमिति चतुः—अवत्तम् । पशवः । चतुरवत्तमिति चतुः—अवत्तम् । यत् । होता । प्राश्नीयादिति प्र—अश्नीयात् । होता (१) । आर्तिम् । एति । ऋच्छेत् । यत् । अग्नौ । जुहुयात् । रुद्राय । पशून् । अपीति । दध्यात् । अपशुः । यजमानः । स्यात् । वाचः । पतये । त्वा । हुतम् । प्रेति । अश्नामि ।

( इडाप्राशित्रभक्षयोरभिधानम् )

इति॑। आह। प॒रोक्ष॒मिति॑ परः—अ॒क्षम् । ए॒व ।
ए॒न॒त्। जु॒हो॒ति॒। सदं॑सः। पतं॑ये। त्वा । हु॒तम्।
प्रेति॑। अ॒श्ना॒मि॒। इति॑ । आ॒ह । स्व॒गाकृ॑त्या इति॑
स्व॒गा—कृ॒त्यै। प्रेति॑ । अ॒श्न॒न्ति । ती॒र्थे। ए॒व।
प्रेति॑। अ॒श्न॒न्ति। द॒क्षिणा॑म्। द॒दा॒ति। ती॒र्थे। ए॒व।
दक्षि॑णाम्। द॒दा॒ति। वीति॑। वै। ए॒तत् । य॒ज्ञम्।
( २ )। छि॒न्द॒न्ति। यत्। म॒ध्य॒तः । प्रा॒श्नन्तीति॑
प्र—अ॒श्नन्ति॑ । अ॒द्भिरित्य॑त्—भिः । मा॒र्ज॒य॒न्ते ।
आपः॑। वै। सर्वाः॑। दे॒वताः॑ । दे॒वता॑भिः । ए॒व।
य॒ज्ञम्। समिति॑। त॒न्व॒न्ति॒। दे॒वाः। वै। य॒ज्ञात्।
रु॒द्रम्। अ॒न्तः। आ॒य॒न्। सः। य॒ज्ञम् । अ॒वि॒ध्य॒-
त्। तम्। दे॒वाः। अ॒भि। समिति॑ । अ॒ग॒च्छ॒न्त।
कल्प॑ताम्। नः। इ॒दम्। इति॑ । ते । अ॒ब्रु॒व॒न्।
स्वि॑ष्ट॒मिति॒ सु—इ॒ष्टम्। वै। नः । इ॒दम् । भ॒वि॒-
ष्य॒ति॒। यत्। इ॒मम्। रा॒ध॒यि॒ष्यामः॑। इति॑। तत्।
स्वि॒ष्ट॒कृ॒त इति॑ स्विष्ट—कृ॒तः॑। स्वि॒ष्ट॒कृ॒त्त्वमिति॑ स्वि-
ष्टकृत्—त्वम् । तस्य॑ । आवि॑द्ध॒मित्या—वि॒द्धम् ।
निरिति॑ ( ३ )। अ॒कृ॒न्त॒न् । यवे॑न । सं॑मि॑त॒मिति॒
सं—मि॒तम्। तस्मा॑त्। य॒व॒मा॒त्रमिति॑ यव—मा॒त्रम्।
अवेति॑। द्ये॒त्। यत्। ज्यायः॑। अ॒व॒द्येदित्य॑व—द्येत्।

रोपयेत् । तत् । यज्ञस्य । यत् । उपेति । च । स्तृणीयात् । अभीति । च । धारयेत् । उभयतःसंश्वायीत्युभयतः—संश्वायि । कुर्यात् । अवदायेत्यव—दाय । अभीति । धारयति । द्विः । समिति । पद्यते । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । यत् । तिरश्चीनम् । अतिहरेदित्यति—हरेत् । अनभिविद्धमित्यनभि—विद्धम् । यज्ञस्य । अभीति । विध्येत् । अग्रेण । परीति । हरति । तीर्थेन । एव । परीति । हरति । तत् । पूष्णे । परीति । अहरन् । तत् । ( ४ ) । पूषा । प्राश्येति प्र—अश्य । दतः । अरुणत् । तस्मात् । पूषा । प्रपिष्टभाग इति प्रपिष्ट—भागः । अदन्तकः । हि । तम् । देवाः । अब्रुवन् । वीति । वै । अयम् । आर्धि । अप्राशित्रिय इत्यप्र—अशित्रियः । वै । अयम् । अभूत् । इति । तत् । बृहस्पतये । परीति । अहरन् । सः । अबिभेत् । बृहस्पतिः । इत्थम् । वाव । स्यः । आर्तिम् । एति । अरिष्यति । इति । सः । एतम् । मन्त्रम् । अपश्यत् । सूर्यस्य । त्वा । चक्षुषा । प्रतीति । पश्यामि । इति । अब्रवीत् । न । हि । सूर्यस्य । चक्षुः ( ५ ) । किम् ।

(इडाप्राशित्रभक्षयोरभिधानम्)

चन। हिनस्ति। सः। अबिभेत्। प्रतिगृह्णन्तमिति प्रति—गृह्णन्तम्। मा। हिꣳसिष्यति। इति। देवस्य। त्वा। सवितुः। प्रसव इति प्र—सवे। अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः। हस्ताभ्याम्। प्रतीति। गृह्णामि। इति। अब्रवीत्। सवितृप्रसूत इति सवितृ—प्रसूतः। एव। एनत्। ब्रह्मणा। देवताभिः। प्रतीति। अगृह्णात्। सः। अबिभेत्। प्राश्नन्तमिति प्र—अश्नन्तम्। मा। हिꣳसिष्यति। इति। अग्नेः। त्वा। आस्येन। प्रेति। अश्नामि। इति। अब्रवीत्। न। हि। अग्नेः। आस्यम्। किम्। चन। हिनस्ति। सः। अबिभेत् (६)। प्राशितमिति प्र—अशितम्। मा। हिꣳसिष्यति। इति। ब्राह्मणस्य। उदरेण। इति। अब्रवीत्। न। हि। ब्राह्मणस्य। उदरम्। किम्। चन। हिनस्ति। बृहस्पतेः। ब्रह्मणा। इति। सः। हि। ब्रह्मिष्ठः। अपेति। वै। एतस्मात्। प्राणा इति प्र—अनाः। क्रामन्ति। यः। प्राशित्रमिति प्र—अशित्रम्। प्राश्नातीति प्र—अश्नाति। अद्भिरित्यत्—भिः। मार्जयित्वा। प्राणानिति प्र—अनान्। सामिति। मृशते। अमृतम्। वै। प्राणा इति प्र—अनाः।

अमृतम् । आपः । प्राणानिति प्र—अनान् । एव ।
यथास्थानमिति यथा—स्थानम् । उपेति । ह्वयते (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके
षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः । )

---

इडोपाह्वानमुदितमनुवाके हि सप्तमे ।
इडाप्राशित्रभक्षौ द्वावुच्येते अष्टमे पुनः ॥ १ ॥

यदुक्तं सूत्रकारेण—" पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यत्यध्वर्युः प्रथममवदानमवदधाति स्वयꣳ होतोत्तरम् " इति, तदिदं होतुरवदानं विधत्ते—

पशवो वा इडा स्वयमादत्ते काममे-
वाऽऽत्मना पशूनामा दत्ते न ह्यन्यः
कामं पशूनां प्रयच्छति , इति ।

गोरूपाया इडायाः पशुत्वेन तामिडामाददानो होता पशूनामभिलषितार्थं स्वीकृतवान्भवति । होतुरन्यो न कश्चिदपि पशूनामिडारूपाणां कामं दातुं समर्थः ॥

इडाभागप्राशनमन्त्रावुत्पाद्य व्याचष्टे—

वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाच-
मेव भागधेयेन प्रीणाति सदसस्पतये
त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै , इति ।

इडोपाह्वानरूपा या वाक्तस्याः पतिर्होतुर्जीवात्मा तस्मै हुतं हे पुरोडाश त्वां भक्षयामि । अनेन मन्त्रोच्चारणेन भागं दत्त्वा वाचं देवतां प्रीणयतीत्यर्थः। सदसो यज्ञसभायाः पतिर्होतुर्जीवात्मा तस्मै हुतं त्वां भक्षयामि । अनेन तस्य पुरोडाशस्य स्वोदरे[1]कृतत्वं भवति ॥

---

१ ख. °रगत° ।

( इडाप्राशित्रभक्षयोरभिधानम् )

होतुर्हस्ते क्रियमाणस्यावदानस्य संख्यां विधत्ते—

**चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तम्,** इति।

प्रधानस्य हविषश्चतुरवत्तत्वं पूर्वमेव दर्शितं तत्साम्यादिदमपि हविरेव भवति । चतुष्पात्त्वसंख्यासाम्यात्तस्य पशुरूपत्वम् ॥

प्रकारान्तरेण भक्षणं प्रशंसति—

**यद्धोता प्राश्नीयाद्धोताऽऽर्तिमार्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै,** इति।

देवतारूपाया इडाया भक्षणेन होता मरणं प्राप्नुयात् । प्राशनं परित्यज्याग्नौ तद्भागहोमे सतीडारूपगवादिपशूनग्निरूपाय क्रूराय रुद्राय समर्पितवान्भवति । ततो यजमानः पशुरहितः स्यात् । तस्माद्वाचस्पतये त्वा हुतमिति प्रथममुक्त्वा पश्चाद्भक्षणे सति साक्षादग्नौ हुतं न भवतीति रुद्राय पशुसमर्पणं न भवति, वाचस्पतिव्यवधानेन परोक्षमेव हुतत्वात् । तथाऽयमपि साक्षादिडां न प्राश्नाति किं त्वन्यस्मै हुतमेव प्राश्नातीतीडाप्राशनप्रयुक्तो मरणदोषो न भवतीति। ईदृशस्य भक्षितस्य स्वात्मगतत्वेन स्थापनाय सदसस्पतय इत्यादिकं पठनीयम् ॥

यदुक्तं सूत्रकारेण—"यजमानपञ्चमा इडां प्राश्नन्ति"इति, तदिदं विधत्ते-

**प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थ एव दक्षिणां ददाति,** इति।

तीर्थे दुःखोत्तरणावसरे प्राशनेन हि दुःखमुत्तीर्यते। ऋत्विग्भिः प्राशने सति दक्षिणाऽपि दत्ता भवति । तद्दानमेतस्मिन्प्रधानयागोत्तरणावसरे ॥

यदुक्तं सूत्रकारेण—" मनो ज्योतिरित्यद्भिरन्तर्वेदि प्रस्तरे मार्जयित्वा " इति, तदिदं विधत्ते—

**वि वा एतद्यज्ञं छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा दे-**

---

१ ख. °त्वात्स्वय° । २ क. घ. ङ. च. °श्नन्त° ।

वता देवताभिरेव यज्ञꣳ सं तन्वन्ति, इति ।

" सत्यमापः सर्वा देवता आपः " इतिश्रुत्यन्तरादपां सर्वदेवतारूपत्वम् ॥

अथ प्राशित्रावदानपरिमाणं विधत्ते—

देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत्तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वं तस्याऽऽविद्धं निरकृन्तन्यवेन संमितं तस्माद्यवमात्रमव द्येत्, इति ।

देवाः पुरा यज्ञं प्रथममकुर्वंस्तदा स्विष्टकृदग्निरूपं रुद्रमन्तरितवन्तः, तेनान्तरायेण कुपितः सन्रुद्रस्तदीयं यज्ञमविध्यद्विकलमकरोत् । तं रुद्रं देवा आभिमुख्येन गत्वा तादिदं यज्ञानुष्ठानमस्माकं कल्पतां संपूर्णं भवत्विति प्रार्थितवन्तः । तदानीं केचिद्बुद्धिमन्तो देवा इतरान्प्रत्येवमब्रुवन्—यदि वयं तं रुद्रं हविष्प्रदानेनाऽऽराधयिष्यामस्तर्ह्यस्माकमिदं कर्म स्विष्टं भविष्यतीति । ततो हविराराधनेन स्विष्टकरणाद्रुद्ररूपस्याग्नेः स्विष्टकृत्त्वं संपन्नम् । ततो देवास्तमाराध्य तस्य संबन्धि यद्यवमात्रं पुरोडाशांशरूपमाविद्धमासीत्तदाविद्धमुपहतं निरकृन्तन्निष्कृष्य च्छिन्नवन्तः । यस्मादेवं तस्मात्प्राशित्रभागं यवमात्रमवद्येत् ॥

अधिकावदानं प्रतिषेधति—

यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य, इति ।

अधिकावदाने यज्ञस्य तदङ्गं रोपयेन्मोहयेद्यज्ञप्रयोगे भ्रान्तिं जनयेदित्यर्थः । रुद्रेण कृतो योऽयं पुरोडाशस्य वेधस्तस्मादेव वेधदेशादिदमत्र प्राशित्रभागावदानं प्रतीयते च । विस्पष्टमयमर्थः शाखान्तर आम्नायते—" अज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मा रूरुपाम यज्ञस्य शुद्धꣲ स्विष्टमिदꣳ हविः ".इति ॥

उपस्तरणादिचतुरवदाननिन्दापुरःसरं सकृदवदानाभिघारणे विधत्ते—

यदुप च स्तृणीयादभि च घारयेदुभयतः-

**सꣳश्वायि कुर्यादवदायाभि घारयति द्विः सं पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै , इति ।**

यद्यवदानात्पूर्वमुपस्तरणं पश्चाच्चाभिघारणं कुर्यात्तदानीमुपात्तस्य पुरोडाशस्योभयोः पार्श्वयोः संश्वायि कुर्यात् । सम्यक्श्वाय उच्छूनत्वरूपो रोगविशेषो यस्याङ्गस्य तदङ्गं संश्वायि । सकृदवदानाभिघारणाभ्यां द्विपदो यजमानस्य प्रतिष्ठा भवति ॥

यदुक्तं सूत्रकारेण "अग्रेणाऽऽहवनीयं[1] ब्रह्मणे प्राशित्रं परिहरति" इति, तदेतद्विधत्ते—

**यत्तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभि विध्येदग्रेण परि हरति तीर्थेनैव परि हरति, इति ।**

वेदेरुत्तरतः स्थितोऽध्वर्युर्वेदिमध्यस्थिते पुरोडाशे प्राशित्रभागमवदायाऽऽहवनीयस्य दक्षिणे भागे स्थिताय ब्रह्मणे वेदेरुपरि हस्तं प्रसार्य तिरश्चीनं यथा भवति तथा यदि दद्यात्तदानीं यज्ञस्य यदङ्गं रुद्रेणानभिविद्धं तदप्यभिविद्धं भवेत् । तस्मादुत्तरस्यां दिश्यवस्थितोऽध्वर्युः प्राङ्मुखो गत्वाऽऽहवनीयस्याग्रेण देशेन ब्रह्मसमीपं प्राप्य तस्मै भागं परिहरति परितो नयति सम्यग्दद्यादित्यर्थः । तथा सति तीर्थेनैव नद्यवतरणसदृशेनैव मार्गेणैवाऽऽनीतवान्भवति ॥

अत्र सूत्रकारेण प्राशित्रमवदीयमानं प्रेक्षत इत्युपक्रम्यैतदुक्तं "सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणं सावित्रेण• प्रतिगृह्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्याऽऽदायाग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामीत्यसंम्लेत्याभिगिरति" इति । असंम्लेत्य दन्तैरचूर्णीकृत्य । तत्र दर्शनमन्त्रमुत्पाद्य विनियोक्तुं प्रस्तौति—

**तत्पूष्णे पर्यहरन्तत्पूषा प्राश्य दतोऽरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन्वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमारिष्यतीति, इति ।**

---

1 क. घ. ङ. च. °थं प्रा° । २ घ. ङ. च. मार्गे ।

पुरा कदाचिद्देवास्तत्प्राशित्रं पूष्णे समर्पयन् । स च पूषा मन्त्रमन्तरेणाऽऽत्तस्य प्राशित्रस्य दन्तैर्बलाद्दशनं कृत्वा प्राश्य तदन्नं दशनेनोपपाद्य तेन स्वकीयान्दन्तान्पातितवान् । यस्मादेवं तस्मात्पूष्णः सर्वत्र चरोः पिष्टमेव भागं कुर्यात् । ततो देवास्तं दन्तहीनं पूषणमुद्दिश्य परस्परमब्रुवन् । अयं पूषा व्यार्धि समृद्धिरहितोऽभूद्यस्मात्तस्मादयं प्राशित्रानर्होऽभूदिति विचार्य तत्प्राशित्रं बृहस्पतये समर्पयन् । स बृहस्पतिर्मनस्येवमबिभेत्, यथा पूषा प्राशित्रं प्राश्याऽऽर्तिमगमदित्थमन्योऽपि यः प्राश्नाति स आर्तिमारिष्यति गमिष्यतीति॥

अथ दर्शनमन्त्रमुत्पादयति—

स एतं मन्त्रमपश्यत्सूर्यस्य त्वा चक्षुषा
प्रति पश्यामीत्यब्रवीन्न हि सूर्यस्य
चक्षुः किं चन हिनस्ति, इति।

मनुष्यचक्षुः केनापि रोगेण हिंसितं भवति । आरोग्यप्रदस्य सूर्यस्य चक्षुर्न केनापि हिंस्यते । तस्मादनेन मन्त्रेण पश्यामीत्यर्थः ॥

अथ प्रतिग्रहमन्त्रमुत्पादयति—

सोऽबिभेत्प्रतिगृह्णन्तं मा हिꣳसिष्यतीति
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यां प्रति गृह्णामीत्यब्रवीत्सवितृप्रसूत
एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णात्, इति।

ब्रह्मणा मन्त्रेण देवताभिरश्विना(श्व्या)दिभिस्तादृशः प्रतिग्रहो न हिनस्ति । तस्मात्तेन मन्त्रेण प्रतिगृह्णीयात् ॥

अथ प्राशनमन्त्रस्य भागत्रयं क्रमेणोत्पादयति—

सोऽबिभेत्प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वाऽऽ-
स्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिन-
स्ति सोऽबिभेत्प्राशितं मा हिꣳसिष्यतीति ब्रा-
ह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किं चन
हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठः, इति।

---

१ ख. च. °रणे तस्य । २ घ. ङ. च. °श्विन्यादि° ।

( इडाप्राशित्रभक्षयोरभिधानम् )

मौढमरण्यं दहतोऽपि दावाग्नेर्मुखमास्यं शुष्ककाष्ठकण्टकादिना केनापि न हिंस्यते। श्राद्धादौ परान्नं भुञ्जानस्यापि ब्राह्मणस्योदरं केनापि प्रत्यवायेन न हिंसितं भवति। यस्माद्बृहस्पतिर्ब्रह्मिष्ठो मन्त्रवित्तमस्तस्माद्बृहस्पतेर्ब्रह्मणेत्येतद(म)पि मन्त्रभागं पठेत्॥

यदुक्तं सूत्रकारेण—"इन्द्रस्य त्वा जठरे सादयामीति नाभिदेशमभिमृशति वाङ्म आसन्निति यथालिङ्गमङ्गानि" इति, तदेतदभिमर्शनं शिरोमार्जनपूर्वकं विधत्ते—

अप वा एतस्मात्प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सं मृशतेऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप ह्वयते॥, इति॥

अत्र मीमांसा।

षष्ठाध्यायस्य चतुर्थपादे चिन्तितम्—

"इडाद्यर्थस्य नाशेऽन्यः शेषाद्ग्राह्यो न वाऽग्रिमः।
शेषसत्त्वान्न शेषेऽन्यप्रतिपत्त्यवरोधनात्॥"

इडाभक्षणार्थं प्राशित्रभक्षणार्थं वाऽवत्तं यदि नश्येत्तदा शेषस्य सद्भावात्तस्माच्छेषात्पुनरवदेयमिति चेन्न। तस्य शेषस्यान्यथाप्रतिपत्त्या शंयुवाकन्दालीनभक्षरूपयाऽवरुद्धत्वात्। तस्मादवत्तनाशे द्रव्याभावादिडादिकं लुप्यते।

तत्रैवान्यच्चिन्तितम्—

"शेषभक्षाः किमन्येषामृत्विजां वाऽन्यभक्षणम्।
इडायाः परिसंख्यानात्त्वाम्यप्राप्तौ ततोऽन्तिमः॥"

दर्शपूर्णमासयोर्ये प्राशित्रादिशेषभक्षास्तेषां भक्षणमृत्विग्भ्योऽन्यैः कार्यम्। कुतः, ऋत्विजां परिसंख्यातत्वात्। ऋत्विजां कर्मकरत्वादेव भक्षप्राप्तौ सत्यां पुनरप्येवमाम्नायते—"यजमानपञ्चमा इडां भक्षयन्ति" इति। तदेतत्पुनराम्नातं परिसंख्यार्थम्। यजमानसहिता ऋत्विजः प्राशित्रादिकं न भक्षयेयुरित्यर्थः। तस्मादृत्विग्भ्योऽन्येषां प्राशित्रादिभक्षणमिति चेन्मैवम्। यजमानस्य कर्मकरत्वाभावेन पूर्वमप्राप्तं भक्षणमनेन विधीयते। तस्मादपरिसंख्यातत्वादृत्विजामेव प्राशित्रादिभक्षणम्।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

१ क. घ. ङ. ञ. प्राश्नन्ति।

"प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत ।
इष्टिप्रकरणादेव प्रकृताविति युज्यते ॥
संतर्दनादिवद्वाक्याद्विकृतौ पूषसंभवात् ।
सिद्धस्य पुनरप्युक्तिरधिकस्य विवक्षया ॥"

दर्शपूर्णमासप्रकरणे श्रूयते—"तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" इति । तत्र दन्तरहितस्य पूष्णः पिष्टभागत्वं संतर्दनाद्यधिकरणन्यायेन प्रकरणादुत्कृष्यतया विकृतिगामीत्यवगम्यते । तथाऽप्युत्तराधिकरणेषु तस्मिन्नेव विषये विशेषं वक्तुमिह प्रस्तूयते ।

तत्रैवान्यच्चिन्तितम्—

"चरौ पशौ पुरोडाशे चरावेवोत पेषणम् ।
विशेषादर्शनादेतत्सर्वेष्वपि विधीयते ॥
प्राप्तत्वान्न पुरोडाशे हृदाद्याकारनाशनात् ।
न पशौ पारिशेष्येण चरावेव हि पेषणम् ॥"

"पौष्णं चरुं निर्वपेत्" इति चरुर्विहितः । "पौष्णꣳ श्याममालभेतान्नकामः" इति पशुविधिः । पशुमालभ्य पुरोडाशं निर्वपतीत्येतच्चोदकेन पौष्णपशौ प्राप्तम् । तत्र यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इति न्यायेन पुरोडाशस्य पूषा देवता । तत्र पूर्वोक्तपेषणं विषयीकृत्योच्यमानाः संशयपूर्वोत्तरपक्षाः स्पष्टाः ।

तत्रैवान्यच्चिन्तितम्—

"द्विदेवकेऽपि किं पिंष्यादुत पूषैकदेवके ।
द्विदेवकेऽपि तत्पूष्णः सत्त्वात्पेषणभागिनः ॥
देवता विफलत्वेन पेषणं न प्रयोजयेत् ।
यागस्य तत्त्वे भागोक्तेर्न यागान्तरगामि तत् ॥"

राजसूये श्रूयते—"सोमापौष्णं चरुं निर्वपेदैन्द्रापौष्णं चरुम्" इति । तत्र द्विदेवके चरौ पिष्टभाजः पूष्णः सत्त्वात्पेषणं पूषार्थं कर्तव्यमिति चेत् । तत्रेदं वक्तव्यं, किं पेषणस्य देवता प्रयोजिका किं वा यागः । नाऽऽद्यः । यागमन्तरेण केवलदेवता फलजनकत्वाभावेन पेषणं प्रयोक्तुं न प्रभवति । पौष्णस्य यागस्य पेषणप्रयोजकत्वे तु तत्पेषणं द्विदेवके यागान्तरे गन्तुं नार्हति । पूषा प्रपिष्टभाग इत्यत्र यागो न श्रुत इति चेन्मैवम् । भागशब्दान्यथानुपपत्त्या यागस्य कल्प्यत्वात् । नहि देवतात्वमन्तरेण पिष्टद्रव्यभाक्त्वं

१ ख. °त्कृष्टत° ।

(अनूयाजसूक्तवाकानामभिधानम्)

सिध्यति । सति च देवतात्वे द्रव्यदेवतयोर्लाभाद्यागः कल्प्यते । तस्मादेकदेवकयागस्य पेषणप्रयोजकत्वान्न द्विदेवके यागे पेषणमस्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ द्वितीयाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ।

---

अग्नीध आ दंधात्यग्निमुंखानेवर्तून्प्रीणाति समिधमा दंधात्युत्तंरासामाहुंतीनां प्रतिंष्ठित्या अथों समिद्वंत्येव जुंहोति परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्सकृत्सकृत्सं मार्ष्टि परांङिव ह्येतर्हि यज्ञश्चतुः संपंद्यते चतुंष्पादः पशवः पशूनेवाव रुन्धे ब्रह्मन्प्र स्थांस्याम इत्याहात्र वा एतर्हि यज्ञः श्रितः (१) यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्ततं एवैनमा रंभते यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत्तूष्णीमासीतासंप्रत्तो यज्ञः स्यात्प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्ततं एवैनं सं प्र यंच्छति देवं सवितरेतत्ते प्र (२) आहेत्यांह प्रसूंत्यै बृहस्पतिर्ब्रह्मेत्यांह स हि ब्रह्मिंष्ठः स यज्ञं पांहि स यज्ञपंतिं पाहि स मां पाहीत्यांह यज्ञाय यजंमानायाऽऽत्मने तेभ्यं एवाऽऽ-

शिषमा शास्तेऽनार्त्या आश्राव्याऽऽह देवान्य-
जेति ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम
एते देवा इति छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टु-
भम् ( ३ ) जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै
छन्दाꣳसीति तानेव तद्यजति देवानां वा इष्टा
देवता आसन्नथाग्निर्नोदज्वलत्तं देवा आहुतीभिर-
नूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्स-
मिन्ध एतर्दुर्वै नामाऽऽसुर आसीत्स एतर्हि यज्ञ-
स्याऽऽशिषमवृङ्क्त यद्ब्रूयादेतत् (४) उ द्यावा-
पृथिवी भद्रमभूदित्येतदुमेवाऽऽसुरं यज्ञस्याऽऽ-
शिषं गमयेदिदं द्यावापृथिवी भद्रमभूदित्येव
ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिषं गमयत्यार्ध्म
सूक्तवाकमुत नमोवाकमित्याहेदमरात्स्मेति वा-
वैतदाहोपश्रितो दिवः पृथिव्योरित्याह द्यावा-
पृथिव्योर्हि यज्ञ उपश्रित ओमन्वती तेऽस्मि-
न्यज्ञे यजमान द्यावापृथिवी (५) स्तामित्या-
हाऽऽशिषमेवैतामाशास्ते यद्ब्रूयात्सूपावसाना
च स्वध्यवसाना चेति प्रमायुको यजमानः स्या-
द्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा
च स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै

( अनूयाजसूक्तवाकानामभिधानम् )

गव्यूतिमा शांस्ते न प्रमायुको भवति तयोरा-
विद्यग्निरिदꣳ हविरंजुषतेत्याह या अयाक्ष्म (६)
देवतास्ता अंरीरधामेति वावैतदाह यन्न निर्दि-
शेत्प्रतिवेशं यज्ञस्याऽऽशीर्गच्छेदा शांस्तेऽयं
यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्गं लोकं
गमयत्यायुरा शांस्ते सुप्रजास्त्वमा शांस्त
इत्याहाऽऽशिषमेवैतामा शांस्ते सजातवनस्या-
मा शांस्त इत्याह प्राणा वै संजाताः प्राणा-
नेव ( ७ ) नान्तरेति तदग्निर्देवो देवेभ्यो वनते
वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं
मनुष्येभ्य इति वावैतदाहेह गतिर्वामस्येदं च
नमो देवेभ्य इत्याह याश्चैव देवता यजति
याश्च न ताभ्यं एवोभयीभ्यो नमस्करोत्यात्म-
नोऽनार्त्यै ( ८ ) ॥

( श्रितस्ते प्र त्रिष्टुभमेतद्द्यावापृथिवी या अयाक्ष्म प्राणानेव षट्चत्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके नवमोऽनुवाकः । )

---

अग्नीध इत्यग्नि—इधे । एति । दधाति । अग्नि-

मुखानित्यग्नि—मुखान् । एव । ऋतून् । प्रीणाति । समिधमिति सम्—इधम् । एति । दधाति । उत्तरासामित्युत्—तरासाम् । आहुतीनामित्या—हुतीनाम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । सामिद्वतीति समित्—वति । एव । जुहोति । परिधीनिति परि—धीन् । सम् इति । मार्ष्टि । पुनाति । एव । एनान् । सकृत्सकृदिति सकृत्—सकृत् । सम् इति । मार्ष्टि । पराङ् । इव । हि । एतर्हि । यज्ञः । चतुः । सम् इति । पद्यते । चतुष्पाद इति चतुः—पादः । पशवः । पशून् । एव । अवेति । रुन्धे । ब्रह्मन् । प्रेति । स्थास्यामः । इति । आह । अत्र । वै । एतर्हि । यज्ञः । श्रितः ( १ ) । यत्र । ब्रह्मा । यत्र । एव । यज्ञः । श्रितः । ततः । एव । एनम् । एति । रभते । यत् । हस्तेन । प्रमीवेदिति प्र—मीवेत् । वेपनः । स्यात् । यत् । शीर्ष्णा । शीर्षक्तिमानिति शीर्षक्ति—मान् । स्यात् । यत् । तूष्णीम् । आसीत । असंप्रत्त इत्यसं—प्रत्तः । यज्ञः । स्यात् । प्रेति । तिष्ठ । इति । एव । ब्रूयात् । वाचि । वै । यज्ञः । श्रितः । यत्र । एव । यज्ञः । श्रितः । ततः । एव । एनम् । सम् । प्रेति । यच्छति । देव ।

सवितः । एतत् । ते । प्रेति ( २ ) । आह । इति ।
आह । प्रसूत्या इति प्र—सूत्यै । बृहस्पतिः । ब्रह्मा ।
इति । आह । सः । हि । ब्रह्मिष्ठः । सः । यज्ञम् ।
पाहि । सः । यज्ञपतिमिति यज्ञ—पतिम् । पाहि ।
सः । माम् । पाहि । इति । आह । यज्ञाय । यज-
मानाय । आत्मने । तेभ्यः । एव । आशिषमि-
त्या—शिषम् । एति । शास्ते । अनार्त्यै । आश्रा-
व्येत्या—श्राव्य । आह । देवान् । यज । इति ।
ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । इष्टाः ।
देवताः । अथ । कतमे । एते । देवाः । इति ।
छन्दांꣳसि । इति । ब्रूयात् । गायत्रीम् । त्रिष्टुभम् ।
( ३ ) । जगतीम् । इति । अथो इति । खलु । आहुः ।
ब्राह्मणाः । वै । छन्दांꣳसि । इति । तान् । एव ।
तत् । यजति । देवानाम् । वै । इष्टाः । देवताः ।
आसन् । अथ । अग्निः । न । उदिति । अज्वलत् ।
तम् । देवाः । आहुतीभिरित्याहुति—भिः । अनूया-
जेष्वित्यनु—याजेषु । अन्विति । अविन्दन् । यत् ।
अनूयाजानित्यनु—याजान् । यजति । अग्निम् ।
एव । तत् । समिति । इन्धे । एतदुः । वै । नाम ।
आसुरः । आसीत् । सः । एतर्हि । यज्ञस्य । आशि-

षमित्यां—शिषम् । अवृङ्क्त । यत् । ब्रूयात् । एत-
त् ( ४ ) । उ । द्यावापृथिवी इति द्यावा—पृथिवी ।
भद्रम् । अभूत् । इति । एतदुम् । एव । आसुरम् ।
यज्ञस्य । आशिषमित्यां—शिषम् । गमयेत् । इदम् ।
द्यावापृथिवी इति द्यावा—पृथिवी । भद्रम् । अभूत् ।
इति । एव । ब्रूयात् । यजमानम् । एव । यज्ञस्य ।
आशिषमित्यां—शिषम् । गमयति । आर्ध्म । सूक्त-
वाकमिति सूक्त—वाकम् । उत । नमोवाकमिति
नमः—वाकम् । इति । आह । इदम् । अरात्स्म ।
इति । वाव । एतत् । आह । उपश्रित इत्युप—श्रितः ।
दिवः । पृथिव्योः । इति । आह । द्यावापृथिव्यो-
रिति द्यावा—पृथिव्योः । हि । यज्ञः । उपश्रित
इत्युप—श्रितः । ओमन्वती इत्योमन्—वती । ते ।
अस्मिन् । यज्ञे । यजमान । द्यावापृथिवी इति द्या-
वा—पृथिवी ( ५ ) । स्ताम् । इति । आह । आशि-
षमित्यां—शिषम् । एव । एताम् । एति । शास्ते ।
यत् । ब्रूयात् । सूपावसानेति सु—उपावसाना ।
च । स्वध्यवसानेति सु—अध्यवसाना । च । इति ।
प्रमायुक इति प्र—मायुकः । यजमानः । स्यात् ।
यदा । हि । प्रमीयत इति प्र—मीयते । अथ ।

इमाम् । उपावस्यतीत्युप—अवस्यति । सूपचरणेति सु—उपचरणा । च । स्वधिचरणेति सु—अधिचरणा । च । इति । एव । ब्रूयात् । वरीयसीम् । एव । अस्मै । गव्यूतिम् । एति । शास्ते । न । प्रमायुक इति प्र—मायुकः । भवति । तयोः । आविदीत्या—विदि । अग्निः । इदम् । हविः । अजुषत । इति । आह । याः । अयाक्ष्म ( ६ ) । देवताः । ताः । अरीरधाम । इति । वाव । एतत् । आह । यत् । न । निर्दिशेदिति निः—दिशेत् । प्रतिवेशमिति प्रति—वेशम् । यज्ञस्य । आशीरित्या—शीः । गच्छेत् । एति । शास्ते । अयम् । यजमानः । असौ । इति । आह । निर्दिश्येति निः—दिश्य । एव । एनम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । आयुः । एति । शास्ते । सुप्रजास्त्वमिति सुप्रजाः—त्वम् । एति । शास्ते । इति । आह । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । सजातवनस्यामिति सजात—वनस्याम् । एति । शास्ते । इति । आह । प्राणा इति प्र—अनाः । वै । सजाता इति स—जाताः । प्राणानिति प्र—अनान् । एव (७) । न । अन्तः । एति । तत् । अग्निः । देवः ।

दे॒वेभ्यः॑ । वन॑ते । व॒यम् । अ॒ग्नेः । मानु॑षाः । इति॑ । आ॒ह॒ । अ॒ग्निः । दे॒वेभ्यः॑ । व॒नु॒ते । व॒यम् । म॒नु॒ष्ये॑भ्यः । इति॑ । वाव । ए॒तत् । आ॒ह॒ । इ॒ह । गति॑ः । वा॒मस्य॑ । इ॒दम् । च॒ । नम॑ः । दे॒वेभ्यः॑ । इति॑ । आ॒ह॒ । याः । च॒ । ए॒व । दे॒वताः॑ । यज॑ति । याः । च॒ । न । ताभ्यः॑ । ए॒व । उ॒भयी॑भ्यः । नम॑ः । क॒रो॒ति॒ । आ॒त्मन॑ः । अना॑र्त्यै ( ८ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः । )

---

अष्टमे स्पष्टमुदितमिडाप्राशित्रभक्षणम् ।
अनूयाजाः सूक्तवाका नवमे द्वयमीर्यते ॥ १ ॥

तत्राऽऽदौ तावदाग्नीध्रभागस्य प्रदानं विधत्ते—

अग्नीध आ दधात्यग्निमुखानेवर्तून्प्रीणाति , इति ।

पौरोडाशिके तु काण्डेऽग्नीधे प्रथमायाऽऽदधातीति भागप्रदानं[1] प्रथमस्य यु(स्यो)क्तम् । तस्मादाग्नीध्रेणेध्यमानस्याग्नेर्मुखत्वम् । तस्मिन्नेव काण्डे " सकृदुपस्तीर्य द्विरादधत् । उपस्तीर्य द्विरभिघारयति " इत्युक्तं(क्त)षडवत्तसंख्यासामान्यादृतुसंबन्धः[2] । तस्मादग्निमुखीनामृतूनां प्रीतिः ॥

यदुक्तं सूत्रकारेण—" अनुज्ञातो ब्रह्मणाऽऽग्नीध्रः[3] समिधमादधात्येषा ते अग्ने समित् " इति, तदेतद्विधत्ते—

समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो समिद्वत्येव जुहोति , इति।

---

१ ख. 'दानस्य प्राथम्यमुक्त' । २ ख. 'तद्विधानेन सं' । ३ ख. 'ग्नीध्र आनुयाजिकीं स' ।

(अनूयाजसूक्तवाकानामभिधानम्)

अनूयाजा उत्तरा आहुतयस्ताश्चास्यां समिधि प्रतितिष्ठन्ति। किं च, समिद्युक्त एवाग्नावनूयाजाञ्जुहोति[1] ॥

पुनः शोधनं विधत्ते—

परिधीन्त्सं मार्ष्टि पुनात्येवैनान्, इति ॥

पूर्ववदावृत्तिं प्रसक्तां वारयति—

सकृत्सकृत्सं मार्ष्टि पराङिव ह्येतर्हि यज्ञः, इति।

योऽयमाघारयोर्मध्ये पूर्वोक्तः संमार्गस्तस्य काले यज्ञः पराग्भूतो न भवति किं तु प्रत्यग्भूतः। तत ऊर्ध्वं प्रधानयागानां प्रवर्तिष्यमाणत्वात्। अनूयाजसमिध ऊर्ध्वं संमार्गकाले तु यज्ञः पराग्भूतस्तत ऊर्ध्वं प्रधानयागस्य कस्याप्यभावात् ॥

अग्नेरपि सकृत्संमार्गमध्याहृत्यानेन सह परिधित्रयगतां संमार्गसंख्यां प्रशंसति—

चतुः सं पद्यते चतुष्पादः पश-
वः पशूनेवाव रुन्धे, इति ॥

अनूयाजार्थं गमिष्यतोऽध्वर्योर्ब्रह्माणं प्रत्यनुज्ञापनमन्त्रमुत्पाद्य तस्य तात्पर्यं दर्शयति—

ब्रह्मन्प्र स्थास्याम इत्याहात्र वा एतर्हि
यज्ञः श्रितो यत्र ब्रह्मा यत्रैव यज्ञः
श्रितस्तत एवैनमा रभते, इति।

यस्मिन्नाहवनीयस्य दक्षिणे देशे ब्रह्मा वर्ततेऽत्रैवैतस्मिन्काले यज्ञ आश्रितस्तत्समीपे स्थित्वा होतव्यत्वात्। अतो ब्रह्मानुज्ञापनेन यज्ञो यस्मिन्देश आश्रितस्तत एव देशाद्यज्ञमुपक्रान्तवान्भवति ॥

ब्रह्मणो वाचैवानुज्ञाप्रदानं विधत्ते—

यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्षक्तिमान्त्स्याद्यत्तूष्णीमासीतासंप्रत्तो यज्ञः स्यात्प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत एवैनꣳ सं प्र यच्छति, इति।

---

1 ख. ति। शो।

किमयं ब्रह्मा हस्ताग्रसंचालनेनानुजानीते किं वा शिरश्चालनेनाथवा तूष्णीमेवाऽऽस्त आहोस्वित्प्रतिष्ठेत्येतया वाचा । नाऽऽद्यः । कम्पप्रसङ्गात् । यदि हस्तचालनेन प्रमीवेत्प्रेरयेत्तदा शरीरे वातादिजन्यः कश्चित्कम्परोग उत्पद्येत । शिरसाऽभ्यनुज्ञाने शीर्षक्तिमाञ्शिरोरोगवान्भवेत् । तूष्णीमवस्थाने यज्ञोऽसंप्रत्तः सम्यक्प्रवृत्तो न भवेत् । तस्मात्प्रतिष्ठेत्यनया वाचैवाभ्यनुज्ञानं परिशिष्यते । तथा सति यज्ञस्य मन्त्ररूपायां वाचि श्रितत्वात्तद्योग्यादाश्रयाद्यज्ञं प्रयच्छति ॥

यदुक्तं सूत्रकारेण—“ब्रह्मन्प्रस्थास्याम इत्युच्यमाने देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति प्रसौति” इति । सोऽयं शाखान्तर आम्नातो मन्त्रस्तस्यायमर्थः—हे सवितर्देव यदेतत्प्रस्थास्याम इत्यनुज्ञापनं तदेतत्तवाध्वर्युः प्राह तस्मात्त्वं प्रसुव च प्रयज च । बृहस्पतिरेवात्र ब्रह्मा । हे बृहस्पते स त्वं यज्ञं पाहि यज्ञपतिं मनुष्यब्रह्मरूपं मामपि पाहि । हेऽध्वर्यो यत्त्वयोक्तं तदों तथाऽस्तु अनूयाजान्यष्टुं प्रस्थानं कुर्विति । तस्यैतस्य शाखान्तरोक्तस्य मन्त्रस्य भागान्व्याचष्टे—

देव सवितरेतत्ते प्राऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा शास्तेऽनार्त्यै*, इति ॥

यदुक्तं सूत्रकारेण—“औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाऽऽघारसंभेदं प्रतीचस्त्रीननूयाजान्यजत्याश्रावमाश्रावं प्रत्याश्राविते देवान्यजेति प्रथमः संप्रेष्यति यज यजेतीतरौ” इति, आ(तत्राऽऽ)श्रावणपूर्वकं प्रथमयागसंप्रैषं विधत्ते—

आश्राव्याऽऽह देवान्यजेति, (इति ॥

अथ पूर्वोत्तरपक्षाभ्यामनूयाजार्थं देवतासद्भावं दर्शयति—)

ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम

---

* धनुश्चिह्नान्तर्गतं क. घ. ङ. च. पुस्तकेषु नास्ति ।

( अनूयाजसूक्तवाकानामभिधानम् )

एते देवा इति छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टुभं जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति , इति।

या देवता अग्निप्रजापत्यादयो यष्टव्यास्ताः सर्वाः पुरोडाशादिभिरेवेष्टाः। अथ यान्देवान्यष्टुमयमध्वर्युः प्रयतते ते देवाः कतमे, न खल्ववशिष्टाः केचिद्देवाः सन्तीति पूर्वः पक्षः। अत्र सिद्धान्तः—छन्दांस्यवशिष्टानीत्युत्तरं ब्रूयात्, गायत्रीं त्रिष्टुभं जगतीं च यष्टुमध्वर्योर्यत्न इति। अपि चान्ये तत्र विशेषमाहुः—छन्दसां ब्राह्मणैरध्येतव्यत्वाद्ब्राह्मणा एव च्छन्दोरूपा इति। तस्माद्ब्राह्मणानेवाध्वर्युर्यजतीत्युत्तरम्। ब्राह्मणजात्यभिमानी योऽग्निः स एवानूयाजदेवतेति तात्पर्यार्थः॥

अथानूयाजान्विधत्ते—

देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत्तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्धे , इति।

पुरा कदाचिद्देवा यागं कृतवन्तस्तत्राग्निप्रजापत्यादयो यदा देवैरिष्टास्तदा तद्यागादूर्ध्वमाहुत्याधारभूतोऽग्निः प्रज्वलितो नाभूत्। ततो देवा अनूयाजेषु प्रविश्य निलीनमग्निमन्विष्याऽऽहुतिभिर्लब्धवन्तः। तस्मादनूयाजान्यजेत्तेनाग्निमेव प्रज्वालितवान्भवति॥

एतेषां चानूयाजानां मन्त्रास्तदीये मन्त्रकाण्ड एवाऽऽम्नाताः—

"देवं बर्हिः। वसुवने वसुधेयस्य वेतु। देवो नराशꣳसः। वसुवने वसुधेयस्य वेतु। देवो अग्निः स्विष्टकृत्। सुद्रविणा मन्द्रः कविः। सत्यमन्माऽऽयजी होता। होतुर्होतुरायजीयान्। अग्ने यान्देवानयाट्। याꣳ अपिप्रेः। ये ते होत्रे अमत्सत। ताꣳ ससनुषीꣳ होत्रां देवंगमाम्। दिवि देवेषु यज्ञमेरयेमम्। स्विष्टकृच्चाग्ने होताऽभूः। वसुवने वसुधेयस्य नमोवाके वीहि"। [ ब्रा० का० ३ प्र० ५ अ० ९ ] इति।

देवं द्योतनशीलं बर्हिर्नामकं यदग्निस्वरूपं तदेतद्वसुधेयस्य वेतु। आज्यं वसुरूपं यदेतदग्नावाधेयं तदेतद्भक्षयतु। किमर्थं, वसुवने वसुनो धनस्य वननं भजनं वसुवंस्तस्मै, यजमानस्य धनप्राप्त्यर्थमित्यर्थः। एवं नराशंसनामकेऽप्यग्नौ योजयितव्यम्[1]। स्विष्टकृन्नामकोऽग्निः, सोऽयं सुद्रविणा शोभनधनः,

१ क. घ. ङ. च. °म्। अग्निः स्वि°।

मन्द्रो हर्षणशीलः, कविर्विद्वान्, सत्यमन्मा सत्यमननः, आयजी शास्त्रीयया मर्यादया यष्टा, होता देवानामाह्वाता। होतुर्होतुरायजीयाँल्लोके यो यो होता तस्मात्तस्मात्सर्वस्मादतिशयेन शास्त्रीयमर्यादानुल्लङ्घनेन यष्टा। हेऽग्न ईदृशस्त्वं यान्देवानयाड्यष्टवानसि, यांश्च देवानपिमेः प्रीणितवानसि, ये च देवास्ते तव होत्रे होत्र(तृ)कृत्येऽमत्सत यजनेऽमाद्यन्हृष्टवन्तः, दिवि स्थितेषु देवेषु ससनुषीं हविर्दत्तवतीं देवंगमां देवानवगच्छन्तीं तां होत्रां होतृक्रियामिममस्मदीयं यज्ञमेरयाऽऽभिमुख्येन प्रापय, अस्मदीये यज्ञे सर्वदेवतुष्टिकरीं होतृक्रियां त्वमनुतिष्ठेत्यर्थः। हेऽग्ने त्वं स्विष्टकृद्धोता चाभूर्यदस्माभिरिष्टं तच्छोभनं त्वया कृतं तादृशो होमस्य कर्ताऽभूः। अतो नमोवाके यजमानस्य नमस्कारोक्तौ सत्यां वसुवने धनस्य संभजनाय वसुधेयस्य वीहि अग्नावाधीयमानमिदमाज्यरूपं द्रव्यं भक्षय॥

तैरेतैर्मन्त्रकाण्डोक्तैर्मन्त्रैः प्रसिद्धा अनूयाजाः प्रपञ्चिताः। अथ प्रस्तरप्रहरणाङ्गभूतः सूक्तवाको व्याख्यातव्यः। सूक्तवाकस्यानूयाजानन्तरभावित्वं बौधायनेन दर्शितम्—“अनूयाजानां प्रथमं यजति देवं बर्हिर्वसुवने वसुधेयस्य वेत्विति देवो नराशꣳसो वसुवने वसुधेयस्य वेत्विति द्वितीयं देवो अग्निः स्विष्टकृदिति तृतीयमनवानमनूयाजान्यजतीति ब्राह्मणमुत्तमे वाऽमत्सतेति व्यनिति यदा जानाति सूक्तवाकानेनूक्या [?] इति तदा सूक्तवाकमन्वाहेदं द्यावापृथिवी (वी इ) ति प्रतिपद्य” इति। सोऽयं सूक्तवाकस्य प्रथमो भागो मन्त्रकाण्ड एवमाम्नातः—

“इदं द्यावापृथिवी भद्रमभूत्। आर्ध्म सूक्तवाकम्। उत नमोवाकम्। ऋध्यास्म सूक्तोच्यमग्ने। त्वꣳ सूक्तवागसि। उपश्रितो दिवः पृथिव्योः। ओमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्ताम्। शंगये जीरदानू। अत्रस्नू अप्रवेदे। उरुगव्यूती अभयंकृतौ। वृष्टिद्यावा रीत्यापा। शंभुवौ मयोभुवौ। ऊर्जस्वती च पयस्वती च। सूपचरणा च स्वधिचरणा च। तयोराविदि।” [ब्रा० का० ३ प्र० ५ अ० १०] इति।

हे द्यावापृथिवी इदमीदृशं भद्रं कल्याणमभूत्। कीदृशमिति तदुच्यते—ते वयं सूक्तवाकमार्ध्म, श्रद्धालुरयं यजमानः सम्यगनेन हविर्दत्तमित्यादिवाक्यानि सूक्तानि तेषां सूक्तानां देवैर्मनुष्यैर्वा वचनं वाकस्तद्यथा भवति तथा समृद्धिं गताः स्मः। अथवा “अग्निरिदꣳ हविरजुषत। अवीवृधत महो ज्यायोऽ-

१ ख. साध्या। २ क. घ. °ननुक्या। ३ ख. °नूक्त्वाऽनुब्रूहीति। ४ ख. °णमस्माकम°।

(अनूयाजसूक्तवाकानामभिधानम्)

कृत।" इत्यादीनि सूक्तानि तेषां वचनमत्र यथा भवति तथा वयमृद्धिं गताः। अपि च नमो देवेभ्य इति उक्तिर्नमोवाकः, स यथा भवति तथा वयमृद्धिं प्राप्ताः। हेऽग्ने त्वया सूक्तोच्यं यजमानः समृद्धं हविर्दत्तवानित्येतादृशं सूक्तं वक्तव्यं, तेन वयमृध्यास्म समृद्धिं प्राप्ता भूयास्म। यथा त्वं द्यावापृथिव्योरुपश्रितोऽवस्थितो भूत्वा सूक्तवागासि सूक्तं वक्तुं क्षमोऽसि। हे यजमान तव संबन्धिन्यस्मिन्यज्ञे द्यावापृथिव्यावोमन्वती रक्षणवत्यौ स्ताम्। कीदृशे(शौ), शंगये सुखस्य प्रापयित्र्यौ, जीरदानू वृष्ट्यादिद्वारेण जीवनप्रदात्र्यौ, अत्रस्नू भयरहिते, अप्रवेदे अस्मदीयानां दोषाणामकथयित्र्यौ, उरुगव्यूती प्रभूततृणोदकयुक्तत्वेन विस्तीर्णगोप्रचारेण, अभयंकृतावस्मास्वभयस्य कर्त्र्यौ, वृष्टिद्यावा वृष्टेः प्रकाशयित्र्यौ, रीत्यापा रीतेः सन्मार्गवृत्तिप्रकारस्य प्रापयित्र्यौ, शंभुवौ रोगाद्यनिष्टशान्तेः प्रापयित्र्यौ, मयोभुवावन्नपानादिसुखस्य प्रापयित्र्यौ, युवयोर्मध्ये द्यौरियमूर्जस्वती वृष्टिरूपरसवती, पृथिवीयं पयस्वती तृणोदकद्वारा बहुलक्षीरादियुक्ता। तथेयं द्यौः सूपचरणा देवताधिवासस्थानत्वेन सुष्ठूपचरितव्या। इयं पृथिवी स्वधिचरणा सुखेनाऽऽश्रयितुं शक्या। तयोर्द्यावापृथिव्योराविदि आज्ञायां सत्याम्, अग्निरिदं हविरजुषतेत्यनेन वक्ष्यमाणेनान्वयः॥

अस्य सूक्तवाकस्य प्रथमवाक्यं शाखान्तरेऽन्यथा पठितम्—"एतदु द्यावापृथिवी भद्रमभूत्" इति, तदिदं दूषयित्वा स्वशाखापाठं प्रशंसति—

एतदुर्वै नामाऽऽसुर आसीत्स एतर्हि यज्ञस्याऽऽशिषमवृङ्क्त यद्ब्रूयादेतदु द्यावापृथिवी भद्रमभूदित्येतदुमेवाऽऽसुरं यज्ञस्याऽऽशिषं गमयेदिदं द्यावापृथिवी भद्रमभूदित्येव ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिषं गमयति, इति।

एतदुनामा कश्चिद(दा)सुर आसीत्। स कस्यचिद्यज्ञ एतस्मिन्सूक्तवाककाले समागत्याऽऽयुराशास्ते सुप्रजास्त्वमाशास्त इत्यादिकामाशिषं यजमानसंबन्धिनीं विनाश्य स्वसंबन्धिनीमकरोत्। तस्मादेतदु द्यावापृथिवी(वी इ)ति यदि होता पठेत्तदाऽऽसुरस्यैवाऽऽशीःप्राप्तिः स्यात्। ततः शाखान्तरपाठं परित्यज्येदं द्यावापृथिवी भद्रमित्येव पठेत्। तथा सति यजमानस्यैवाऽऽशीःप्राप्तिर्भवति॥

---

१ ख. यस्मात्त्वं द्या॰। २ ख. ॰तोऽभूः सू॰।

सूक्तवाकनमोवाकशब्दयोः क्रियाविशेषणत्वं दर्शयति—

आर्ध्म सूक्तवाकमुत नमोवाकमित्या-
हेदमरात्स्मेति वावैतदाह , इति ।

इदं द्वयं यथा भवति तथा समृद्धिं प्राप्ता इत्येवैतन्मन्त्रवाक्यं ब्रूते ॥

यज्ञस्याग्निरूपेण पृथिव्यां फलरूपेण दिवि चाऽऽश्रितत्वं प्रसिद्धमित्येतद्दर्शयति—

उपश्रितो दिवः पृथिव्योरित्याह द्यावा-
पृथिव्योर्हि यज्ञ उपाश्रितः , इति ॥

रक्षणवत्यौ स्तामित्येतादृगाशीरत्र विवक्षितेति दर्शयति—

ओमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी
स्तामित्याहाऽऽशिषमेवैतामा शास्ते , इति ॥

शाखान्तरपठितमवसानशब्दं दूषयित्वा स्वपाठं प्रशंसति—

यद्ब्रूयात्सूपावसाना च स्वध्यवसाना
चेति प्रमायुको यजमानः स्याद्यदा हि
प्रमीयतेऽथेमामुपावस्यति सूपचरणा च
स्वधिचरणा चेत्येव ब्रूयाद्वरीयसीमेवास्मै
गव्यूतिमा शास्ते न प्रमायुको भवति, इति ।

यदा पुरुषो म्रियते तदानीं पर्यङ्कशयनादिपरित्यागेनेमां भूमिमुपेत्यावसानं गच्छति तस्मात्तादृशस्यार्थस्य सूचके सूपावसानशब्दे प्रयुक्ते सति मरणशीलो भवति । भूमिविषयकेण स्वधिचरणेतिशब्देन वरीयसीमतिबहुलां गव्यूतिं गोप्रचारभूमिं कामितवान्भवति ॥

सूक्तवाकस्य द्वितीयभागपाठस्तु—

" अग्निरिद९ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । सोम इद९ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । अग्निरिद९ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । प्रजापतिरिद९ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । अग्नीषोमाविद९ हविरजुषेताम् । अवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्राग्नी इद९ हविरजुषेताम् । अवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्र इद९ हविरजुषत । अवीवृधत महो ज्यायोऽकृत । महेन्द्र इद९ हविरजुषत । अवीवृ-

( अनूयाजसूक्तवाकानामभिधानम् )

धत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुषन्त । अवीवृधन्त महो ज्यायोऽक्रत । अग्निर्होत्रेणेदꣳ हविरजुषत । अवीवृधत महो ज्यायोऽकृत "। [ ब्रा० का० ३ प्र० ५ अ० १० ] इति ।

आज्यभागदेवोऽयमग्निर्दत्तं हविरसेवत । सेवित्वा च यजमानं वर्धितवान् । तस्य च यजमानस्याधिकं तेजः कृतवान् । एवं सोमादिषु स्विष्टकृदग्निपर्यन्तेषु योज्यम् । देवताक्रमश्चात्राऽऽवाहननिगदवत् । तत्र होत्रेण होमनिमित्तेन होमस्य स्विष्टकृत्त्वं कर्तुमित्यर्थः ॥

तस्यैतस्य मन्त्रकाण्डाम्नातस्य सूक्तवाकमध्यभागस्य तात्पर्यं दर्शयति—

**तयोराविद्यग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह,** इति ।

पूर्वमाध्र्म सूक्तवाकमित्यनेन वयं वृद्धिं प्राप्ता इति स्वकीयैवाभिवृद्धिरुक्ता । इदानीमग्निरिदं हविरजुषतेत्यादिभिर्देवताविषयाऽभिवृद्धिरुच्यते । या देवता वयमयाक्ष्म वयमिष्टवन्तस्ता देवता अरीरधाम यथा राध्नुवन्ति समृद्धा भवन्ति तथाऽकार्ष्मेत्येतमेवार्थमग्निरिदमित्यादिमन्त्रवाक्यं ब्रूते ॥

सूक्तवाकस्य चरमभाग एवमाम्नातः—

" अस्यामृधद्धोत्रायां देवंगमायाम् । आशास्तेऽयं यजमानोऽसौ । आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते । उत्तरां देवयज्यामाशास्ते । भूयो हविष्करणमाशास्ते । दिव्यं धामाऽऽशास्ते । विश्वं प्रियमाशास्ते । यदनेन हविषाऽऽशास्ते । तदश्यात्तदृध्यात् । तदस्मै देवा रासन्ताम् । तदग्निर्देवो देवेभ्यो वनते । वयमग्नेर्मानुषाः । इष्टं च वीतं च । उभे च नो द्यावापृथिवी अꣳहसस्पाताम् । इह गतिर्वामस्येदं च । नमो देवेभ्यः । " [ ब्रा० का० ३ प्र० ५ अ० १० ] इति ।

अस्यां सूक्तवाकपाठपूर्विकायां होत्रायां प्रस्तरप्रहरणरूपायां होमक्रियायां देवंगमायां देवान्प्राप्नुवत्यां सत्यामृधद्वोतु यजमानः समृद्धिं प्राप्नोतु । असौ विष्णुरुद्रादिशर्मा यजमानः स्वस्याऽऽयुः प्रार्थयते, सुप्रजास्त्वं शोभनापत्ययुक्तत्वं सजातवनस्यां समानजातीयैर्वननं सेव्यत्वमात्मन इच्छतीति व्युत्पत्तिमभिप्रेत्यैतत्सजातवनस्येत्युच्यते । उत्तरा देवयज्या कालान्तरभाविनी सेयमिष्टिः । भूयो हविष्करणं प्रभूतसोमयागादिरूपम् । दिव्यं धाम स्वर्गस्थानम् । किं बहुना, विश्वं प्रियं, यद्येत्सर्वमात्मनोऽनेन हविषा प्रस्तराख्येन( ण )

१ ख. 'वदवगन्तव्यः । त° । २ क. ख. घ. ङ. 'यत्तःस° ।

यजमानः फलमाशास्ते तदश्याचत्फलं भुङ्काम् । तच्च फलमृध्यात्समृद्धमस्य भवतु । तत्सर्वमस्मै यजमानायाग्न्यादयो रासन्तां साधयन्ताम् । तत्फलमग्निर्देवो देवेभ्यः सर्वेभ्य आनीय वनते यजमानं तद्भागिनं करोति । वयं च होत्रादयो मानुषाः सन्तोऽग्नेः प्रसादात्संभावितफलं मनुष्येभ्य आनयाम इति शेषः । किं तद्दैवं मानुषं च फलमिति तदुच्यते—इष्टं च वीतं चेति । इष्टं यागनिमित्तं स्वर्गसाधनं पुण्यं यदस्ति तद्दैवं, वीतमशनखाद्यादिरूपं यदस्ति तदेतन्मानुषम् । किं त्वेते द्यावापृथिवी उभे अपि नोऽस्मानंहसः पापात्फलप्रतिबन्धकात्पातां रक्षताम् । इहास्मिन्कर्मणि वामस्य कमनीयस्य धनस्य गतिः प्राप्तिरस्तु । इदं च हविर्देवैः स्वी क्रियतामिति शेषः । नमस्कारः सर्वेभ्यो देवेभ्योऽस्तु ॥

मन्त्रगतेनासाविति पदेन यजमाननामनिर्देशो विवक्षित इत्याह—

यन्न निर्दिशेत्प्रतिवेशं यज्ञस्याऽऽशीर्गच्छेदा शास्तेऽयं यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्गं लोकं गमयति, इति ।

यद्यत्र न यजमानस्य नाम निर्दिशेत्, यज्ञसंबन्धिन्यायुरादिरूपा येयमाशीः सा प्रतिवेशं गच्छेद्यजमानप्रतिरूपकं यज्ञशालां प्रविष्टं पार्श्वस्थं यं कंचित्पुरुषं प्राप्नुयात् । असाविति नाम निर्दिशेत् । यजमानमेव स्वर्गं प्रापयति । एतमेव नामनिर्देशमभिप्रेत्यान्यत्राऽऽम्नातम्—"यर्हि होता यजमानस्य नाम गृह्णीयात्तर्हि ब्रूयादेमा अग्मन्" इति ॥

आशास्तेऽयं यजमान इत्यस्मिन्वाक्ये यदाशासनीयं संग्रहरूपेण विवक्षितं तदेवाऽऽयुरादिवाक्यैः प्रपञ्चितमित्येतद्दर्शयति—

आयुरा शास्ते सुप्रजास्त्वमा शास्त इत्याहाऽऽशिषमेवैतामा शास्ते, इति ॥

जीवात्मना सहोत्पन्नत्वात्प्राणाः सजातशब्देन विवक्षिता इत्येतद्दर्शयति—

सजातवनस्यामा शास्त इत्याह प्राणा वै सजाताः प्राणानेव नान्तरेति, इति ।

सजातशब्दाभिधेयैः प्राणैर्वननस्य संभजनस्य प्रार्थ्यमानत्वात्प्राणानामन्त-

---

१ ख.° मानो यत्फल° । २ ख. इत्येतद्दर्शयति ।

(अनूयाजसूक्तवाकानामभिधानम्)

रायं न करोति। एतैश्च प्राणैरितरेऽपि सेवका उपलक्षिताः। अतः पूर्वोक्तं मन्त्रव्याख्यानमविरुद्धम्॥

देवसकाशान्मनुष्यसकाशाच्च फलमग्नौ होतरि व्यवस्थितमित्येतादृशमभिप्रायं दर्शयति—

तदग्निर्देवो देवेभ्यो वनते वयमग्ने-
र्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं
मनुष्येभ्य इति वावैतदाह, इति।

दिव्या मानुषाश्च भोगा विवक्षिता इत्यर्थः॥

इह कर्मणि हविर्भिरसत्कृता अपि देवा नमस्कारेण सत्कृता भवन्तीत्येतद्दर्शयति—

इह गतिर्वामस्येदं च नमो देवेभ्य इत्याह
याश्चैव देवता यजति याश्च न ताभ्य एवोभ-
यीभ्यो नमस्करोत्यात्मनोऽनार्त्यै॥, इति॥

उभयविधदेवप्रसादात्स्वस्याऽऽर्तिर्न भवेदिति॥

अत्र मीमांसा।

(+दशमाध्यायस्य चतुर्थपादे चिन्तितम्—

"अनूयाजोऽन्तिमो योऽसौ किमारादुपकारकः।
स्विष्टकृत्संस्कृतिर्वाऽऽद्योऽनूयांजान्तरसाम्यतः॥
स्विष्टकृत्त्वगुणस्याग्नेः प्रत्यभिज्ञार्थवत्त्वतः।
दृष्टार्थत्वाच्च संस्कारो भवेदन्त्यप्रयाजवत्॥"

दर्शपूर्णमासयोस्त्रयोऽनूयाजाः समाम्नाताः। तत्र प्रथमद्वितीयानूयाजवत्तृतीयोऽप्यारादुपकारक इति पूर्वपक्षः।•अस्ति प्रधानहोमनारिष्ठहोमानन्तरभावी प्राशित्रादिभक्षणात्प्राचीनः पुरोडाशादिद्रव्यकः स्विष्टकृद्धोमः, सर्वेषां हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यतीत्यादिना तदभिधानात्। प्राशित्रादिभक्षणोत्तरकालीनेष्वाज्यद्रव्यकेष्वनूयाजेषु तृतीये स्विष्टकृत्त्वगुणेन प्रत्यभिज्ञाऽस्ति, देवो अग्निः स्विष्टकृदिति मन्त्रपाठात्। सा च पूर्वस्विष्टकृद्देवतास्मरणसंस्कारे सत्यर्थवती स्यात्। प्रथमद्वितीययोस्तु नास्ति सेति वैषम्यम्।

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः।

किंच, संस्कारपक्षे दृष्टार्थस्तृतीयः स्यात् । तस्मादन्त्यप्रयाजवदन्त्योऽनूयाजः स्यात् । )

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः ।
अङ्गाङ्गिता वा स्यात्कालोऽजुषतेत्याद्यनन्वयात् ॥
प्रहृतेरिष्टदेवार्थसंस्कारत्वात्तदन्वयः ।
संपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥ "

दर्शपूर्णमासयोराम्नायते—"सूक्तवाकेन प्रस्तरं प्रहरति" इति । "इदं द्यावापृथिवी" इत्यादिर्मन्त्रः सूक्तवाकः । तस्मिन्मन्त्रेऽग्निं संबोध्य त्वं सूक्तवागसीत्याम्नानात् । प्रस्तरो दर्भमुष्टिस्तस्य प्रहरणमग्नौ प्रक्षेपः । तत्र सूक्तवाकेनेत्येतत्पदं कालं लक्षयति । होत्राऽस्मिन्मन्त्रे पठ्यमाने तत्पाठकालेऽध्वर्युः प्रस्तरं प्रहरेत् । न त्वत्र प्रहरणे मन्त्रोऽयं विनियोक्तुं शक्यः, पूर्वोक्तप्रैषमन्त्रवदत्रान्वयाभावात् । "अग्निरिदं हविरजुषत । अवीवृधत महो ज्यायोऽकृत ।" इत्यादिकं मन्त्रे पठ्यते । पुरोडाशसेवयाऽभिवृद्धोऽग्निस्तस्मिन्यजमाने तेजोबाहुल्यं कृतवानिति तस्यार्थः । न चासौ प्रस्तरप्रहरणेऽन्वेतुं शक्य इति प्राप्ते ब्रूमः—सूक्तवाकेनेति तृतीयाश्रुत्या प्रहरणे मन्त्रो विनियुज्यते । न चात्यन्तमन्वयाभावः । मन्त्रो ह्ययं पूर्वमिष्टानग्न्यादिदेवाननुस्मारयति । प्रस्तरप्रहरणं चेष्टदेवतासंस्कारः । अतो देवताद्वारा मन्त्रप्रहरणयोरन्वयान्मन्त्रो विनियुज्यते । ननु प्रहरणं नाम प्रक्षेपमात्रं, न तु देवतोद्देशेन प्रक्षेपः, यजिधातोरश्रवणात् । तथा सति देवतानामत्राभावात्तद्द्वाराऽपि नान्वय इति चेन्मैवम् । देवतानां सद्भावात्[१] । अग्न्यादिदेवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या प्रस्तरप्रहरणाङ्गत्वं बोध्यते । यदि प्रहरणेऽग्न्यादयो देवता भवेयुस्तदा तत्प्रकाशने दृष्टोऽर्थो मन्त्रस्य लभ्येत । ततो देवताप्रकल्पने तदुद्देशपूर्वकस्य प्रक्षेपस्य[३] यागत्वं सिध्यति । तस्माद्देवताद्वाराऽस्त्येवान्वयः ।

तत्रैवान्यच्चिन्तितम्—

"प्रस्तरेऽखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा ।
समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता नहि ॥
दर्शपूर्णिमयोर्देवाननुसृत्य विभज्यताम् ।
आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥ "

---

१ क. घ. ङ. च. 'दस्यान्व' । २ घ. ङ. 'त् । विधिनाऽन्न्या' । ३ क. घ. ङ. प्रहरणस्य प्रक्षेपात्मना या' ।

(अनूयाजसूक्तवाकानामभिधानम्)

पूर्वोदाहृते[1] मन्त्रे सूक्तवाकसमाख्या कृत्स्न[3]मन्त्रविषया याज्ञिकैः कृत्स्ने तच्छब्दप्रयोगात् । ततः सर्वोऽपि प्रहरणाङ्गमिति चेन्न । लिङ्गेन समाख्याया बाधितत्वात् । तस्मिन्मन्त्रे पूर्णमासदेवताम्नानं कस्मिंश्चिद्भागे दृश्यते—"अग्नीषोमाविद२ँ हविरजुषेताम्" इति । भागान्तरे तु दर्शदेवताम्नानम्—"इन्द्राग्नी इद२ँ हविरजुषेताम्" इति, "इन्द्र इद२ँ हविरजुषत" इति, "महेन्द्र इद२ँ हविरजुषत" इति च । इन्द्राग्नीन्द्रमहेन्द्राः पुरुषभेदेन दर्शे व्यवस्थिताः । तथा सति मन्त्रलिङ्गेन तत्तद्भागे[4] एव तत्तत्काले व्यवतिष्ठते । सूक्तवाकशब्दश्च भागे यौगिकः सूक्तं वक्तीति तद्व्युत्पत्तेः । यागकाले तत्तन्मन्त्रेण सम्यगुक्तं देवं वक्तीत्यर्थः । अत एव ब्राह्मणेन व्याख्यातम्—"अग्निरिद२ँ हविरजुषतेत्याह या अयाक्ष्म देवतास्ता अरीरधामेति वावैतदाह" इति । अरीरधामाऽऽराधितां(ता)स्तुष्टान(अ)कुर्मेत्यर्थः । तस्मा[5]दयं विभज्य विनियुज्यते ।

(+तत्रैव तृतीये चिन्तितम्—

"अग्नीषोमाविदं हव्यमजुषेतामितीरितात् ।
अपच्छिद्येदमित्यादिः सर्वशेषो भवेन्न वा ॥
प्रक्रियातो भवेन्मैवं प्रक्रियाऽन्तरिता त्रिभिः ।
वाक्यं द्व्यन्तरितं तेन भवेत्प्रकरणाद्बलि ॥"

सूक्तवाके श्रूयते—"अग्नीषोमाविद२ँ हविरजुषेताम् । अवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्राग्नी इद२ँ हविरजुषेताम्" इत्यादि । तत्र देवतावाचकमग्नीषोमादिपदं पौर्णमास्यादिकाले यथादैवतं विभज्य प्रयोज्यमिति पूर्वपादे निर्णीतम् । यत्त्विदं हविरित्यादिकमवशिष्टं पदजातं तदग्नीषोममन्त्रगतमप्यमावास्यायामग्नीषोमपदपरित्यागेन पठनीयम् । एवमिन्द्राग्निमन्त्रगतमपि पौर्णमास्यामिन्द्राग्निपदपरित्यागेन पठनीयम् । तथा सत्येषां मन्त्रभागानां (णां) सर्वशेषत्वबोधको दर्शपूर्णमासप्रकरणपाठोऽनुगृह्यत इति प्राप्ते ब्रूमः—अग्नीषोममन्त्रशेषस्येन्द्राग्निपदान्वयाश्रवणात् । प्रकरणेन प्रथमं तदन्वयरूपं वाक्यं कल्पनीयम् । तेन च वाक्येनेन्द्रादिप्रकाशनसामर्थ्यरूपं लिङ्गं कल्प्यते । तच्च लिङ्गमनेन मन्त्रभागेने(णे)न्द्राग्निविषया क्रियाऽनुष्ठेयेति विनियोजिकां तृतीयाश्रुतिं कल्पयति । ततः प्रकरणविनियोजकयोर्मध्ये त्रिभिर्व्यवधानं

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थः ख. च. पुस्तकयोर्नास्ति ।

---

१ क. घ. ङ. °तेऽत्र सू° । २ क. घ. ङ. °वाके स° । ३ क. घ. ङ. °त्स्नवि° । ४ ख. °गवांस्तत्र° । ५ क. घ. ङ. °स्मादुभयं ।

भवति। अग्नीषोमपदान्वयरूपं तु वाक्यं श्रूयमाणत्वाल्लिङ्गश्रुतिभ्यामेव व्यवधीयते। तस्माद्वाक्येन प्रकरणस्य बाधितत्वात्तत्तच्छेषस्तत्र तत्र व्यवतिष्ठते।)

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

"यजमानो नोहितव्य ऊह्यो वा नहि पूर्ववत्।
मन्त्रः फलप्रधानोऽत ऊह्यः सर्वफलित्वतः॥"

दर्शपूर्णमासयोः "सूक्तवाकेन प्रस्तरं प्रहरति" इति प्रहरणकरणत्वेन विनियुक्ते सूक्तवाकमन्त्रे वाक्यमेतदाम्नायते—"अयं यजमान आयुराशास्ते" इति। तत्र पूर्वोक्तयज्ञपतिशब्दवत्सत्रेषु यजमानशब्दो नोहितव्य इति चेन्न। वैषम्यात्। तथा हि—सर्वत्र प्रकरणे मन्त्रो द्विविधः—क्रियाप्रकाशकः फलप्रकाशकश्चेति। पूर्वोदाहृतो मन्त्र इडोपाह्वानक्रियाप्रकाशकः। उपहूतꣳ रथंतरꣳ सह पृथिव्येत्यनुवाके तदुपाह्वानमन्त्ररूपे सर्वस्मिन्नपि तदवभासात्। "इडोपहूता। उपहूतेडा। उपो अस्माꣳ इडा ह्वयताम्। इडोपहूता। उपहूतेडा। दैव्या अध्वर्यव उपहूताः।" इत्यादिभिरवान्तरवाक्यैरुपाह्वानक्रियाया एव प्राधान्यावभासात्तन्मध्यपतितं त्वेकमेव यज्ञपतिवाक्यं वृद्धिरूपं फलं गमयतीति न तस्य स्वार्थो विवक्षितः। सूक्तवाकमन्त्रस्तु फलमेव प्रकाशयति न तु प्रहरणक्रियाम्। "इदं द्यावापृथिवी भद्रमभूत्" इत्येतस्मिन्ननुवाके सूक्तवाकमन्त्रे सर्वस्मिन्नपि फलावभासात्। "अयं यजमान आयुराशास्ते सुप्रजास्त्वमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते" इत्यादिभिः सर्वैरप्यवान्तरवाक्यैः फलस्यैवावभासनात्। तस्माद्विवक्षितं फलं, फलिनश्च सर्वे यजमानाः। ततः सर्वेषां फलसिद्धये यजमानशब्दो बहुवचनान्तत्वेन सर्वेषु सत्रेषूहनीयः।

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

"सूक्तवाकाशासनं स्यान्न वा नित्यप्रवृत्तितः।
स्यान्नैवं फलनिर्देशात्फलेच्छाऽस्थ्रां न युज्यते॥"

"इदं द्यावापृथिवी" इत्यादिः सूक्तवाको होत्रा पठ्यते। तत्रैवं श्रूयते—"आशास्तेऽयं यजमानोऽसौ। आयुराशास्ते" इत्यादि। तत्र सूक्तवाकगतो योऽयं यजमानाशासनप्रतिपादको मन्त्रभागस्तमस्थियज्ञे होता पठेन्न वेति संशयः। अस्थियज्ञगतायाः प्रायणीयादेरिष्टेः प्रस्तरप्रहरणमङ्गं, तस्य नित्यत्वात्तस्मिन्विनियुक्तस्य सूक्तवाकमन्त्रस्य नित्यप्रयुक्ततया तद्भागपाठोऽपि स्यादिति पूर्वः पक्षः। यथा स्वर्गकाम इत्यत्र कामियोगेन स्वर्गस्य साध्यता-

प्रतीतः स्वर्गशब्देन फलनिर्देशः, एवमाशासनयोगादायुरादिशब्दैः फलं निर्दिश्यते। फलेच्छा चास्यां न युक्ता। तस्मात्तद्भागपाठो बाध्यते।

तत्रैवान्यच्चिन्तितम्—

"मृतेः प्रागायुराशीर्नो स्याद्वा नो मृतिकामनात्।
प्रागाभवाज्जीवनार्थमायुराशासनं भवेत्॥"

होत्रा पठितव्ये सूक्तवाके योऽयमायुरा शास्त इति भागो यजमानविषयः स किं सर्वस्वारे यजमानमरणात्पूर्वं वर्जनीयः पठितव्यो वेति संशयः। मुमूर्षोर्यजमानस्याऽऽयुर्निरपेक्षत्वेनार्थलोपाद्वर्जनीय इति पूर्वः पक्षः। आर्भवाख्यस्य पवमानस्य स्तूयमानत्वं यजमानस्य मरणकालः। ततः पूर्वं जिजीविषुत्वात्पठनीयः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः॥ ९॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके दशमोऽनुवाकः। )

देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन्ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याऽऽशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्येतन्ममेत्यब्रवीत्किं मे प्रजायाः (१) इति योऽपगुरातै शतेन यातयाद्यो निहनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पाꣳसून्त्संगृह्णात्तावतः संवत्सरान्पितृलोकं न प्र

जानादिति तस्माद्ब्राह्मणाय नापं गुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति तच्छंयोरा वृणीमह इत्याह यज्ञमेव तत्स्वगा करोति तत् (२) शंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति गातुं यज्ञाय गातुं यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रियते (३) यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय पङ्क्तिप्रा- यणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिम- नूद्यन्ति (४) ॥

(प्रजायाः करोति तत्क्रियते त्रयस्त्रिꣳशच्च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( सूक्तवाकमन्त्रव्याख्यापत्नीसंयाजानामभिधानम् )

( अथ द्वितीयाष्टके षष्ठप्रपाठके दशमोऽनुवाकः । )

देवाः । वै । यज्ञस्यं । स्वगाकर्तारमितिं स्वगा—कर्तारंम् । न । अविन्दन् । ते । शंयुमितिं शं—युम् । बार्हस्पत्यम् । अब्रुवन् । इमम् । नः । यज्ञम् । स्वगेतिं स्व—गा । कुरु । इतिं । सः । अब्रवीत् । वरंम् । वृणे । यत् । एव । अब्राह्मणोक्त इत्यब्राह्मण-उक्तः । अश्रंद्दधान इत्यश्रंत्—दधानः । यजांते । सा । मे । यज्ञस्यं । आशीरित्यां—शीः । असत् । इतिं । तस्मांत् । यत् । अब्राह्मणोक्त इत्यब्राह्मण—उक्तः । अश्रंद्दधान इत्यश्रंत्—दधानः । यजंते । शंयुमितिं शं—युम् । एव । तस्यं । बार्हस्पत्यम् । यज्ञस्यं । आशीरित्यां—शीः । गच्छति । एतत् । ममं । इतिं । अब्रवीत् । किम् । मे । प्रजाया इतिं प्र—जायांः ( १ ) । इतिं । यः । अपगुराता इत्यंप—गुरातैं । शतेनं । यातयात् । यः । निहन-दितिं नि—हनंत् । सहस्रेंण । यातयात् । यः । लोहिं-तम् । करवंत् । यावंतः । प्रस्कद्येतिं प्र—स्कद्यं । पांसून् । संगृह्णादितिं सं—गृह्णात् । तावं-तः । संवत्सरानितिं सं—वत्सरान् । पितृलोकमितिं पितृ—लोकम् । न । प्रेतिं । जानात् ।

इति॑ । तस्मा॑त् । ब्राह्मणाय॑ । न । अपेति॑ । गु॒रेत । न । नीति॑ । ह॒न्यात् । न । लोहि॑तम् । कु॒र्या॒त् । ए॒ताव॑ता । ह॒ । एन॑सा । भ॒व॒ति॒ । तत् । शं॒यो॒रिति॑ शं—योः । एति॑ । वृ॒णी॒म॒हे॒ । इति॑ । आ॒ह॒ । य॒ज्ञम् । ए॒व । तत् । स्व॒गेति॑ स्व—गा । क॒रो॒ति॒ । तत् ( २ ) । शं॒योरिति॑ शं—योः । एति॑ । वृ॒णी॒म॒हे॒ । इति॑ । आ॒ह॒ । शं॒युमिति॑ शं—युम् । ए॒व । बा॒र्ह॒स्प॒त्यम् । भा॒ग॒धेये॒नेति॑ भाग—धेये॑न । समिति॑ । अ॒र्ध॒य॒ति॒ । गा॒तुम् । य॒ज्ञाय॑ । गा॒तुम् । य॒ज्ञप॑तय॒ इति॑ य॒ज्ञ—प॒त॒ये॒ । इति॑ । आ॒ह॒ । आ॒शि॒ष॒मित्या॑—शिष॑म् । ए॒व । ए॒ताम् । एति॑ । शा॒स्ते॒ । सोम॑म् । य॒ज॒ति॒ । रेत॑ः । ए॒व । तत् । द॒धा॒ति॒ । त्वष्टा॑रम् । य॒ज॒ति॒ । रेत॑ः । ए॒व । हि॒तम् । त्वष्टा॑ । रू॒पाणि॑ । वीति॑ । क॒रो॒ति॒ । दे॒वाना॑म् । पत्नी॑ः । य॒ज॒ति॒ । मि॒थु॒न॒त्वायेति॑ मिथुन—त्वाय॑ । अ॒ग्निम् । गृ॒ह॒प॑तिमिति॑ गृह—प॒तिम् । य॒ज॒ति॒ । प्रति॑ष्ठित्या॒ इति॒ प्रति॑—स्थि॒त्यै॒ । जा॒मि॒ । वै॒ । ए॒तत् । य॒ज्ञस्य॑ । क्रि॒य॒ते॒ ( ३ ) । यत् । आज्ये॑न । प्र॒या॒जा इति॑ प्र—या॒जाः । इ॒ज्यन्ते॑ । आज्ये॑न । प॒त्नी॒सं॒या॒जा इति॑ पत्नी—सं॒या॒जाः । ऋच॑म् । अ॒नू॒च्येत्य॑नु—उच्य॑ ।

पत्नीसंयाजानामिति पत्नी—संयाजानाम् । ऋचा । यजति । अजामित्वायेत्यजामि—त्वाय । अथो इति । मिथुनत्वायेति मिथुन—त्वाय । पङ्क्तिप्रायण इति पङ्क्ति—प्रायणः । वै । यज्ञः । पङ्क्त्युदयन इति पङ्क्ति—उदयनः । पञ्च । प्रयाजा इति प्र—याजाः । इज्यन्ते । चत्वारः । पत्नीसंयाजा इति पत्नी—संयाजाः । समिष्टयजुरिति समिष्ट—यजुः । पञ्चमम् । पङ्क्तिम् । एव । अन्विति । प्रयन्तीति प्र—यन्ति । पङ्क्तिम् । अनु । उदिति । यन्ति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः । )

---

अनूयाजाः सूक्तवाकव्याख्या नवम ईरिताः ॥
अथ दशमे शंयुवाकमन्त्रव्याख्या पत्नीसंयाजाश्च वक्ष्यन्ते ।
तत्र शंयुवाकमन्त्रान्व्याख्यातुं प्रस्तौति—

देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन्ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याऽऽशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्येतन्ममे- त्यब्रवीत्किं मे प्रजाया इति योऽपगुरातै

शतेन यातयाद्यो निहनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पाꣳसून्संगृह्णा-त्तावतः संवत्सरान्पितृलोकं न प्र जानादिति तस्माद्ब्राह्मणाय नाप गुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति, इति।

यस्मै देवाय यद्धविर्विहितं तस्य हविषः सांकर्यमन्तरेण तस्य तस्य देवस्य स्वगतं कुर्विति बृहस्पतिपुत्रं शंयुनामानं प्रति देवा अब्रुवन्। तदाऽसौ शंयुर-प्येवं चिन्तितवान्—एतत्काम एतेन यज्ञेन यजेतेत्येतादृशेन[2] ब्राह्मणेनानुक्तो यः कश्चिद्यजेत स्वेच्छयैव, यश्चान्यः श्रद्धारहितो यजते, तयोरुभयोर्यज्ञफलं ममा-स्त्विति वरः। तत आरभ्य तत्फलद्वयं शंयुमेव प्राप्नोति। पुनरपि शंयुरेवमुवाच—तदेतदुभयं मम संपन्नं, मदीयायाः पुत्रपौत्रादिरूपायाः प्रजायाः किं दास्य-तेति। ततो देवा अपगोरणादिकर्तुर्यातना त्वत्पुत्राधीना भवत्विति वरं दत्त-वन्तः। अपगोरणं ताडनोद्योगः। तमुद्योगं ब्राह्मणविषये यः करोति तं पुरुषं शतनिष्कदण्डेन यातयात्क्लेशयेत्। यो निहनत्ताडयेत्तं सहस्रनिष्कदण्डेन क्लेशयेत्। यस्तु ब्राह्मणशरीरे लोहितं ताडनेन ग्राहयति, लोहितं भूमौ पतित्वा यावतः परमाणून्व्याप्नोति तावतः संवत्सरानयं पितृलोकं न प्राप्नोति, किं तु यमयातनामनुभवति तत्सर्वं त्वत्प्रजाधीनमिति वरः। यस्मादुक्तरीत्या ब्राह्म-णाधिक्षेपादौ प्रत्यवायोऽस्ति तस्मात्तन्न कुर्यात्। करणे चैतावता पूर्वोक्तपापेन युक्तो भवति॥

यस्य शंयुवाकस्य व्याख्यानायायं प्रस्तावः कृतस्तस्य शंयुवाकमन्त्रस्य विनियोगं बौधायन आह—" यद्य[3]ऽनुजानाति शंयोरनुब्रूहीति तच्छंयुवाक-मन्वाह तच्छंयोरावृणीमह इत्येतदनुवाकस्य " इति। स चानुवाको मन्त्र-काण्डे समाम्नातः—

" तच्छंयोरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शं नो अस्तु द्विपदे। शं चतुष्पदे "[ ब्रा० का० ३ प्र० ५ अ० ११ ] इति।

तत्तादृशं प्रशस्तं फलं शंयोर्बार्हस्पत्यादावृणीमहे प्रार्थयामहे। किं तत्फल-मिति क्रमेणोच्यते—यज्ञाय गातुं यज्ञस्य देवान्प्रति गमनमावृणीमहे। यज्ञपतये यजमानस्य गातुं देवान्प्रति गमनमावृणीमहे। नोऽस्माकं दैवी स्वस्तिर्देवनि-

१ क. घ. ङ. च. स्वागतं। २ ख. °न विधायकेन ब्रा°। ३ ख. च. °यो ऽनु°।

(सूक्तवाकमन्त्रव्याख्यापत्नीसंयाजानामभिधानम्)

मित्तं विघ्नोपशमनं मानुषेभ्यः स्वस्तिर्विघ्नोपशमनमस्तु। भेषजं सर्वपापानामौषधमिदं कर्मोर्ध्वं जिगातु अविघ्नेन समाप्तिं प्राप्नोतु। अस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे च शं सुखमस्तु॥

तस्यैतस्य मन्त्रस्य पाठं प्रशंसति—

तच्छंयोरा वृणीमह इत्याह यज्ञमेव तत्स्वगा करोति, इति।

तत्रानेन मन्त्रपाठेनेमं यज्ञं तत्तद्देवानामसांकर्येण स्वगतं करोति॥

प्रकारान्तरेण पुनः प्रशंसति—

तच्छंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति, इति।

मन्त्रवाक्यपाठ एवास्य दातव्यो भागस्तत्तुष्टिहेतुत्वात्॥

आशीःपरत्वं मन्त्रभागस्य दर्शयति—

गातुं यज्ञाय गातुं यज्ञपतय इत्याहाऽऽशिषमेवैतामा शास्ते, इति॥

अथ चतुरः पत्नीसंयाजान्विधत्ते—

सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै, इति॥

एतेषां चतुर्णां पत्नीसंयाजानां प्रत्येकं याज्यानुवाक्ये विधत्ते—

जामि वा एतद्यज्ञस्य क्रियते यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय, इति।

प्रयाजानां पत्नीसंयाजानां च तावद्द्रव्यकृतं वैषम्यं नास्ति, मन्त्रकृतमपि

---

१ ख. °अपा°। २ ख. प्रशंसति। ३ क. घ. ङ. च. °जानामनूयाजानां ता°। ४ क. घ. ङ. च. नास्तीति। अत्रापि।

यदि न स्यात्तदानीमालस्यं भवति, तत्परिहाराय प्रयाजेषु यजुर्भिरिष्टेषु पत्नीसंयाजा ऋग्भ्यां याज्यानुवाक्याभ्यां यष्टव्याः ॥

ते च याज्यानुवाक्ये क्रमेण मन्त्रकाण्डे समाम्नाते । तद्विनियोगं बौधायनो दर्शयति—" अथ पत्नीसंयाजानामा प्यायस्व सं त इति सौम्यस्येह त्वष्टारमग्रियं तन्नस्तुरीपमिति त्वष्टुर्देवानां पत्नीरुत ग्ना वियन्तु देवपत्नीरिति देवपत्नीनामग्निर्होता गृहपतिः स राजा वयमु त्वा गृहपते जनानामिति गृहपतेः " इति । तत्र सोमस्य त्वष्टुश्चान्यत्राऽऽम्नातानां मन्त्राणां प्रतीकान्याम्नायन्ते—

" आ प्यायस्व सं ते । इह त्वष्टारमग्रियं तन्नस्तुरीपम्" [ ब्रा० का० ३ प्र० ५ अ० १२ ] इति ।

आ प्यायस्व समेतु त इत्येषा सोमस्य पुरोनुवाक्या । सं ते पयाꣳसीति सोमस्य याज्या । एतदुभयं चतुर्थकाण्डस्य द्वितीयप्रपाठके व्याख्यास्यते । इह त्वष्टारमिति त्वष्टुः पुरोनुवाक्या । तन्नस्तुरीपमिति याज्या । एतच्चोभयं तृतीयकाण्डस्य प्रथमप्रपाठके व्याख्यास्यते ॥

देवपत्नीपुरोनुवाक्यां[1] दर्शयति—

" देवानां पत्नीरुशतीरवन्तु नः । प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते । ता नो देवीः सुहवाः शर्म यच्छत । " [ब्रा० का० ३ प्र० ५ अ० १२ ] इति ।

इन्द्राण्यादयो देवपत्न्यो याः सन्ति ता उशतीरस्मद्धितं कामयमाना अस्मानवन्तु रक्षन्तु परैरापादितमरिष्टं वारयन्त्वित्यर्थः । किं च, तुजयेऽपत्याय वाजसातये द्रव्यलाभाय नोऽस्मान्प्रकर्षेण रक्षन्तु । न केवलं दिवि स्थिता इन्द्राण्याद्याः किं तु याः पार्थिवासः पृथिव्यां स्थिता देवपत्न्यो या अप्यन्या अपां व्रते वृष्ट्युदकस्थानत्वेनोपलक्षितेऽन्तरिक्षे वर्तन्ते ता देव्यः सर्वाः सुहवाः सुखेनाऽऽह्वातुं शक्या यूयं नोऽस्माकं शर्म सुखं प्रयच्छत ॥

तत्रैव याज्यामाह—

"उत ग्ना वियन्तु देवपत्नीः । इन्द्राण्यग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु । वियन्तु देवीर्य ऋतुर्जनीनाम् । " [ ब्रा० का० ३ प्र० ५ अ० १२ ] इति ।

अपि च, ग्नाश्छन्दोदेवता गायत्र्यादयो देवपत्न्यो वियन्त्विदं हविरश्नन्तु । ग्नाशब्दस्य च्छन्दोवाचित्वं पञ्चमकाण्डे समाम्नातम्—" ग्नास्त्वेत्याह

१ ख. °त्नीनां पु° ।

( सूक्तवाकमन्त्रव्याख्यापत्नीसंयाजानामभिधानम् )

छन्दा४ंसि वै ग्नाः " इति । इन्द्रस्य पत्नीन्द्राणी । अग्नेः पत्न्यग्नायी। अश्विनोः पत्न्यश्विनी । राज्ञः सोमस्य पत्नी राट् । रुद्रस्य पत्नी रोदसी। वरुणस्य पत्नी वरुणानी । एतासामेकैका विज्ञापनामस्मदीयामा-शृणोतु। जनीनामिन्द्राण्यादीनां य ऋतुः कालविशेषो भोजनायोचितस्तस्मि-न्काले वियन्त्वश्नन्तु। सोमत्वष्ट्रोः पुरुषयोर्भुक्तवतोः सतोः पश्चाद्भुञ्जतामित्यर्थः॥

अग्नेर्गृहपतेः पुरोनुवाक्यामाह—

" अग्निर्होता गृहपतिः स राजा । विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानाम्। यजिष्ठः स प्रयजतामृतावा। " [ ब्रा० का० ३ प्र० ५ अ० १२ ] इति।

अयमग्निर्देवानामाह्वाता गृहाणां पालकः। स च राजा दीप्यमानस्तादृशो जातवेदा देवानां विश्वा जनिमा सर्वाणि जन्मानि वेद। अपि च, यो जात-वेदा मर्त्यानां जन्मानि वेद स जातवेदाः प्रयजतां प्रकर्षेण यागं कुर्वतां मध्ये यजिष्ठोऽतिशयेन यष्टृतमः। ऋतावा सत्यवाक्॥

तत्रैव याज्यामाह—

" वयमु त्वा गृहपते जनानाम् । अग्ने अकर्म समिधा बृहन्तम्। अस्थूरि णो गार्हपत्यानि सन्तु। तिग्मेन नस्तेजसा स४ंशिशाधि। " [ ब्रा० का० ३ प्र० ५ अ० १२ ] इति।

हे गृहपतेऽग्ने जनानां मध्ये वयमेव त्वां समिधा संदीपनेन बृहन्तमकर्म प्रौढं कृतवन्तः। तस्माद्गार्हपत्यानि गृहपतिना संयुक्तानि कर्माणि नोऽस्माक-मस्थूरि सन्त्वाश्लिष्टानि भवन्तु । तिग्मेन तीक्ष्णेन वैरिभिरप्रधृष्येण तेजसा त्वमस्मान्संशिशाधि तीक्ष्णी कुरु निर्भयान्कुर्वित्यर्थः॥

मन्त्रकाण्डे पत्नीसंयाजयाज्यानुवाक्याभ्यामुपरिष्टादिडोपाह्वानमाज्यप्राशनं चाऽऽम्नातम्। तस्य विनियोगं बौधायनो दर्शयति—" अत्रोत्तरामिडामुप-ह्वयते यथासमाम्नातम्" इति।

पाठस्तु—

" उपहूत४ं रथंतर४ं सह पृथिव्या। उप मा रथंतर४ं सह पृथिव्या ह्वय-ताम्। उपहूतं वामदेव्य४ं सहान्तरिक्षेण । उप मा वामदेव्य४ं सहान्तरिक्षेण ह्वयताम्। उपहूतं बृहत्सह दिवा। उप मा बृहत्सह दिवा ह्वयताम्। उपहूताः

---

१ ख. °वान्। त°। २ ख. सन्त्वक्षीणानि। ३ ख. °ज्यापुरोनुवाक्यानाम्° । ४ ख. °शनायाऽऽम्ना°।

सप्त होत्राः। उप मा सप्त होत्रा ह्वयन्ताम्। उपहूता धेनुः सहर्षभा। उप मा धेनुः सहर्षभा ह्वयताम्। उपहूतो भक्षः सखा। उप मा भक्षः सखा ह्वयताम्। उपहूता३ऽ हो। इडोपहूता। उपहूतेडा। उपो अस्माँ इडा ह्वयताम्। इडोपहूता। उपहूतेडा। मानवी घृतपदी मैत्रावरुणी। ब्रह्म देवकृतमुपहूतम्। दैव्या अध्वर्यव उपहूताः। उपहूता मनुष्याः। य इमं यज्ञमवान्। ये यज्ञपत्नीं वर्धान्। उपहूते द्यावापृथिवी। पूर्वजे ऋतावरी। देवी देवपुत्रे। उपहूतेयं यजमाना। इन्द्राणीवाविधवा। अदितिरिव सुपुत्रा। उत्तरस्यां देवयज्यायामुपहूता। भूयसि हविष्करण उपहूता। दिव्ये धामन्नुपहूता। इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूता। विश्वमस्याः प्रियमुपहूतम्। विश्वस्य प्रियस्योपहूतस्योपहूता।" [ ब्रा० का० ३ प्र० ५ अ० १३ ] इति।

पूर्वोक्तमिडोपाह्वानं यजमानार्थम्। इदं तु पत्न्यर्थम्। अत एव तत्र तत्र स्त्रीलिङ्गप्रयोगः। ब्राह्मणे पत्नीसंयाजयाज्यानुवाक्ये विधायेडोपाह्वानमन्त्रस्य पूर्ववद्व्याख्येयत्वादसावत्रोपेक्षितः॥

अथ समिष्टयजुर्विधिमर्थवादेनोन्नयति—

पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः
पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसं-
याजाः समिष्टयजुः पञ्चमं पङ्क्तिमे-
वानु प्रयन्ति पङ्क्तिमनूद्यन्ति॥, इति॥

पञ्चाक्षरा पङ्क्तिरित्यन्यत्र श्रुतत्वादत्र पङ्क्तिशब्देन पञ्चसंख्या लक्ष्यते। सेयं पङ्क्तिः प्रायणे प्रारम्भे यस्य सोऽयं पङ्क्तिप्रायणो यागः। पङ्क्तिरुदयने समाप्तौ यस्य सोऽयं पङ्क्त्युदयनः। अत्र दर्शपूर्णमासेष्टौ प्रारम्भे पञ्च प्रयाजा इज्यन्ते समाप्तौ पत्नीसंयाजाश्चत्वारः समिष्टयजुः पञ्चमम्। तथा सति पङ्क्तिमेव प्रारभन्ते पङ्क्तिमेव संपादयन्ति। तस्मात्समिष्टयजुर्जुहुयादिति तात्पर्यार्थः। देवा गातुविद इत्ययं मन्त्र इष्टिसंपूर्तिकारित्वात्समिष्टयजुरित्युच्यते। स च मन्त्र आध्वर्यवकाण्डे समाम्नातो व्याख्यातश्च॥

अत्र मीमांसा।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

"विप्रायावगुरेन्नेति क्रत्वर्थो वा पुमर्थता।
फलवत्क्रतुसांनिध्यात्क्रत्वर्थः पूर्वमन्त्रवत्॥

(सूक्तवाकमन्त्रव्याख्यापत्नीसंयाजानामभिधानम्)

यातनापरिहारस्य निषेधफलतोचिता।
निषेधोऽयं पुमर्थत्वात्प्रक्रियातोऽपकृष्यताम्॥"

दर्शपूर्णमासप्रकरणे श्रूयते—"यो ब्राह्मणायावगुरेत्तं शतेन यातयात्तस्माद्ब्राह्मणाय नावगुरेत्" इति। तत्र यथा पूर्वाधिकरणे मन्त्रपाठस्य फलरहितस्य फलवति क्रतावङ्गत्वं प्रकरणेनावगम्यते, एवमत्रापि ब्राह्मणावगूर्णानिषेधस्य क्रतावश्रुतत्वादिति चेन्मैवम्। वैषम्यात्। पूर्वत्र ह्यात्मप्राणापानधारणं मन्त्रोच्चारणफलं न संभवति तस्य प्रागेव सिद्धत्वात्। इह त्ववगोरणे शतसंवत्सरयातनामुपन्यस्यावगोरणनिषेधाद्यातनापरिहारस्य निषेधफलत्वमुचितम्। तस्मान्निषेधस्य केवलपुरुषार्थतया प्रकरणादपकर्षो युक्तः॥

तत्रैव तृतीयपादे चिन्तितम्—

"संयाजयन्ति जाघन्या पत्नीरेतत्पशावुत।
दर्शादौ तत्पशौ युक्तं जाघन्याः समवायतः॥
जाघनी नाम भागोऽसौ दर्शादौ समवैति हि।
नोत्कृष्टव्यं न संस्कार्यसाधनत्वात्तृतीयया॥"

दर्शपूर्णमासप्रकरणे श्रूयते—"जाघन्या पत्नीः संयाजयन्ति" इति। जाघनी पशोः पुच्छम्। पत्नीशब्दोऽत्राऽऽहुतिचतुष्टयात्मकस्य कर्मणो नामधेयैकदेशः। अत एव श्रूयते—"पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः" इति। तत्र तृतीयाहुतौ देवपत्नीनां देवतात्वात्तद्द्वारा कर्मनाम्नः पत्नीसंयाजशब्दस्य प्रवृत्तिः। तत्र जाघनीमुद्दिश्य पत्नीसंयाजसंस्कारो विधीयते। जाघनी च पशौ समवेता न तु दर्शपूर्णमासयोः। अतः प्रकरणादुत्कृष्य पशौ निवेश्यतामिति प्राप्ते ब्रूमः—जाघनीशब्देन पशोर्भागोऽभिधीयते। स च दर्शपूर्णमासयोः पशुयागत्वाभावेऽपि क्रयादिना संपादयितुं शक्यते। न चात्र पशौ विद्यमानाया जाघन्याः पत्नीसंयाजैः संस्कार्यत्वं, तृतीयया साधनत्वावगमात्। तस्मान्न प्रकरणादुत्कर्षः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः॥१०॥

---

१ क. घ. ङ. °फलमविदित°। २ ख च. °ति। इ°। ३ क. घ. ङ. च. °त्वपगो°। ४ क. घ. ङ. °स्यापगो°। ५ क. घ. ङ. °याश्रुत्या दे°। ६ ख. च. °वेशनमि°।

( अथ द्वितीयाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः । )

---

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः । उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि । त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः । अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् । तं नेमिमृभवो यथाऽऽ नमस्व सहूतिभिः । नेदीयो यज्ञम् (१) अङ्गिरः । तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् । कमु ष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे । मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्नियाः । मा नः समस्य दूढ्यः परिद्वेषसो अꣳहतिः । ऊर्मिर्न नावमा वधीत् । नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैः(२) अमित्रमर्दय । कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि । मा नो अस्मिन्महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय । अन्यमस्मद्भिया इयमग्ने

सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः ।
यस्याजुंषन्नमस्विनः शमीमदुर्मखस्य वा । तं
घेदग्निर्वृधाऽवति । परस्या अधि (३) संवतोऽ-
वराः अभ्या तर । यत्राहमस्मि ताः अव ।
विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽवसः ।
अधा ते सुम्नमीमहे । य उग्र इव शर्यहा
तिग्मशृङ्गो न वंसगः । अग्ने पुरो रुरोजिथ ।
सखायः सं वः सम्यञ्चमिषः स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते । सः
समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे
समिध्यसे स नो वसून्या भर । प्रजापते स
वेद सोमापूषणेमौ देवौ ( ४ ) ॥

( यज्ञममैरधि वृषन्नेकान्नत्रिंःशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके
षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः । )

---

युक्ष्व । हि । देवहूतमानिति देव—हूतमान् ।
अश्वान् । अग्ने । रथीः । इव । नीति । होता ।
पूर्व्यः । सदः । उत । नः । देव । देवान् । अच्छ ।

वोचः । विदुष्टर इति विदुः—तरः । श्रत् । विश्वा । वार्या । कृधि । त्वम् । ह । यत् । यविष्ठच । सहंसः । सूनो । आहुतेत्या—हुत । ऋतावेत्यृत—वा । यज्ञियः । भुवः । अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः । मूर्धा । कविः । रयीणाम् । तम् । नेमिम् । ऋभवः । यथा । एति । नमस्व । सहूतिभिरिति सहूति—भिः । नेदीयः । यज्ञम् ( १ ) । अङ्गिरः । तस्मै । नूनम् । अभिद्यव इत्यभि—द्यवे । वाचा । विरूपेति वि—रूप । नित्यया । वृष्णे । चोदस्व । सुष्टुतिमिति सु—स्तुतिम् । कम् । उ । स्वित् । अस्य । सेनया । अग्नेः । अपाकचक्षस इत्यपाक—चक्षसः । पणिम् । गोषु । स्तरामहे । मा । नः । देवानाम् । विशः । प्रस्नातीरिति प्र—स्नातीः । इव । उस्राः । कृशम् । न । हासुः । अघ्नियाः । मा । नः । समस्य । दूढ्यः । परिद्वेषस इति परि—द्वेषसः । अंहतिः । ऊर्मिः । न । नावम् । एति । वधीत् । नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः । अमैः ( २ ) । अमित्रम् । अर्दय । कुवित् । स्वित् । नः । गविष्टय इति गो—इष्टये । अग्ने । संवेषिष इति सं—वेषिषः ।

रयिम् । उरुकृदित्युरु—कृत् । उरु । नः । कृधि ।
मा । नः । अस्मिन् । महाधन इति महा—धने ।
परेति । वर्क् । भारभृदिति भार—भृत् । यथा ।
संवर्गमिति सं—वर्गम् । समिति । रयिम् । जय ।
अन्यम् । अस्मत् । भियै । इयम् । अग्ने । सिषक्तु ।
दुच्छुना । वर्ध । नः । अमवदित्यम—वत् । शवः ।
यस्य । अजुषत् । नमस्विनः । शमीम् । अदुर्मख-
स्येत्यदुः—मखस्य । वा । तम् । घ । इत् । अग्निः ।
वृधा । अवति । परस्याः । अधीति ( ३ ) । संवत
इति सं—वतः । अवरान् । अभि । एति । तर ।
यत्र । अहम् । अस्मि । तान् । अव । विद्म । हि ।
ते । पुरा । वयम् । अग्ने । पितुः । यथा । अवसः ।
अध । ते । सुम्नम् । ईमहे । यः । उग्रः । इव ।
शर्यहेति शर्य—हा । तिग्मशृङ्ग इति तिग्म—शृङ्गः ।
न । वꣳसगः । अग्ने । पुरः । रुरोजिथ । सखायः ।
समिति । वः । सम्यञ्चम् । इषम् । स्तोमम् । च ।
अग्नये । वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । स-
हस्वते । सꣳसमिति सं—सम् । इत् । युवसे । वृ-
षन् । अग्ने । विश्वानि । अर्यः । आ । इडः । पदे ।
समिति । इध्यसे । सः । नः । वसूनि । एति । भर ।

प्रजा॑पत॒ इति॒ प्रजा॑—प॒ते॒ । सः । वे॒द॒ । सोमा॑पूषणेति॒ सोमा॑—पू॒ष॒णा॒ । इ॒मौ । दे॒वौ ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः । )

---

दशमे शंयुवाकश्च पत्नीसंयाजकाः स्थिताः ।
या दर्शपूर्णमासाख्या सेष्टिरत्र समापिता ॥ १ ॥

अथैकादशे संवर्गेष्टिहौत्रमन्त्रा अभिधीयन्ते । ननु "सत्यं प्रपद्ये" इत्यादिक एको हौत्रकाण्डः । " उभा वा मिन्द्राग्नी " इत्यादिरन्त्यानुवाकात्मकोऽपरः । तयोर्मध्ये " युक्ष्वा हि " इत्यनुवाको न समाम्नातः । तत्कथमस्य हौत्रत्वम् । समाख्ययेति वदामः । यथा तयोः काण्डयोर्याज्ञिकानां समाख्यया हौत्रत्वं तथाऽस्याप्यनुवाकस्येति द्रष्टव्यम् । अत एवाऽऽपस्तम्ब आह—" अग्नये संवर्गाय पुरोडाशमष्टाकपालम् " इत्युक्तं (क्त्वा) " युक्ष्वा हि देवहूतमानिति पञ्चदश सामिधेनीरन्वाह नित्यया परिदधाति कुवित्सु नो गविष्टय इति याज्यानुवाक्ये यस्याजुषद्विश्चाहित इति संयाज्ये " इति । नित्यया आ जुहोत दुवस्यतेत्यनयेत्यर्थः ।

तत्र प्रथमायाः सामिधेन्याः पाठस्तु—

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः ।, इति ।

हेऽग्ने त्वं देवहूतमान्देवानामाह्वातृतमान्देवान्योजय । हिशब्दः प्रसिद्धवाची । प्रसिद्धेऽस्मिन्कर्मणीत्यर्थः । योजने दृष्टान्तः—रथीरश्वानिवेति । रथस्वामी यथाऽश्वान्योजयति तद्वत् । किं च त्वं पूर्व्यः पुरातनो होता होमोत्पादको भूत्वा निषदोऽस्मिन्यागस्थाने निषीद ॥

अथ द्वितीया—

उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ।, इति ।

( संवर्गेष्टिहौत्रमन्त्राभिधानम् )

अपि च हे देवाग्ने त्वं विदुष्टरोऽतिशयेनास्मदभिप्रायं विद्वान्देवान्प्रत्य-च्छाऽऽभिमुख्येन गत्वा यजमानो हविर्दास्यतीति वोचो ब्रूहि। विश्वा वार्या सर्वाणि वरणीयान्यस्मदभिप्रेतानि श्रत्कृधि श्रद्धेयानि विश्वसनीयानि यथा भवन्ति तथा कुरु ॥

अथ तृतीया—

त्वꣳ ह यद्यविष्ठ्य सहसः सूनवा-
हुत। ऋतावा यज्ञियो भुवः।, इति।

हे यविष्ठ्य युवतम हे सहसः सूनो बलस्य पुत्र मथनशक्त्योत्पन्नत्वाद्बल-पुत्रत्वम्। हे आहुत देवानामाह्वातः, त्वं ह त्वमेव यद्यस्मादृतावा सत्यवांस्त-स्माद्यज्ञियो भुवो यज्ञसाधनो भव ॥

अथ चतुर्थी—

अयमग्निः सहस्रिणो वाजस्य शतिन-
स्पतिः। मूर्धा कवी रयीणाम्।, इति।

अयमिध्यमानोऽग्निः सहस्रसंख्याकस्य शतसंख्याकस्य च वाजस्यान्नस्य पतिरत एव मूर्धा शिरोवदुन्नतः कविर्विद्वान्रयीणां धनानां दाता भवतु ॥

अथ पञ्चमी—

तं नेमिमृभवो यथाऽऽ नमस्व सहू-
तिभिः। नेदीयो यज्ञमङ्गिरः।, इति।

हेऽङ्गिरोऽङ्गसौष्ठवयुक्ताग्ने समाना हूतिर्देवानामाह्वानं येषामृत्विजां[1] ते सहू-तयस्तैः सहूतिभिर्युक्तैस्त्वं[2] तं यज्ञमस्माकं नेदीयः समीपं प्रत्यानमस्वाऽऽनीय वशं कुरु। तत्र दृष्टान्तः—ऋभवो यथेति। यथा देवतक्षाणो रथचक्रस्य नेमिमानीय स्ववशत्वेन परिभ्राम्यमाणां कुर्वन्ति तद्वत् ॥

अथ षष्ठी—

तस्मै नूनमभिद्यवे वाचा विरूप
नित्यया। वृष्णे चोदस्व सुष्टुतिम्,। इति।

हे विरूप विविधरूपयुक्ताग्नेऽभिद्यवे सर्वतो द्योतमानाय वृष्णे काम्यानां वर्षयित्रे तस्मै यष्टव्याय देवाय नित्यया वैदिकमन्त्ररूपया वाचाऽस्माभिः क्रियमाणां सुष्टुतिं शोभनां स्तुतिं नूनं चोदस्व[3] सर्वथा प्रेरय तदग्रे कथयेत्यर्थः ॥

---

१ क. घ. ङ. च. °जां तादृशोऽग्ने स°। २ ख. °क्तस्तादृश त्वं तं। ३ ख. च. °दयस्व।

अथ सप्तमी—

कमु ष्विदस्य सेनयाऽग्नेरपाकच-
क्षसः । पणिं गोषु स्तरामहे।, इति ।

पाकोऽल्पः । चक्षो ज्ञानम् । अपाकं चक्षो यस्यासावपाकचक्षाः सर्वज्ञ इत्यर्थः । सर्वं जानतोऽस्याग्नेः सेनया परिचारकजनेन सह गोषु गवादिद्रव्यविषये कमु पणिं स्तरामहे स्वित्कं नाम व्यवहारमाच्छादयामः । एतदीयं परिचारकजनं वञ्चयित्वा न कोऽपि व्यवहारोऽस्माभिः कर्तुं शक्यते । तस्मात्सर्वमपि व्यवहारमस्यानुग्रहेणैव कुर्म इत्यर्थः ॥

अथाष्टमी—

मा नो देवानां विशः प्रस्नातीरि-
वोस्राः । कृशं न हासुरघ्नियाः ।, इति ।

देवानां संबन्धिनो विशो वाणिज्यकारिण्यः प्रजा नोऽस्मान्मा हासुर्नैव परित्यक्तवत्यः । का इव, प्रस्नातीः प्रस्नुता उस्राः क्षीरादिप्रदानेन वासहेतवोऽघ्निया इव । किमिव, कृशं नाल्पवयस्कं वत्समिव । यथा क्षीरपूर्णस्तनयुक्ता गावः शिशुं वत्सं न त्यजन्ति तद्वदित्यर्थः ॥

अथ नवमी—

मा नः समस्य दूढ्यः परिद्वेषसो अꣳ-
हतिः । ऊर्मिर्न नावमा वधीत् ।, इति ।

समस्यास्माभिः समानस्य दूढ्यो दुर्धियः परिद्वेषसः सर्वतो द्वेषं कुर्वतः शत्रोरंहतिरस्मासु कृतो द्रोहो नोऽस्माना समन्तान्मा वधीत् । कां केव, नावमूर्मिर्न । यथा नद्यां गच्छन्तीं नावमूर्मिर्न नाशयति तद्वद्वैरिकृतो द्रोहोऽस्मान्मा विनाशयतु । सर्वशब्दपर्यायो वाऽयं समशब्दः, सर्वस्य वैरिणो द्रोहो मा विनाशयतु ॥

अथ दशमी—

नमस्ते अग्न ओजसे गृणन्ति देव
कृष्टयः । अमैरमित्रमर्दय ।, इति ।

हे देवाग्ने कृष्टयो मनुष्यास्ते तवौजसे बलाय नमो गृणन्ति नमस्कारवा-

१ ख. च. °मस्य स° ।

( संवर्गेष्टिहौत्रमन्त्राभिधानम् )

चिनं शब्दं प्रयुञ्जते यजमानादयस्त्वदीयं बलं नमस्कुर्वन्तीत्यर्थः। अतस्त्वममित्रमस्माकमपकारिणमर्दय मारय, अमै रोगादिभिः॥

एवं दश सामिधेनीरुक्त्वा पुरोनुवाक्यामाह—

कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्। उरुकृदुरु णस्कृधि।, इति।

हेऽग्ने त्वं नोऽस्माकं रयिं धनं कुविद्बाहुल्यं यथा भवति तथा सुष्ठु संवेषिषः सम्यग्व्याप्तिमकरोः। किमर्थं, गविष्टये गोभिः सहितेष्टिर्गविष्टिस्तदर्थमुरुकृत्प्रभूतकारी त्वं नोऽस्माकं कर्मफलमुरु कृधि प्रभूतं कुरु॥

अथ याज्या—

मा नो अस्मिन्महाधने परा वग्भारभृद्यथा। संवर्गꣳ सꣳ रयिं जय।, इति।

नोऽस्मभ्यं त्वया दत्तेऽस्मिन्महाधने मा परावर्क्पराभवकारणं वर्जनं विनाशनं मा कुरु। तत्र दृष्टान्तः—भारभृद्यथेति। लोके यथा भारवाही बलीवर्दादिर्द्रव्यादिकं न नाशयति तद्वत्। किं च, संवर्गं संवृज्य *संदृश्य देये धनराशौ पुनः पुनः-समानीय रयिं [ सं ]जय प्रभूतं धनं सम्यक्प्रापय॥

तत्रैव विकल्पितां याज्यामाह—

अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना। वर्धा नो अमवच्छवः।, इति।

हेऽग्न इयं दुच्छुना रोगरूपा दारिद्र्यरूपाऽनेकरूपा वा पीडाऽस्मदन्यमस्मत्तो व्यतिरिक्तं वैरिणं संबध्नातु। किमर्थं, भियै भीत्यर्थम्। यथा पीडया वैरी भीतः पलायते तथा पीडां प्राप्नोतु। नोऽस्माकं शवो वर्धं बलं वर्धय। किंत( व )त्, अमवत्। यश्च( था ) वैरिणाममो रोगो वर्धि(र्धे)त तद्वत्॥

अथ स्विष्टकृत्पुरोनुवाक्या—

यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा। तं घेदग्निर्वृधाऽवति।, इति।

दुष्टोऽङ्गविकलो मखो यज्ञो दुर्मखः। न विद्यते दुर्मखो यस्य यजमानस्य सोऽयमदुर्मखः, सम्यगनुष्ठितयज्ञ इत्यर्थः, तस्य, नमस्विनो भक्त्या नमस्कुर्वतो यस्य यजमानस्य शमीं सुखकरीमाहुतिमजुषदग्निरसेवत। अदुर्मखस्य

* संदृश्येत्यत्र संवृज्येति एकस्मिन्पुस्तके पाठ इति ख. पुस्तके टिप्पण्याम्।

सम्यगनुष्ठायिनो वा यस्य यजमानस्य शमीमजुषत्तं घेत्तमेवोभयं नमस्कुर्वन्तं सम्यगनुतिष्ठन्तं वाऽयमग्निर्वृधा धनादिवर्धनेनावति रक्षति ॥

तत्रैव विकल्पितां पुरोनुवाक्यामाह—

परस्या अधि संवतोऽवराꣳ अभ्या
तर। यत्राहमस्मि ताꣳ अव।, इति।

सम्यग्वनुते भजते यस्यां सा क्रिया संवत्, परस्याः संवतोऽधि उत्कृष्टाया अस्या इष्टेरधिष्ठानमवरान्निकृष्टानप्यस्मानभ्यातराऽऽभिमुख्येनाऽऽगत्य दुःखानि नाशय। येषु बन्धुष्वहमस्मि तान्बन्धूनप्यव रक्ष ॥

अथ स्विष्टकृतो याज्यामाह—

विद्मा हि ते पुरा वयमग्ने पितुर्यथाऽ-
वसः। अधा ते सुम्नमीमहे।, इति।

हेऽग्ने यस्मात्पुरा वयं ते तवावसो रक्षणं विद्म ज्ञातवन्तः। कस्येव, पितुर्यथा। लोके पुरा यथा पितुः पालनं जानन्ति तद्वत्। अ[1]थ तस्मात्कारणात्ते सुम्नमीमहे त्वया संपादितं सुखं प्राप्नुमः ॥

अथात्र तिस्र ऋच उपहोमार्थाः। तत्रेयं प्रथमा—

य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳ-
सगः। अग्ने पुरो रुरोजिथ।, इति।

हेऽग्ने यस्त्वमुग्र इव क्रूरो राजेव शर्यहा शर्याणां हिंसकानां हन्ता, तिग्मशृङ्गो न तीक्ष्णशृङ्गो मृग इव, वंसगो वंसानि वनानि गच्छतीति वंसगः, दावाग्नि[2]रूपो भूत्वा वनेषु तिष्ठतीत्यर्थः। तादृशस्त्वं पुरो रुरोजिथ शत्रूणां पुराणि तर्जितवानसि ॥

अथ द्वितीया—

सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते।, इति।

हे सखायः परस्परसख्ययुक्ता ऋत्विग्यजमाना वो युष्माकं सम्यञ्चमिषं समीचीनमप्यभीष्टार्थं( र्थमग्निः ) संपादयन्तु( तु )। समित्युपसर्गस्यापेक्षितः शेषोऽध्याहृतः। यूयं चाग्नये स्तोमं स्तोत्रं संपादयन्तु( त )। कीदृशायाग्नये,

१ क. घ. ङ. च. अथ। २ ख. च. °णि भीज°।

( संवर्गेष्टिहौत्रमन्त्राभिधानम् )

ृतीनां निवासहेतूनां मध्ये वर्षिष्ठाय वृद्धतमाय, ऊर्जो नप्त्रे बलस्य न पात- ात्रे विनाशनमकुर्वते, सहस्वते स्वयमतिशयेन बलवते ॥

अथ तृतीया—

संꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इड-
स्पदे समिध्यसे स नो वसून्या भर ।, इति ।

हे वृषन्कामानां वर्षकाग्ने विश्वानि सर्वाणि फलानि संसमित्संपाद्यैव युवसे जमानेन मिश्रयसि । अर्य आ ईश्वरस्त्वमागत्येडस्पदे पृथिवीरूपाया वेद्याः ाने समिध्यसे सम्यग्ज्वाल्यसे । स तादृशो महानुभावो नोऽस्मभ्यं वसूनि नानि संभर सम्यगाहृत्य प्रयच्छ ॥

"यः प्रजाकामः स्यात्तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत्" "यः ुकामः स्यात्तस्मा एतꣳ सोमापौष्णं गार्मुतं चरुं निर्वपेत्" इत्यनयोर्याज्या- वाक्याप्रतीकानि दर्शयति—

प्रजापते स वेद सोमापूषणेमौ देवौ ।, इति ॥

"प्रजापते न त्वदेतान्यन्यः" इति प्रजार्थस्य हविषः पुरोनुवाक्या । सा च सोमस्य त्विषिरसि" इत्यनुवाके व्याख्याता । "स वेद पुत्रः पितरम्" इत्येषा ाज्या । सा च "हिरण्यगर्भ आपो ह यत्" इत्यस्मिन्ननुवाके व्याख्याता । ्वर्थस्य हविषः "सोमापूषणा जनना" इति पुरोनुवाक्या । "इमौ देवौ ायमानौ" इति याज्या । एतदुभयम् "अग्नाविष्णू महि" इत्यस्मिन्ननुवाके याख्यातम् ॥

अत्र विनियोगसंग्रहः—

"संवर्गेष्टौ सामिधेन्यो दश तिस्रस्तु याज्यकाः ।
संयाज्यास्तिस्र उदिता उपहोमास्त्रयो मताः ॥ १ ॥
प्रजासवे द्वयं योज्यं गार्मुते प्रथमे भवेत् ।
सोमेमौ तद्द्वितीये स्तस्त्र (ऽत्र त्र) योविंशतिरीरिताः॥२॥" इति ।

अत्र मीमांसा ।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः ।
अनियत्या नियत्या वा नियतिर्नानिरूपणात् ॥
हौत्रकादिसमाख्यानं नियतेर्गमकं स्वतः ।
निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम् ॥

याज्यापुरोनुवाक्यापाठादयो धर्मा ऋग्वेदे प्रोक्ताः । दोहननिर्वापादयो यजुर्वेदे । आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे । एतस्यैते धर्मा इति नियामकस्य दुर्निरूपत्वाद्येन केनाप्यृत्विजा यः कोऽपि धर्म इच्छया संगच्छत इति चेन्मैवम् । हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यानेन नियतिर्बोध्यते । न च समाख्यानस्य बाधकं किंचित्पश्यामः । तस्मादबोधकत्वबाधितत्वयोरप्रामाण्यकारणयोरभावाच्छ्रुतिलिङ्गादिपञ्चकवत्प्रमाणेन समाख्यानेन धर्मा व्यवस्थाप्यन्ते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ द्वितीयाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः । )

---

उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन्हविषे अत्तवे । त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः । त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भव ( १ ) नः । त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ । तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् । अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ।

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा
जुषध्वम् । त आ गतावसा शंतमेनाथास्म-
भ्यम् ( २ ) शं योररपो दधात । आऽहं
पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं
च विष्णोः । बर्हिषदो ये स्वधया सुतस्य
भजन्त पित्वस्त इहाऽऽगमिष्ठाः । उपहूताः
पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते
अवन्त्वस्मान् । उदीरतामवर उत्परास उन्म-
ध्यमाः पितरः सोम्यासः । असुम् ( ३ )
य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो
हवेषु । इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो
य उपरास ईयुः । ये पार्थिवे रजस्या निषत्ता
ये वा नूनꣳ सुवृजनासु विक्षु । अधा यथा नः
पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो
अरुणीरप व्रन् । यदग्ने ( ४ ) कव्यवाहन
पितॄन्यक्ष्यृतावृधः । प्र च हव्यानि वक्ष्यसि
देवेभ्यश्च पितृभ्य आ । त्वमग्न ईडितो जात-
वेदोऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः

पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयंता हवींꣳषि । मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वंभिर्वावृधानः । याꣳश्चं देवा वावृधुर्ये चं देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मंदन्ति (५) । इमं यंम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वंहन्त्वेना राजन्हविषा मादयस्व । अङ्गिरोभिरा गंहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवंस्वन्तꣳ हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्यं । अङ्गिरसो नः पितरो नवंग्वा अथंर्वाणो भृगंवः सोम्यासंः । तेषां वयꣳ सुमतौ यज्ञियानामपिं भद्रे सौमनसे स्याम ( ६ ) ॥

( भवास्मभ्यमसुं यदंग्ने मदन्ति सौमनस एकं च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

समिधश्चक्षुंषी प्रजापतिराज्यं देवस्य स्फ्यं ब्रह्मवादिनोऽग्निरग्नेस्त्रयो मनुंः पृथिव्याः पशवोऽग्नीधें देवा वै युक्ष्वोशन्तंस्त्वा द्वादंश ॥ १२ ॥

समिधों याज्यां तस्मान्नाभाꣳ हितमन्वित्याह प्रजा वा उत्तरा आहेत्याह युक्ष्व संप्ततिः ॥ ७० ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां द्वितीयाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

( अथ द्वितीयाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः । )

---

उशन्तः । त्वा । हवामहे । उशन्तः । समिति । इधीमहि । उशन् । उशतः । एति । वह । पितॄन् । हविषे । अत्तवे । त्वम् । सोम । प्रचिकित इति प्र—चिकितः । मनीषा । त्वम् । रजिष्ठम् । अन्विति । नेषि । पन्थाम् । तव । प्रणीतीति प्र—नीती । पितरः । नः । इन्दो इति । देवेषु । रत्नम् । अभजन्त । धीराः । त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः । वन्वन् । अवातः । परिधीनिति परि—धीन् । अपेति । ऊर्णु । वीरेभिः । अश्वैः । मघवेति मघ—वा । भव (१) । नः । त्वम् । सोम । पितृभिरिति पितृ—भिः । संविदान इति सं—विदानः । अन्विति । द्यावापृथिवी इति द्यावा—पृथिवी । एति । ततन्थ । तस्मै । ते । इन्दो इति । हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् । अग्निष्वात्ता इत्यग्नि—स्वात्ताः । पितरः । एति । इह । गच्छत । सदःसद इति सदः—सदः । सदत । सुप्रणीतय इति सु—प्रणीतयः । अत्त । हवींषि । प्रयतानीति प्र—यतानि । बर्हिषि । अथ । रयिम् । सर्ववीरमिति सर्व—वीरम् ।

दधातन । बर्हिषद इति बर्हिः—सदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् । ते । एति । गत । अवसा । शंतमेनेति शं—तमेन । अथ । अस्मभ्यमित्यस्म—भ्यम् ( २ )। शम् । योः । अरपः । दधात । एति । अहम् । पितॄन् । सुविदत्रानिति सु—विदत्रान् । अवित्सि । नपातम् । च । विक्रमणमिति वि—क्रमणम् । च । विष्णोः । बर्हिषद इति बर्हि—सदः । ये । स्वधयेति स्व—धया । सुतस्य । भजन्त । पित्वः । ते । इह । आगमिष्ठा इत्या—गमिष्ठाः । उपहूता इत्युप—हूताः । पितरः । सोम्यासः । बर्हिष्येषु । निधिष्विति नि—धिषु । प्रियेषु । ते । एति । गमन्तु । ते । इह । श्रुवन्तु । अधीति । ब्रुवन्तु । ते । अवन्तु । अस्मान् । उदिति । ईरताम् । अवरे । उदिति । परासः । उदिति । मध्यमाः । पितरः । सोम्यासः । असुम् । ( ३ ) । ये । ईयुः । अवृकाः । ऋतज्ञा इत्यृत—ज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु । इदम् । पितृभ्य इति पितृ—भ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः । ये । पार्थिवे । रजसि । एति । निषत्ता इति नि—सत्ताः । ये । वा ।

नूनम्। सुव्रजनास्विति सु—व्रजनासु। विक्षु। अर्थ।
यथा। नः। पितरः। परासः। प्रत्नासः। अग्ने।
ऋतम्। आशुषाणाः। शुचि। इत्। अयन्। दी-
धितिम्। उक्थशास इत्युक्थ—शासः। क्षाम।
भिन्दन्तः। अरुणीः। अपेति। व्रन्। यत्। अग्ने।
(४)। कव्यवाहनेति कव्य—वाहन। पितॄन्।
यक्षि। ऋतावृध इत्यृत—वृधः। प्रेति। च। हव्या-
नि। वक्ष्यसि। देवेभ्यः। च। पितृभ्य इति पितृ-
भ्यः। आ। त्वम्। अग्ने। ईडितः। जातवेद इति
जात—वेदः। अवाट्। हव्यानि। सुरभीणि। कृत्वा।
प्रेति। अदाः। पितृभ्य इति पितृ—भ्यः। स्वध-
येति स्व—धया। ते। अक्षन्। अद्धि। त्वम्।
देव। प्रयतेति प्र—यता। हवींषि। मातली।
कव्यैः। यमः। अङ्गिरोभिरित्यङ्गिरः—भिः। बृहस्प-
तिः। ऋक्वभिरित्यृक्व—भिः। वावृधानः। यान्।
च। देवाः। वावृधुः। ये। च। देवान्। स्वाहा।
अन्ये। स्वधयेति स्व—धया। अन्ये। मदन्ति।
(५)। इमम्। यम। प्रस्तरमिति प्र—स्तरम्।
एति। हि। सीद। अङ्गिरोभिरित्यङ्गिरः—भिः।
पितृभिरिति पितृ—भिः। संविदान इति सं—वि-

दानः । एति । त्वा । मन्त्राः । कविशस्ता इति क-
वि—शस्ताः । वहन्तु । एना । राजन् । हविषा ।
मादयस्व । अङ्गिरोभिरित्यङ्गिरः—भिः । एति । गहि ।
यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व । विव-
स्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे ।
बर्हिषि । एति । निषद्येति नि—सद्य । अङ्गिरसः ।
नः । पितरः । नवग्वाः । अथर्वाणः । भृगवः । सो-
म्यासः । तेषाम् । वयम् । सुमताविति सु—मतौ ।
यज्ञियानाम् । अपीति । भद्रे । सौमनसे । स्या-
म ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे द्वितीयाष्टके षष्ठः प्रपाठकः ॥ ६ ॥

---

( अथ द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः । )

---

एकादशे तु कथितं संवर्गेष्ट्यादि हौत्रकम् ।
द्वादशे पितृयज्ञस्य हविषां हौत्रमुच्यते ॥ १ ॥

कल्पः—“ एकां सामिधेनीं त्रिरन्वाहोशन्तस्त्वा हवामह इत्येताम् ” इति।
पाठस्तु—

उशन्तस्त्वा हवामह उशन्तः समिधीमहि ।

( पितृयज्ञहविर्होमन्त्राभिधानम् )

उशन्नुशत आ वह पितॄन्हविषे अत्तवे।, इति।

हेऽग्ने वयमुशन्तः पितॄन्कामयमानास्त्वामाह्वयामः। पुनरपि पितॄनुशन्तस्त्वा समिधीमहि। त्वमपि कामयमानः कामयमानस्य यजमानस्य पितॄनावह। किमर्थम्, हविषेऽत्तवे हविर्भोक्तुम् ॥

कल्पः—" द्वे पुरोनुवाक्ये अन्वाहर्चमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौति त्वꣳ सोम प्रचिकित इत्येता आम्नाता भवन्त्येका याज्या " इति।

तत्र प्रथमां पुरोनुवाक्यामाह—

त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठ-
मनु नेषि पन्थाम्। तव प्रणीती पितरो न
इन्दो देवेषु रत्नमभजन्त धीराः।, इति।

हे सोम त्वं मनीषा मनीषया त्वदीयया बुद्ध्या प्रचिकितः प्रकर्षेण ज्ञातः। किंच, त्वं रजिष्ठं यं( ष्ठ )मन्नोदकसंपूर्त्या रञ्जकं मार्गमनुनेषि अनुक्रमेव प्रापयसि। हे इन्दो तव प्रणीती प्रणीत्या परिचरणेन नोऽस्माकं पितरो देवेषु मध्ये स्थित्वा धीराः सन्तो रत्नं रमणीयं हविरभजन्त ॥

द्वितीयां पुरोनुवाक्यामाह—

त्वया हि नः पितरः सोम पूर्वे कर्माणि
चक्रुः पवमान धीराः। वन्वन्नवातः परि-
धीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा नः।, इति।

हे पवमान शोधक सोम हि यस्मान्नोऽस्माकं पूर्वे पितरस्त्वयाऽनुगृहीताः कर्माणि चक्रुः, परिस्मरन्तो जन्मानि धीरास्तिष्ठन्ति [ च ]। [तस्मात्] त्वमप्यवातो वायुमनपेक्ष्य ज्वलनेनास्मदीयहविर्वन्वन्संभक्षयन्परिधीन्परिधिवत्सर्वतोऽवस्थितान्प्रतिबन्धकानपोर्णु निराकुरु। कैः साधनैः, वीरेभिर्युद्धकुशलैरश्वैः। तथा नोऽस्मदर्थं मघवा धनवान्भव ॥

अथ याज्यामाह—

त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी
आ ततन्थ। तस्मै त इन्दो हविषा वि-

१ ख. काम्यमा°। २ ख. च. °ह वद। किं°। ३ ख. च. यमलोक°। ४ क. घ. ङ. च. °रञ्जन्मा°।

धेम वयꣳ स्याम पतयो रयीणाम् ।, इति ।

हे सोम त्वं पितृभिः संविदानः संविदं प्राप्तोऽनुक्रमेण द्यावापृथिवी आतन्थाऽऽतते व्याप्ते कृतवानसि । हे इन्दो हे सोम तस्मै ते तादृशाय तुभ्यं हविषा विधेम परिचरेम । त्वत्प्रसादाद्वयं धनानां पतयः स्याम ।

इत्थं "सोमाय पितृमते पुरोडाशꣳ षट्कपालम्" इत्यस्यानुवाक्याद्वयं याज्या चेति मन्त्रत्रयमुक्तम् । अथ "पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्" इत्येतस्य प्रथमा पुरोनुवाक्योच्यते । यद्यपि पाठक्रमेण तृतीयमिदं हविस्तथाऽपि लिङ्गस्य बलवत्त्वात्तत्र विनियोगो द्रष्टव्यः ॥

पाठस्तु—

अग्निष्वात्ताः पितर एह गच्छत सदःसदः
सदत सुप्रणीतयः । अत्ता हवीꣳषि प्रयता-
नि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन ।, इति ।

अत्र ये वा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ता इति श्रुतत्वाद्यागमकृत्वैव प्रेत्य पितृलोकं गता अग्निष्वात्ताः शोभना प्रणीतिरस्मत्कृता परिचर्या येषां ते सुप्रणीतयस्तथाविधा हे पितर इह कर्मण्यागच्छत । सदःसदस्तत्तदात्मीयं स्थानं सदत प्राप्नुत । अस्मिन्बर्हिषि यज्ञे प्रयतानि प्रयत्नेन संपादितानि हवींषि अत्त भक्षयत । अथानन्तरं रयिं सर्वेषु वैदिककर्मसु वीरः कुशलो यः पुत्रस्तादृशं पुत्रं च दधातन संपादयत ॥

अथ द्वितीया पुरोनुवाक्या याज्या चेत्युभयमाम्नातं, तच्च ये अग्निष्वात्ता इत्यादिकं कौकिल्यां सौत्रामण्यामाम्नातमतस्तत्रैव व्याख्यास्यते । अथ पितृभ्यो बर्हिषद्भ्यो धाना इत्यस्य प्रथमां पुरोनुवाक्यामाह—

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या
चकृमा जुषध्वम् । त आ गतावसा शंत-
मेनाथास्मभ्यꣳ शं योररपो दधात ।, इति ।

बर्हिषि यज्ञे सीदन्तीति बर्हिषदः । अत्रापि ये वै यज्वानस्ते पितरो बर्हिषद इत्युक्तत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषदः । तादृशा हे पितरोऽर्वागर्वाचीनानामस्माकमूती रक्षा भवद्भिः कर्तव्येति[1] शेषः । वो युष्मदर्थमिमा हव्या एतानि हवींषि चकृमातस्तानि जुषध्वमिति(म् । ते) हविर्जुष्ट-

१ ख. ॰ति । ते ह॰ ।

वन्तो यूयमवसा रक्षणेन शंतमेन सुखतमेनास्मानागत तन्निमित्तमागच्छतेत्यर्थः । अथास्मभ्यं प्रथममन्ते च शं सुखं दुःखवियोगं चारपः पापराहित्यं च दधात दत्त ॥

अथ तत्रैव द्वितीया पुरोनुवाक्या—

आऽहं पितॄन्त्सुविदत्राꣳ अविवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः ।, इति ।

अहं यजमानः सुविदत्रान्मदीयां भक्तिं सुष्ठु जानतः पितॄनपि आवित्स्याभिमुख्येन लब्धवानस्मि । विष्णोर्व्यापिनोऽस्य यज्ञस्य नपातं विनाशाभावं विक्रमणं विशेषेण प्रवृत्तिं च लब्धवानस्मि । ये पितरो बर्हिषदस्त इहात्र कर्मणि आगमिष्ठा अतिशयेनाऽऽगताः । आदरपूर्वकमागत्य पित्वः प्रीतिं भजन्त प्राप्नुवन्तु । केन साधनेन, सुतस्य स्वधया सोमसमस्य हविषः स्वादुत्वेन ॥

अथ तत्रैव याज्यामाह—

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान् ।, इति ।

सोम्यासः सोम्या अस्मदनुग्रहपराः पितरो बर्हिष्येषु यागार्हेषु तृप्तिकरेषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सूपहूता अस्माभिराहूतास्ते पितर आगमन्त्वागच्छन्तु । आगत्य चेहास्मिन्कर्मण्यस्माभिः प्रयुक्ताः स्तुतीः श्रुवन्तु । श्रुत्वा चाधिब्रुवन्तु साधुरयं यजमान इत्यादरेण कथयन्तु । तत ईदृशाः पितरोऽस्मानवन्तु ॥

अत्रैवोपहोमार्थास्तिस्र ऋचस्तासु प्रथमामाह—

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्त नोऽवन्तु पितरो हवेषु ।, इति ।

---

१ क. घ. ङ. च. °स्मत्प्राप्यमन्ते ।

त्रिविधाः पितर उत्तमा मध्यमा अधमाश्चेति । यथाविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः । स्मार्तकर्ममात्रपरा मध्यमाः । तत्रापि केचित्संस्कारैर्विकला अधमाः । एतदेवाभिप्रेत्य ये अग्निदग्धा येऽनग्निदग्धा इत्यादिर्मन्त्र आम्नातः । तेष्ववरे निकृष्टा उदीरतामुत्तमं हविः प्राप्नुवन्तु । परास उत्तमाः पितर उदीरताम् । मध्यमाः पितरश्चोदीरताम् । ते सर्वेऽप्यस्मिन्विषये सोम्यासः सोम्या अनुग्रहपराः सन्तु । ये पितरोऽवृका वृकवदरण्यश्ववदस्मासु हिंसामकुर्वन्त ऋतज्ञा अस्मदनुष्ठितं यज्ञं जानन्तोऽसुमस्मत्प्राणमीयू रक्षितुं प्राप्तास्ते पितरो हवेषु अस्मदीयाह्वानेषु नोऽस्मानवन्तु ॥

अथ द्वितीया—

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ।, इति ।

पूर्वासो यजमानोत्पत्तेः पूर्वमुत्पन्ना ज्येष्ठभ्रातृपितृपितामहादयो य ईयुः पितृलोकं प्राप्ताः । ये चान्य उपरासो यजमानजननादुपर्युत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ताः । येऽप्यन्ये पार्थिवे पृथिवीसंबन्धिनि रजसि रजोगुणकार्येऽस्मिन्कर्मण्यानीता हविः स्वीकर्तुमागत्योपविष्टाः । ये वा ये चान्ये बन्धुवर्गरूपाः पितरो बहुबन्धुरूपासु विक्षु प्रजास्वनिषत्ताः श्राद्धादिस्वीकारायाऽऽगत्योपविष्टाः । कीदृशीषु विक्षु, सुवृजनासु वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनं शोभनं वृजनं यासां ताः सुवृजनास्तादृशीषु धनसमृद्ध्या श्राद्धादिकर्मपरास्वित्यर्थः । तेभ्यः सर्वेभ्य उक्तेभ्यः पितृभ्योऽद्यास्मिन्कर्मणीदं नमोऽस्त्वयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥

अथ तृतीया—

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः । शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ।, इति ।

हेऽग्नेऽधाधस्तादतीते काले नोऽस्माकं पितर ऋतमाशुषाणा यज्ञमश्नुवानाः शुचीच्छुद्धमेव स्थानं यथा येन प्रकारेणायन्प्राप्तवन्तो दीधितिं दीप्यमानां पितृरूपां देवतामुक्थशासः शस्त्रैः शंसन्तो वयमपि तथैवोत्तममेव स्थानं प्राप्ताः

---

१ ख. घ. ङ. च. 'था विधि' । २ ख. 'दिमन्त्र आम्नाताः । तेऽप्यव' ।

स्म इति। कीदृशाः पितरः, परासोऽस्मत्त उत्कृष्टाः पितृपितामहादयः प्रत्नासः पुरातनाः पित्रादिभ्योऽपि पूर्वभाविनः। किंच, क्षाम क्षयहेतुं स्वकीयं क्षुदुपद्रवं भिन्दन्तोऽन्नेन हविषा नाशयन्तोऽरुणीस्तेजोरूपा [देवता]स्ताः प्राप्याप्यग्नन्फलप्रतिबन्धकं पापमपाकृण्वन् ॥

अस्मिन्निह(न्हि) पितृयज्ञकर्मणि शाखान्तरेऽन्यदपि हविर्द्वयं विहितं तदग्नये कव्यवाहनायैकं यमायाङ्गिरस्वते पितृमते द्वितीयमिति। अत एव सूत्रकार आह—"अथैकेषां सोमाय पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यः षट्कपालं पितृभ्योऽग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते" इति। तत्र कव्यवाहनस्य प्रथमां पुरोनुवाक्यामाह—

यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः। प्र च
हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ।, इति।

कव्यं वहतीति कव्यवाहनः पितृभ्योऽग्निः। अत एवान्यत्र श्रुतम्—"त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणाम्" इति। कव्यस्यास्य हविषो वाहक हेऽग्ने यद्यस्मात्कारणादृतावृधो यज्ञवर्धकान्पितॄन्यक्षि यजसि तस्मादेव कारणात्त्वं देवेभ्यः पितृभ्यश्च हव्यानि प्रावक्ष्यसि पुनः पुनः प्रकर्षतः परमपि हविर्वहनं करिष्यसि ॥

द्वितीयां पुरोनुवाक्यामाह—

त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुर-
भीणि कृत्वा। प्रादाः पितृभ्यः स्वधया ते
अक्षन्नद्धि त्वं देव प्रयता हवीꣳषि।, इति।

जातं सर्वं जगद्वेदेति जातवेदास्तथाविध हेऽग्ने त्वमीडितो यजमानेन स्तुतः संस्तदीयानि हव्यानि सुरभीणि सुगन्धीनि कृत्वाऽवाड्वहनं कृतवानसि। कृत्वा च पितृभ्यः प्रादाः। ते च पितरः स्वधया स्वधाकारेण प्रत्तं हव्यमक्षन्नदन्तु। हे देव त्वमपि प्रयता प्रयत्नसंपादितानि हवींष्यद्धि भक्षय ॥

अथ याज्या—

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्क-
भिर्वावृधानः। याꣳश्च देवा वावृधुर्ये च
देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति।, इति।

मातलिरिन्द्रस्य सूतस्तद्वानिन्द्रो मातली। स च कव्यैः कव्यभाग्भिः

पितृभिः सह वावृधानो वर्धमानो भवति। यमश्चाङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति। बृहस्पतिश्च ऋक्वभिर्ऋक्प्रतिपाद्यैः पितृविशेषैः सह वर्धमानो भवति। तत्र देवा यान्कव्यभागादीन्पितॄन्वावृधुर्वर्धयन्ति। ये च कव्यभागादयः पितर इन्द्रादीन्देवान्वर्धयन्ति, तेषां मध्य इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण तृप्यन्ति। अन्ये पितरः स्वधया स्वधाकारेण तृप्यन्ति॥

अथाङ्गिरस्वतो यमस्य प्रथमां पुरोनुवाक्यामाह—

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः
पितृभिः संविदानः। आ त्वा मन्त्राः कवि-
शस्ता वहन्त्वेना राजन्हविषा मादयस्व।, इति।

हे यमाङ्गिरोभिरेतन्नामकैः पितृभिः संविदान ऐकमत्यं प्राप्त इमं प्रस्तरं प्रस्तीर्णं यज्ञविशेषमासीदाऽऽगत्योपविश। हि यस्मादुपविशसि तस्मात्कविशस्ता विद्वद्भिर्ऋत्विग्भिः प्रयुक्ता मन्त्रास्त्वामावहन्तु। हे राजन्नेनाऽनेन हविषा तुष्टो मादयस्व यजमानं हर्षयस्व॥

अथ द्वितीयां पुरोनुवाक्यामाह—

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपै-
रिह मादयस्व। विवस्वन्तꣳ हुवे यः पिता
तेऽस्मिन्यज्ञे बर्हिष्या निषद्य।, इति।

हे यम वैरूपैर्विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा यज्ञियेभिर्यज्ञयोग्यैरङ्गिरोभिः सहाऽऽगहि आगच्छ। आगत्य चेह मादयस्व यजमानं हर्षय। यस्ते तव पिता विवस्वानस्ति तं विवस्वन्तमस्मिन्यज्ञे हुव आह्वयामि। स च बर्हिष्यस्मिन्यज्ञ आनिषद्याऽऽगत्योपविश्य यजमानं हर्षयतु॥

अथ याज्यामाह—

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो
भृगवः सोम्यासः। तेषां वयꣳ सुमतौ
यज्ञियानामपि भद्रे सौमनसे स्याम।, इति।

अङ्गिरोनामका अथर्वनामका भृगुनामकाश्च नोऽस्माकं पितरो नवग्वा अभिनवागमनयुक्तास्तदा तदा नूतनवत्प्रीतिजनका इत्यर्थः। ते च सोम्यासः सोममर्हन्ति सोम्याः। यज्ञियानां तेषां सुमतावयुक्त(नुग्रह)युक्तायां बुद्धौ वयं

स्याम सर्वदा तिष्ठेम । अपि च सौमनसे सौमनस्यकारणे भद्रे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥

अत्र विनियोगसंग्रहः—

“ उशन्तः सामिधेन्येका पितृयज्ञे महत्यसौ ।
त्वं सोमेत्यनुवाक्ये द्वे पितृमन्नामके तथा ॥ १ ॥
त्वं याज्याऽग्निष्वेति मन्थेऽनुवाक्या प्रथमा भवेत् ।
बर्हिर्द्वे अनुवाक्ये तु याज्यैका बर्हिषद्यजौ ॥ २ ॥
उपहोमा उदीरेति त्रयस्तन्नययागके ।
कव्यवाहनयागे तु यदग्ने तिस्र ईरिताः ॥ ३ ॥
पुरोनुवाक्ये द्वे तत्र याज्यैका याम्ययागके ।
इमं पुरोनुवाक्ये द्वे याज्यैका पूर्ववन्मता ॥
अन्तिमे ह्यनुवाकेऽस्मिन्मन्त्राः सप्तदशेरिताः ॥ ४ ॥ ”

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये द्वितीयः काण्डः समाप्तः ॥ २ ॥

---

मूलक्रमेण द्वितीयाष्टके—प्र० ६ अ० ७९
भाष्यक्रमेण द्वितीयकाण्डे—प्र० ६ अ० ७५
मूलक्रमेणाऽऽदितः समष्ट्यङ्काः—का० २ प्र० १४ अ० २२१
भाष्यक्रमेणाऽऽदितः समष्ट्यङ्काः—का० २ प्र० १४ अ० २१५

समाप्तोऽयं श्रीमत्सायणाचार्यविरचितभाष्यस-
हितकृष्णयजुर्वेदीयतैत्तिरीयसंहिताया
द्वितीयः काण्डः ।

अथ सभाष्यसपदपाठकृष्णयजुर्वेदीयतैत्तिरीयसंहितायां

# तृतीयं काण्डम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
पशवश्चेष्टयः काम्या विधिशेषस्तथैष्टिकः ।
प्रोक्ताः काण्डे द्वितीयेऽथ सोमशेषोऽत्र वर्ण्यते ॥ २ ॥

एतच्च तृतीयकाण्डमौपानुवाक्यमिति (+काण्डानुक्रमण्यामुक्तम्) । अनुवाकानां समीपमुपानुवाकम् । तत्रान्वेतुं योग्यानामर्थानां प्रतिपादकत्वादिदं काण्डमौपानुवाक्यम् । यद्यप्येतत्सर्वमनारभ्याऽऽम्नायते तथाऽपि तेन तेन प्रमाणेन तत्र तत्रानुवाकेष्वन्वय उत्प्रेक्षणीयः । सोमप्रकरणाम्नातेषु तेषु तेष्व[1]न्वयं तत्र तत्रैवोदाहृत्य प्रदर्शयिष्यामः । तदयमर्थः—कर्मण्युच्यमानो मन्त्रो वाकः । तद्व्याख्यानरूपं ब्राह्मणमनुवाकः । तत्रैकैकं मन्त्रमाम्नाय तस्य तस्य समीपे पठितमुपानु[2]वाकम् । तत्संबन्धि काण्डमौपानुवाक्यमुच्यते ॥

( इति भाष्यकारोपोद्घातः । )

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयोऽष्टकः । )

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

हरिः ॐ ।

प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत सोऽकामयत प्रजाः सृजेयेति स द्वितीयमतप्यत स वयांꣳस्यसृजत सोऽकामयत प्रजाः सृजेयेति स

+ ख. पुस्तके संप्रदायविद आहुरिति पाठान्तरम् ।

१ क. ख. ङ. च. तेष्व॰ । २ ख. घ. ङ. च. ॰वाक्यम् ।

तृतीयमतप्यत स एतं दीक्षितवादमपश्यत्तमवद-
त्ततो वै स प्रजा असृजत यत्तपस्तप्त्वा दीक्षि-
तवादं वदति प्रजा एव तद्यजमानः ( १ )
सृजते यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा
क्रामति नीलमस्य हरो व्येत्यबद्धं मनो दरिद्रं
चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा
हासीरित्याह नास्माद्दीक्षाऽपं क्रामति नास्य
नीलं न हरो व्येति यद्वै दीक्षितमभिवर्षति
दिव्या आपोऽशान्ता ओजो बलं दीक्षाम्
( २ ) तपोऽस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौजो
धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधि-
ष्टेत्याहैतदेव सर्वमात्मन्धत्ते नास्यौजो बलं न
दीक्षां न तपो निर्घ्नन्त्यग्निर्वै दीक्षितस्य देवता
सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ
रक्षाꣳसि हन्तोः ( ३ ) भद्रादभि श्रेयः प्रेहि
बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै
देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ सं
पारयत्येदमगन्म देवयजनं पृथिव्या इत्याह
देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते
विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येत-

देवा जोषयन्ते यद्ब्राह्मणा ऋक्सामाभ्यां यजुषा संतरन्त इत्याहक्सामाभ्यांꣳ ह्येष यजुषा संतरति यो यजते रायस्पोषेण समिषा मदेमे-त्याहाऽऽशिषमेवैतामा शास्ते (४) ॥

( यजमानो दीक्षाꣳ हन्तोर्ब्राह्मणाश्चतुर्विꣳशतिश्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयोऽष्टकः । )

---

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

प्रजापतिरिति प्रजा—पतिः । अकामयत । प्रजा इति प्र—जाः । सृजेय । इति । सः । तपः । अतप्यत । सः । सर्पान् । असृजत । सः । अकामयत । प्रजा इति प्र—जाः । सृजेय । इति । सः । द्वितीयम् । अतप्यत । सः । वयांꣳसि । असृजत । सः । अकामयत । प्रजा इति प्र—जाः । सृजेय । इति । सः । तृतीयम् । अतप्यत । सः । एतम् । दीक्षितवादमिति दीक्षित—वादम् । अपश्यत् । तम् । अवदत् । ततः । वै । सः । प्रजा इति प्र—जाः । असृजत । यत् । तपः । तप्त्वा । दीक्षितवादमिति ।

दीक्षित—वादम् । वदंति । प्रजा इतिं प्र—जाः । एव । तत् । यजंमानः ( १ ) । सृजते । यत् । वै । दीक्षितः । अमेध्यम् । पश्यंति । अपेतिं । अ-स्मात् । दीक्षा । क्रामति । नीलंम् । अस्य । हरंः । वीतिं । एति । अबंद्धम् । मनंः । दरिद्रम् । चक्षुंः । सूर्यंः । ज्योतिषाम् । श्रेष्ठंः । दीक्षे । मा । मा । हासीः । इतिं । आह । न । अस्मात् । दीक्षा । अपेतिं । क्रामति । न । अस्य । नीलंम् । न । हरंः । वीतिं । एति । यत् । वै । दीक्षितम् । अभिवर्षतीत्यंभि—वर्षंति । दिव्याः । आपंः । अशांन्ताः । ओजंः । बलंम् । दीक्षाम् ( २ ) । तपंः । अस्य । निरिति । घ्नन्ति । उन्दतीः । बलंम् । धत्त । ओजंः । धत्त । बलंम् । धत्त । मा । मे । दीक्षाम् । मा । तपंः । निरितिं । वधिष्ट । इतिं । आह । एतत् । एव । सर्वंम् । आत्मन् । धत्ते । न । अस्य । ओजंः । बलंम् । न । दीक्षाम् । न । तपंः । निरितिं । घ्नन्ति । अग्निः । वै । दीक्षि-तस्यं । देवतां । सः । अस्मात् । एतर्हिं । तिरः । इव । यर्हिं । यातिं । तम् । ईश्वरम् । रक्षाꣳसि । हन्तोंः ( ३ ) । भद्रात् । अभीतिं । श्रेयंः । प्रेतिं । इहि । बृहस्पतिंः । पुरएतेतिं पुरः—एता । ते ।

अस्तु । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । तम् । एव । अन्वारंभत इत्यनु—आरंभते । सः । एनम् । समिति । पारयति । एति । इदम् । अगन्म । देवयजनमिति देव—यजनम् । पृथिव्याः । इति । आह । देवयजनमिति देव—यजनम् । हि । एषः । पृथिव्याः । आगच्छतीत्या—गच्छति । यः । यजते । विश्वे । देवाः । यत् । अजुषन्त । पूर्वे । इति । आह । विश्वे । हि । एतत् । देवाः । जोषयन्ते । यत् । ब्राह्मणाः । ऋक्सामाभ्यामित्यृक्साम—भ्याम् । यजुषा । संतरन्त इति सं—तरन्तः । इति । आह । ऋक्सामाभ्यामित्यृक्साम—भ्याम् । हि । एषः । यजुषा । संतरतीति सं—तरति । यः । यजते । रायः । पोषेण । समिति । इषा । मदेम । इति । आह । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अत्र दीक्षायाः प्रथमभावित्वाद्दीक्षितेन वक्तव्या मन्त्रास्तद्विधयश्चास्य प्रथमप्रपाठकस्य प्रथमानुवाके प्रतिपाद्यन्ते । तत्र दीक्षितवादं विधित्सुः प्रस्तौति—

प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽ-

तप्यत स सर्पानसृजत सोऽकामयत प्रजाः सृजेयेति स द्वितीयमतप्यत स वयाꣳस्यसृजत सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं दीक्षितवादमपश्यत्तमवदत्ततो वै स प्रजा असृजत, इति।

पुरा प्रजापतिः प्रजासृष्टिं कामयमानो नियमविशेषरूपं तप एव द्विवारमनुष्ठितवान्। न तु दीक्षितवादम्। अतस्तद्विकले तपसि नीचानां सर्पाणां पक्षिणामेव सृष्टिमकरोत्। न तूत्तमानां मनुष्यादीनाम्। अग्निष्टोमोऽत्र प्रजापतेस्तपः। "अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ता अग्निष्टोमेनैव पर्यगृह्णात्" इति सप्तमकाण्डे वक्ष्यमाणत्वात्। तस्य च तपसस्तृतीये पर्याये दीक्षितवादवैकल्याभावान्मनुष्याद्युत्तमसृष्टिसाधनत्वं संपन्नम्॥

अथ नियमविशेषरूपतपोयुक्तस्य दीक्षितस्य दीक्षितवादं विधत्ते—

यत्तपस्तप्त्वा दीक्षितवादं वदति प्रजा एव तद्यजमानः सृजते, इति।

तपःशब्देन स्नानादिनियमोऽभिधीयते[1]। "अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे" इत्याम्नातत्वात्। स्नानादीत्यादिशब्देन दानमनशनं वैदिकमन्त्रपाठश्चेत्येतत्त्रयं विवक्षितम्। "एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति" इति। "तपो नानशनात्परं यद्धि परं तपस्तद्दुर्धर्षम्" "स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्यायः" इति वचनानां तत्र तत्राऽऽम्नातत्वात्। शाखान्तरे च त्र्यहं नाश्नातीति दीक्षितस्यानशनं तपो विहितम्। ईदृशं तपस्तप्त्वा तन्नियमं स्वीकृत्य दीक्षितवादं वदेत्। दीक्षितेन पठितव्यो मन्त्रो दीक्षितवादस्तत्पाठेन प्रजाः सृजते॥

तत्रैकं मन्त्रमुत्पाद्य तत्पाठं नैमित्तिकत्वेन विधत्ते—

यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति नीलमस्य हरो व्येत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरि-

1 ख. घ. ङ. च. °मो विधी°।

त्याह नास्माद्दीक्षाऽप क्रामति नास्य नीलं न हरो व्येति, इति ।

अमेध्यदर्शनेन दीक्षाया अपक्रमणं नाम दीक्षायां फलराहित्यम् । किं चामेध्यं दृष्टवतोऽस्य नीलं भवति कृष्णं पापमित्यर्थः । किं च हरो व्येति तेजो विगतं भवति । जुगुप्सया शरीरस्य विक्रियमाणत्वाच्छक्तिरपगच्छतीत्यर्थः । अबद्धमित्यादिको मन्त्रः । यदेतन्मदीयं मनस्तदेतदबद्धमनियतम् । अत एव यद्धि मनसा ध्यायति तद्वाचा वदति संकल्पयति । चक्षुश्च मदीयं दरिद्रं कृपणम् । अतः समीचीनमेव प्रकाशयामीत्येतादृशं प्रभुत्वं तस्य नास्ति । अत्र चोभयत्र निमित्तं छन्दोगा उद्गीथविद्यायां देवासुरसङ्ग्रामाख्यायिकया समामनन्ति—"अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम्" इति । अयमेवार्थो वाजसनेयिभिरप्युद्गीथब्राह्मणे प्रपञ्चितः । अतोऽवशयोर्मनश्चक्षुषोर्दोषो हे दीक्षे त्वया न गणनीयः । दर्शनहेतुभूतानां ज्योतिषां मध्ये श्रेष्ठोऽयं सूर्यः । स एव चक्षुर्दोषं समाधास्यतीत्यभिप्रायः । तन्मात्रप्रमादकारिणं मां हे दीक्षे[1] मा हासीर्मा परित्यजेति मन्त्रार्थः । एतस्य मन्त्रस्य पाठेन दीक्षाऽप्यस्मान्नापक्रामति । नीलं चास्य न भविष्यति । हरश्च न व्येति ॥

दृष्टिक्लेदनं निमित्तीकृत्य मन्त्रान्तरमुत्पाद्य विनियुङ्क्ते—

यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां तपोऽस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन्धत्ते नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्ति, इति ।

दिव्या अन्तरिक्षे वर्तमाना भूमिस्पर्शरहिता या आपस्ता अशान्ताः प्रत्यवायहेतवः । अत एव स्मर्यते—"न वर्षधारास्वाचामेत्" इति । ताश्च दिव्या आप ओजोबलदीक्षातपांसि नाशयन्ति । रेतःपरिपाकरूपशरीरबलहेतुरष्टमो धातुरोजः । उन्दतीरित्यादिको मन्त्रः । हे आपो यूयमुन्दतीः संक्लेदयन्त्यो मयि शारीरबलं स्थापयत । तत्कारणीभूतमोजोऽपि स्थापयत । पुनरपीन्द्रियगतं बलं स्थापयत । मदीयां दीक्षां मां निर्वधिष्ट मा विनाशयत ।

---

१ क. घ. ङ. च. 'क्षे मा मा ।

तपोऽपि मदीयं मा विनाशयतेति मन्त्रार्थः। अत्र सूत्रकारेण "स वाग्यतस्तपस्तप्यमान आस्ते" इत्युक्त्वा बहुविधनियमानुपन्यस्यैतदुक्तम्—"अबद्धं मन इत्यमेध्यं दृष्ट्वा जपत्युन्दतीर्बलं धत्तेत्यवदृष्टे" इति ॥

अध्वर्युमन्त्रकाण्डे "भद्रादभिश्रेयः" "एदमगन्म देवयजनम्" इत्येतौ मन्त्रावाम्नातौ। ब्राह्मणे त्वच्छिन्नं तन्तुं पृथिव्या इत्येतं पूर्वमन्त्रं व्याख्याय भद्रादभीत्यादिकौ द्वावुपेक्षितौ। तयोर्याजमानत्वेन दीक्षितवादप्रसङ्गादुक्तावुभावत्र व्याख्यायेते। एतेनाबद्धं मन इत्यादिकौ मन्त्रौ दैवीं धियं मनामह इत्यनुवाके संगताविति सूचितं भवति। भद्रादभीत्येष रथमारुह्य देवयजनमध्यवसि(सा)तुं गमने विनियुक्तो मन्त्रः। एदमगन्मेति देवयजनाध्यवसाने। तयोराद्यं मन्त्रं व्याचष्टे—

अग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोर्भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ सं पारयति, इति।

यदा दीक्षितो गृहात्प्रयाणं करोति तदा तत्स्वामी वह्निः कोपेन तिरोभूत इव भवति। तेन स्वामिरहितं दीक्षितं रक्षांसि मार्गेऽन्तरा भूत्वा हन्तुमीश्वरं समर्था भवन्ति। तत्परिहाराय भद्रादभीत्यादिमन्त्रं पठेत्। हे रथ भद्रान्मदीयाद्गृहाच्छ्रेयोऽत्यन्तप्रशस्तं देवयजनस्थानमभिप्रेहि आभिमुख्येन प्रतियाहि। तव पुरतो बृहस्पतिर्गन्ताऽस्त्विति मन्त्रार्थः। देवानां मध्ये बृहस्पतेर्ब्राह्मणत्वाद्रक्षांसि शप्तुं सामर्थ्यमस्ति। तादृशं च बृहस्पतिं यजमानोऽनुगच्छति। स च बृहस्पतिः सम्यक्पारं नयति ॥

द्वितीयमन्त्रस्य प्रथमभागार्थः प्रसिद्ध इति दर्शयति—

एदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते, इति।

पृथिव्याः संबन्धि यद्देवयजनं तदिदमागन्माऽऽगताः स्म इति तस्यार्थः। स च प्रत्यक्षेण दृश्यमानत्वात्प्रसिद्धः ॥

द्वितीयभागे देवशब्देन ब्राह्मणा ऋत्विग्भूता विवक्षिता इत्येतद्दर्शयति—

विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे

(दीक्षितेन वक्तव्यमन्त्राणां तद्विधीनां चाभिधानम्)

ह्येतद्देवा जोषयन्ते यद्ब्राह्मणाः, इति ॥

तृतीयभागे यागं कुर्वतो वेदत्रयापेक्षा प्रसिद्धेति दर्शयति—

ऋक्सामाभ्यां यजुषा संतरन्त इत्याहर्क्सामाभ्याꣳ ह्येष यजुषा संतरति यो यजते, इति।

सम्यग्यागस्य पारं प्राप्नोति ॥

चतुर्थभागे धनपुष्ट्याऽन्नेन च संभूय हृष्टत्वप्रार्थनमाशीरित्येतद्दर्शयति—

रायस्पोषेण समिषा मदेमेत्याहाऽऽशिषमेवैतामा शास्ते ॥, इति ॥

अस्मिन्काण्डे यदिदमनारभ्याधीतं तस्य सर्वस्य सामान्येन प्रकृतौ संबन्धः। विशेषतस्त्ववबद्धमित्यादेरनुवाकसंबन्धो दर्शितः । अमेध्यदर्शनवर्षणमन्त्रयोश्चाऽऽवृत्त्यभावो दैवीं धियमित्यस्मिन्नेवानुवाके विचारितः ॥

अत्र मीमांसा ।

तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—

"प्रकृतौ विकृतौ वा स्याद्यस्य पर्णेत्यसौ विधिः ।
प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ ॥
जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः ।
चोदकेनोभयप्राप्तेर्विकृतौ विधिनाऽत्र किम् ॥"

अनारभ्य श्रूयते—"यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति" इति । तत्राव्यभिचरितक्रतुसंबन्धवर्तीं जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधीयते। या जुहूः सा पर्णमयीति वाक्यं सर्वप्रकृतिविकृत्योस्तुल्यमेव प्रवर्तते । उभयत्राऽऽश्रयभूताया जुह्वाः सद्भावात् । तस्मात्प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते ब्रूमः—किमयं विधिर्विकृतौ चोदकात्पूर्वं निविशते पश्चाद्वा । नाऽऽद्यः । आश्रयभूताया जुह्वाश्चोदकमन्तरेणासंभवात् । द्वितीयेऽपि पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते । तत्र पुनर्विधेर्वैयर्थ्यादयं विधिः प्रकृतिमात्रगः । एवं यस्य खादिरः स्रुवो भवतीत्याद्युदाहरणीयम् ॥

तत्रैवाष्टमपादे चिन्तितम्—

"नाश्नाति ह्यहमित्येतत्तपः कस्य तयोर्द्वयोः ।
दुःखत्वाद्धोतृसंस्काराद्ध्वर्योर्युज्यते तपः ॥

---

१ ख. घ. ङ. च. °भावे दै° । २ ख. घ. ङ. च. °विधेः प्र° ।

फलान्तराय पापस्य नाशकत्वेन संस्कृतिः ।
लिङ्गात्तपः स्वामिगामि संस्कारान्तरवन्मतम् ॥"

ज्योतिष्टोमे द्व्यहं नाश्नाति त्र्यहं नाश्नातीत्यादिनोक्तं तपोऽध्वर्योर्युक्तं तस्य दुःखात्मकत्वेन परिक्रीतपुरुषैः कर्तुमुचितत्वात् । दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावाद्यजमानस्य न युक्तमिति चेत् । मैवम्, भाविनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत्पापं तस्य नाशकत्वेन दुःखरूपस्यापि तपसः स्वामिसंस्कारत्वसंभवात् । अस्मिन्नर्थे वाक्यशेषगतं लिङ्गं कल्पसूत्रकारेणैवोदाहृतम्—"यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति, यदाऽस्मिन्नन्तर्न किंचन भवत्यथ मेध्यो भवति, यदाऽस्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति, यदा वाऽस्य त्वचाऽस्थि संधीयतेऽथ मेध्यो भवति, पीवा दीक्षते कृशो यजते, यदस्याङ्गानां मीयते जुहोत्येव तादिति विज्ञायते" इति । नहि दुःखरूपं तपो विना दुःखप्रदं पापं नश्यति । यथा लोके पाटनमन्तरेण विषमव्रणानां नोपशान्तिस्तद्वत् । तस्माद्वपनादिसंस्कारवत्तपोऽपि यजमानस्यैव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूताद्यो वै सोमꣳ राजानꣳ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः पुरस्तात्सोमस्य क्रयादेवमभि मन्त्रयेत

---

१ ख. °वत्वतः । ज्यो° ।

साम्राज्यमेव ( १ ) एनं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रति तिष्ठतीति प्रजापतौ मनसीति ब्रूयात्त्रिरव जिघ्रेत्प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यः ( २ ) वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्ना श्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य ( ३ ) स्वं चमसोऽस्य स्वं यद्वायव्यं वा चमसं वाऽनन्वारभ्याऽऽश्रावयेत्स्वादियात्तस्मादन्वारभ्याऽऽश्राव्यꣳ स्वादेव नैति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो

यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्प्रत्येव सोमꣳ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यध्वर्युः ( ४ ) ॥

( एव तिष्ठति यो वायव्यमस्य ग्रहं वैकान्नविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

एषः । ते । गायत्रः । भागः । इति । मे । सोमाय । ब्रूतात् । एषः । ते । त्रैष्टुभः । जागतः । भागः । इति । मे । सोमाय । ब्रूतात् । छन्दोमानामिति छन्दः—मानाम् । साम्राज्यमिति सां—राज्यम् । गच्छ । इति । मे । सोमाय । ब्रूतात् । यः । वै । सोमम् । राजानम् । साम्राज्यमिति सां—राज्यम् । लोकम् । गमयित्वा । क्रीणाति । गच्छति । स्वानाम् । साम्राज्यमिति सां—राज्यम् । छन्दाꣳसि । खलु । वै । सोमस्य । राज्ञः । साम्राज्य इति सां—

राज्यः । लोकः । पुरस्तात् । सोमस्य । क्रयात् । एवम् । अभीति । मन्त्रयेत । साम्राज्यमिति सां—राज्यम् । एव ( १ ) । एनम् । लोकम् । गमयित्वा । क्रीणाति । गच्छति । स्वानाम् । साम्राज्यमिति सां—राज्यम् । यः । वै । तानूनप्त्रस्येति तानू—नप्त्रस्य । प्रतिष्ठामिति प्रति—स्थाम् । वेद । प्रतीति । एव । तिष्ठति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । न । प्राश्नन्तीति प्र—अश्नन्ति । न । जुह्वति । अथ । क्व । तानूनप्त्रमिति तानू—नप्त्रम् । प्रतीति । तिष्ठति । इति । प्रजापताविति प्र-जा—पतौ । मनसि । इति । ब्रूयात् । त्रिः । अवेति । जिघ्रेत् । प्रजापताविति प्रजा—पतौ । त्वा । मनसि । जुहोमि । इति । एषा । वै । तानूनप्त्रस्येति तानू—नप्त्रस्य । प्रतिष्ठेति प्रति—स्था । यः । एवम् । वेद । प्रतीति । एव । तिष्ठति । यः ( २ ) । वै । अध्वर्योः । प्रतिष्ठामिति प्रति—स्थाम् । वेद । प्रतीति । एव । तिष्ठति । यतः । मन्येत । अनभिक्रम्येत्यनभि—क्रम्य । होष्यामि । इति । तत् । तिष्ठन् । एति । श्रावयेत् । एषा । वै । अध्वर्योः । प्रतिष्ठेति प्रति—स्था । यः । एवम् । वेद । प्रतीति । एव ।

तिष्ठति । यत् । अभिक्रम्येत्यभि—क्रम्य । जुहुयात् । प्रतिष्ठाया इति प्रति—स्थायाः । इयात् । तस्मात् । समानत्र । तिष्ठता । होतव्यम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । यः । वै । अध्वर्योः । स्वम् । वेद । स्ववानिति स्व—वान् । एव । भवति । स्रुक् । वै । अस्य । स्वम् । वायव्यम् । अस्य ( ३ )। स्वम् । चमसः । अस्य । स्वम् । यत् । वायव्यम् । वा । चमसम् । वा । अनन्वारभ्येत्यनन्—आरभ्य । आश्रावयेदित्या—श्रावयेत् । स्वात् । इयात् । तस्मात् । अन्वारभ्येत्यनु—आरभ्य । आश्राव्यमित्या—श्राव्यम् । स्वात् । एव । न । एति । यः । वै । सोमम् । अप्रतिष्ठाप्येत्यप्रति—स्थाप्य । स्तोत्रम् । उपाकरोतीत्युप—आकरोति । अप्रतिष्ठित इत्यप्रति—स्थितः । सोमः । भवति । अप्रतिष्ठित इत्यप्रति—स्थितः । स्तोमः । अप्रतिष्ठितानीत्यप्रति—स्थितानि । उक्थानि । अप्रतिष्ठित इत्यप्रति—स्थितः । यजमानः । अप्रतिष्ठित इत्यप्रति—स्थितः । अध्वर्युः । वायव्यम् । वै । सोमस्य । प्रतिष्ठेति प्रति—स्था । चमसः । अस्य । प्रतिष्ठेति प्रति—स्था । सोमः । स्तोमस्य । स्तोमः । उक्थानाम् । ग्रहम् । वा । गृहीत्वा ।

( सोमोपस्थानमन्त्रोत्पादनम् )

चमसम् । वा । उन्नीयेत्युत्—नीय । स्तोत्रम् । उपाकुर्यादित्युप—आकुर्यात् । प्रतीति । एव । सोमम् । स्थापयति । प्रतीति । स्तोमम् । प्रतीति । उक्थानि । प्रतीति । यजमानः । तिष्ठति । प्रतीति । अध्वर्युः ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः । )

---

आद्ये संकीर्तितौ मन्त्रौ दृष्टौ चामेध्यदर्शने ॥
द्वितीयानुवाके सोमोपस्थानमन्त्राश्चत्वार उत्पाद्यन्ते—

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् , इति ।

हे देवतात्मक सोम राजन्नेष पुरतो दृश्यमानः क्रेतव्यो वल्लीरूपस्ते त्वदीयो भागो गायत्रः प्रातःसवने गायत्रीछन्दसा संस्कार्य इत्येताद्दग्यजमानरूपस्य मे गायत्री देवता सोमाय ब्रूतात् । एवं त्रैष्टुभो माध्यंदिने सवने त्रिष्टुप्छन्दसा संस्कार्यः । अस्मिन्नेष त इति मन्त्रो नानुषज्यते । भाग इति मे सोमाय ब्रूतादित्ययमुत्तरांशोऽनुषज्यते । जागतस्तृतीयसवने जगतीछन्दसा संस्कार्यः । अत्रैष त इत्ययं पूर्वांश एवानुषज्यते । छन्दोभिर्गायत्रीत्रिष्टुब्जगतीभिरक्षरसंख्यया मीयन्त उपमीयन्त इति चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्याः स्तोमास्त्रयश्छन्दोमास्तेषां साम्राज्यं द्वादशाहादिपूत्तरक्रतुषु विद्यते तत्साम्राज्यं गच्छेत्येतद्यजमानस्य मे वचनं तेन तेन स्तोमेनाऽऽराध्या देवता सोमाय राज्ञे ब्रूतात् । अत्र चतुर्विंशाख्यस्तोमरूपस्य च्छन्दोमस्य विष्टुतिः सामब्राह्मण इत्थं समाम्नाता—" अष्टाभ्यो हिं करोति स तिसृभिः स

चतसृभिः स एकया। अष्टाभ्यो हिं करोति स एकया स तिसृभिः स चतसृभिः। अष्टाभ्यो हिं करोति स चतसृभिः स एकया स तिसृभिरित्येषा वै प्रतिष्ठा चतुर्विंशस्य विष्टुतिः" इति। अस्यायमर्थः—सामाधारभूतस्य तृचस्य प्रथमपर्याये प्रथमामृचं त्रिर्गायेत्। द्वितीयां चतुर्गायेत्। तृतीयां सकृद्गायेत्। द्वितीये पर्याये प्रथमां सकृद्गायेद्द्वितीयां त्रिर्गायेत्तृतीयां चतुर्गायेत्। तृतीये पर्याये प्रथमां चतुर्गायेद्द्वितीयां सकृद्गायेत्तृतीयां त्रिर्गायेत्। सेयं चतुर्विंशस्तोमसंबन्धिनी विशिष्टा स्तुतिः। अथ चतुश्चत्वारिंशस्तोम एवमाम्नायते—"पञ्चदशभ्यो हिं करोति स तिसृभिः स एकादशभिः स एकया। चतुर्दशभ्यो हिं करोति स एकया स तिसृभिः स दशभिः। पञ्चदशभ्यो हिं करोति स एकादशभिः स एकया स तिसृभिरित्येषा वै प्रतिष्ठिता चतुश्चत्वारिंशस्य विष्टुतिः" इति। प्रथमपर्याये प्रथमां त्रिर्गायेत्। द्वितीयामेकादशकृत्वो गायेत्। तृतीयां सकृद्गायेत्। द्वितीये पर्याये प्रथमां सकृद्गायेद्द्वितीयां त्रिर्गायेत्तृतीयां दशकृत्वो गायेत्। तृतीये पर्याये प्रथमामेकादशकृत्वो गायेद्द्वितीयां सकृद्गायेत्तृतीयां त्रिर्गायेत्। सेयं चतुश्चत्वारिंशस्तोमाख्यस्य च्छन्दोमस्य विष्टुतिः। अथाष्टाचत्वारिंशस्तोमस्य विष्टुतिरेवमाम्नायते—"षोडशभ्यो हिं करोति स तिसृभिः स द्वादशभिः स एकया। षोडशभ्यो हिं करोति स एकया स तिसृभिः स द्वादशभिः। षोडशभ्यो हिं करोति स द्वादशभिः स एकया स तिसृभिरित्येषा वै प्रतिष्ठिताऽष्टाचत्वारिंशस्य विष्टुतिः" इति। प्रथमे पर्याये प्रथमां त्रिर्गायेत्। मध्यमां द्वादशकृत्वो गायेत्। उत्तमां सकृद्गायेत्। द्वितीये पर्याये प्रथमां सकृद्गायेन्मध्यमां त्रिरुत्तमां द्वादशकृत्वः। तृतीये पर्याये प्रथमां द्वादशकृत्वो द्वितीयां सकृत्तृतीयां त्रिर्गायेत्। सेयमष्टाचत्वारिंशस्तोमाख्यस्य च्छन्दोमस्य विष्टुतिरिति। द्वादशाहक्रतोरष्टममहश्चतुर्विंशस्तोमसाध्यं नवममहश्चतुश्चत्वारिंशस्तोमसाध्यं दशममहरष्टाचत्वारिंशस्तोमसाध्यम्। तस्माच्छन्दोमानां साम्राज्यं द्वादशाहाद्युत्तरक्रतुषु प्राप्यते॥

एष ते गायत्र इत्यादींश्चतुरो मन्त्रान्विनियोक्तुं प्रस्तौति—

यो वै सोमꣳ राजानꣳ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः, इति।

यजमानः सोमदेवतारूपं राजानं साम्राज्यरूपं लोकं प्रापय्य पश्चाद्वल्ली-

( सोमोपस्थानमन्त्रोत्पादनम् )

रूपं सोमं क्रीणाति । स स्वानां मध्ये साम्राज्यं गच्छति । गायत्रीत्रिष्टुब्जगतीरूपाणि च्छन्दांसि तैरुपलक्षिताश्छन्दोमाश्च सोमस्य राज्ञः साम्राज्ययुक्तो लोक इत्युच्यते ॥

अथ चतुरो मन्त्रान्सोमाभिमन्त्रणे विनियुङ्क्ते—

पुरस्तात्सोमस्य क्रयादेवमभि मन्त्रयेत साम्राज्यमेवैनं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यम् , इति ।

एवमिति एष ते गायत्र इत्यादिभिश्चतुर्भिरित्यर्थः । प्राकरणिकानुवाकसंबन्धस्तु पुरस्तात्सोमस्य क्रयादेव स्पष्टमवगम्यते । सोमं ते क्रीणामीति मन्त्रेण सोमक्रय आरब्धस्तत्पूर्वमꣳशुना ते अꣳशुरित्यनुवाकस्यावसाने प्रजास्त्वामनुप्राणन्त्वित्येतदूर्ध्वमेष ते गायत्र इत्यादयश्चत्वारो मन्त्रा द्रष्टव्याः । पूर्वोक्तयोरबद्धं मन उन्दतीर्बलमित्येतयोर्मन्त्रयोर्यद्यपीदृशं स्पष्टं वचनं नास्ति तथाऽपि दीक्षितस्य वाद इति वाक्येन प्रकरणप्रसिद्धं दीक्षितमनूद्य वादविधानाद्दीक्षितत्वसिद्धेरूर्ध्वभावित्वं गम्यते । दीक्षितत्वमाकूत्यै प्रयुजेऽग्नये स्वाहेत्यनुवाके संपन्नं तदीयब्राह्मणे दीक्षितत्वावेदनस्याऽऽम्नातत्वात् "स्वाहा यज्ञं वातादारभ इत्याहायं वाव यः पवते स यज्ञस्तमेव साक्षादारभते मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्या अदीक्षिष्टायं ब्राह्मण इति त्रिरुपाꣳश्वाह" इति । तस्माद्यज्ञं वातादारभ इत्येतस्मादुपर्यबद्धं मन उन्दतीर्बलमित्येतौ द्रष्टव्यौ । एवमुत्तरत्रापि सर्वत्रौपानुवाक्ये योजनीयम् ॥

अथ तानूनप्त्राख्यावघ्राणं विधातुं प्रस्तौति—

यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रति तिष्ठतीति प्रजापतौ मनसीति ब्रूयात्, इति ।

तनूनप्त्रे त्वा गृह्णामीत्यादिभिर्मन्त्रैश्चमसे यदाज्यं गृह्यते तत्तानूनप्त्रं तस्य प्रतिष्ठा न ज्ञायते । सोमरसस्य तु वह्नौ हुतत्वादृत्विग्भिः पीतत्वाच्चास्ति प्रतिष्ठितत्वम् । तानूनप्त्रे तु तदुभयं नास्तीति ब्रह्मवादिभिः पृष्टो बुद्धिमानुत्तरं ब्रूयान्मनसा प्रजापतौ स्थापनादस्ति प्रतिष्ठेति ॥

---

१ ख. °वाक्यं यो° ।

इदानीं मन्त्रेणावघ्राणं विधत्ते—

त्रिरव जिघ्रेत्प्रजापतौ त्वा मनसि
जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा
य एवं वेद प्रत्येव तिष्ठति , इति।

प्रजापताविल्यादिर्मन्त्रः । हे तानूनप्त्र त्वां प्रजापतौ जुहोमीत्येवं मनसि स्मरामीति शेषः । अयं च मन्त्रोऽग्नेरातिथ्यमसीत्यनुवाकस्यान्ते द्रष्टव्यः । त एते पूर्वोक्ता मन्त्रा विधयश्च याजमानाः । इत ऊर्ध्वं त्वाध्वर्यवाः ॥

तत्राऽऽश्रावणं विधत्ते—

यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति
यतो मन्येतानभिक्रम्य होष्यामीति तत्ति-
ष्ठन्ना श्रावयेदेषा वा अध्वर्योः प्रतिष्ठा
य एवं वेद प्रत्येव तिष्ठति , इति।

आश्रावणमारभ्य होमपर्यन्तमेकत्रावस्थानमध्वर्योः प्रतिष्ठा । आहवनीयसमीपादिषु होमदेशेषु मध्ये यस्माद्देशादभिक्रमणमकृत्वा यं होमं होष्यामीति मन्येत तद्धोमार्थं तस्मिन्नेव देशे तिष्ठन्नाश्रावयेत् ॥

आश्रावणदेशादन्यत्र गत्वा होमं निन्दति—

यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्तस्मात्स-
मानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै , इति।

इयात्प्रच्यवेत । समानत्र समानदेशे यत्राऽऽश्रावणं तत्रैवेत्यर्थः । सोऽयं विधिः सर्वाश्रावणसाधारणत्वात्सर्वत्रान्वेति । प्रयाजेषु त्वभिक्रामं जुहोतीति वाचनिकमभिक्रमणम् ॥

आश्रावणकाले होमसाधनस्य हस्ते धारणं विधत्ते—

यो वा अध्वर्योः स्वं वेद स्ववानेव भवति
स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽ-
स्य स्वं यद्वायव्यं वा चमसं वाऽ-
नन्वारभ्याऽऽश्रावयेत्स्वादियात्तस्मादन्वार-
भ्याऽऽश्राव्यꣳ स्वादेव नैति , इति।

( सोमोपस्थानमन्त्रोत्पादनम् )

स्रुग्जुह्वाद्यैन्द्रवायवादिसोमरसग्रहणाधारभूतं पात्रं वायव्यं वायुना वरस्य वृतत्वात्, मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति। तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्त इत्याम्नातः सोमरसोन्नयनपात्रविशेषश्चमसः। यद्यपि स्रुगप्यत्रोपन्यस्ता तथाऽपि सोमब्राह्मणशेषत्वाद्वायव्यचमसयोरेवान्वारम्भणं धारणमत्र विधीयते। तेन स्रुचां धारणमप्युपलक्ष्यत इति द्रष्टव्यम्। अन्वारभ्य हस्ते गृहीत्वेत्यर्थः॥

अथ प्रातःसवनादिस्तोत्राणां कालविशिष्टमुपाकरणं विधत्ते—

यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्प्रत्येव सोमꣳ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यध्वर्युः॥, इति॥

स्तोत्रस्योपाकरणप्रकारमापस्तम्बो दर्शयति—"वायुर्हिंकर्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छति सर्वेषु पवमानेष्वेवमुपाकरणोऽसर्ज्यसर्जि वागसर्ज्यैन्द्रꣳ सहोऽसर्ज्युपावर्तध्वमिति बर्हिर्भ्यामन्यानि पवमानेभ्यः स्तोत्राण्युपाकरोति" इति। ग्रहे चमसे वा सोमरसस्य प्रक्षेपः प्रतिष्ठापनम्। तदकरणे सोमोऽप्रतिष्ठितो भवति। सोमस्याप्रतिष्ठायां स्तोमस्य प्रगीतमन्त्रसाध्याया(?)स्तुतेनाप्रतिष्ठा भवति। तदप्रतिष्ठायां स्तुतमनुशंसतीति विहितानामप्रगीतमन्त्रसाध्यस्तुतिरूपाणामुक्थशब्दाभिधेयानां शस्त्राणामप्रतिष्ठा भवति। तदप्रतिष्ठायां च यज्ञस्यासिद्धेर्यजमानोऽध्वर्युश्चेत्युभावप्रतिष्ठितौ भवतः। कथं तर्ह्युक्तपरम्पराया उत्तरोत्तरप्रतिष्ठा भवतीति। तदुच्यते—यदि वायव्ये चमसे वा सोमः प्रतिष्ठितो भवति। ततः स्तोत्रशस्त्रयजमानाध्वर्यूणामुत्तरोत्तरप्रतिष्ठा। तस्माद्वायव्य ऊर्ध्वपात्रे सोमरसं गृहीत्वा वा चमसं सोमरसेन पूरयित्वा वा सूत्रोक्तप्रकारेण स्तोत्रमुपाकुर्यात्। आश्विनग्रहात्पूर्वभाविष्वैन्द्रवायवादिग्रहेषु गृहीतेषु बहिष्पवमानस्य यदुपाकरणं तत्र चमसोन्नयनाभावाद्ग्रहणमेवोपाकरण-

१ ख. 'यव्यादूर्ध्वे'।

कालस्योपलक्षणम् । तृतीयसवने पात्नीवतान्तेषु ग्रहेषु हुतेषु चमसान्पूरयित्वा यज्ञायज्ञियस्तोत्रमुपाकरोति । तत्र ग्रहग्रहणाभावाच्चमसोन्नयनमेवोपाकरणकालोपलक्षणम् । अत एवाऽऽपस्तम्ब आह—“होतृचमसमुख्यांश्चमसानुन्नयन्सर्व२ राजानमुन्नीय दशाभिः कलशौ मृष्ट्वा न्युब्जति यज्ञायज्ञियस्य स्तोत्रमुपाकरोति” इति । यदि तृतीयप्रपाठके—एतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोतीत्येष उपाकरणविधिः स्यात्तर्हि तदनुवादेनात्र कालविधिरस्तु । ग्रहचमसोन्नयनोर्ध्वकालभाविना स्तोत्रोपाकरणेन च सोमस्तोमादिपरम्परायाः प्रतिष्ठा संपद्यते । सोमं प्रतिष्ठापयतीत्यन्वयः । स्तोत्रमुक्थानीत्यत्रापि तथाऽन्वेतव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः । )

---

यज्ञं वा एतत्सं भरन्ति यत्सोमक्रयण्यै पदं यज्ञमुखꣳ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्याद्यज्ञमुख एव यज्ञमनु सं तनोति प्राञ्चमग्निं प्र हरन्त्युत्पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनु ध्यायति स ईश्वरो रुद्रो भूत्वा ( १ ) प्रजां पशून्यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत्तेनैवैनं भागिनं करोति यजमानो वा आहवनीयो यजमानं वा एतद्वि

---

१ ख. मृशन्नुक्षति । २ ख. च. °न सो° ।

कर्षन्ते यदाहवनीयात्पशुश्रपणꣳ हरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवं द्येत्सैव ततः प्रायश्चित्तिर्ये पशुं विमथ्नीरन्यस्तान्कामयेताऽऽर्तिमार्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीध्रे जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमार्छन्ति (२)॥

(भूत्वा ततः षड्विꣳशतिश्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(अथ तृतीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः।)

---

यज्ञम्। वै। एतत्। समिति। भरन्ति। यत्। सोमक्रयण्या इति सोम—क्रयण्यै। पदम्। यज्ञमुखमिति यज्ञ—मुखम्। हविर्धाने इति हविः—धाने। यर्हि। हविर्धाने इति हविः—धाने। प्राची इति। प्रवर्तयेयुरिति प्र—वर्तयेयुः। तर्हि। तेन। अक्षम्। उपेति। अञ्ज्यात्। यज्ञमुख इति यज्ञ—मुखे। एव। यज्ञम्। अनु। समिति। तनोति। प्राञ्चम्। अग्निम्। प्रेति। हरन्ति। उदिति। पत्नी-

म् । एतिं । नयन्ति । अन्वितिं । अनां॑सि ।
प्रेतिं । वर्तयन्ति । अर्थ । वै । अस्य । एषः । धि-
ष्णियः । हीयते । सः । अन्वितिं । ध्यायति । सः ।
ईश्वरः । रुद्रः । भूत्वा ( १ ) । प्रजामितिं प्र—जा-
म् । पशून् । यजमानस्य । शमयितोः । यर्हि ।
पशुम् । आप्रीतमित्या—प्रीतम् । उदंञ्चम् । नयं-
न्ति । तर्हि । तस्यं । पशुश्रपंणमितिं पशु—श्रपंण-
म् । हरेत् । तेनं । एव । एनम् । भागिनंम् । क-
रोति । यजमानः । वै । आहवनीय इत्यां—हवनी-
यः । यजमानम् । वै । एतत् । वीतिं । कर्षन्ते ।
यत् । आहवनीयादित्यां—हवनीयात् । पशुश्रपंण-
मितिं पशु—श्रपंणम् । हरंन्ति । सः । वा । एव ।
स्यात् । निर्मन्थ्यमितिं निः—मन्थ्यम् । वा । कुर्या-
त् । यजमानस्य । सात्मत्वायेतिं सात्म—त्वाय ।
यदिं । पशोः । अवदानमित्यव—दानम् । नश्येत् ।
आज्यस्य । प्रत्याख्यायमितिं प्रति—आख्यायम् ।
अवेतिं । द्येत् । सा । एव । ततः । प्रायश्चित्तिः ।
ये । पशुम् । विमथ्नीरन्नितिं वि—मथ्नीरन् । यः । तान् ।
कामयेत । आर्तिम् । एतिं । ऋच्छेयुः । इतिं ।
कुवित् । अङ्ग । इतिं । नमोवृक्तिवत्येति नमोवृक्ति—

(सोमक्रयणीपदाञ्जनादिविध्यभिधानम्)

वत्या। ऋचा। आग्नींध्र इत्याग्निं—इध्रे। जुहुयात्।
नमोंवृक्तिमिति नर्मः—वृक्तिम्। एव। एषाम्।
वृङ्क्ते। ताजक्। आर्तिम्। एति। ऋच्छन्ति (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

(अथ तृतीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः।)

---

द्वितीये स्वामिनो मन्त्राश्चाध्वर्योर्विधयः श्रुताः॥

अथ तृतीये सोमक्रयणीपदाञ्जनादिविधयः श्रूयन्ते। तत्र षष्ठकाण्डे यद्विहितं पत्न्युपानक्ति पत्नी हि सर्वस्य मित्रमिति तस्मिन्हविर्धानयोरक्षाञ्जने पूर्वं संगृह्य स्थापितस्य सोमक्रयणीपदपांसोः साधनत्वं विधत्ते—

यज्ञं वा एतत्सं भरन्ति यत्सोमक्रयण्यै
पदं यज्ञमुख्ँ हविर्धाने यर्हि हविर्धाने
प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्याद्यज्ञ-
मुख एव यज्ञमनु सं तनोति, इति।

सोमक्रयण्याः षट्पदान्यनुनिष्क्रम्य सप्तमे पदे हुत्वा तेनाऽऽज्येनाक्तस्य पांसोर्यत्संभरणं कृतं तद्यज्ञस्यैव संभरणं कृतं तस्य पांसोर्यज्ञोपकारित्वात्। ये तूभे हविषोर्धारके शकटे यज्ञमुखस्थानीये प्रधानहविषः सोमस्य धारकत्वेन मुख्यत्वात्। एवं सति यदा गार्हपत्यसमीपस्थे ते उभे शकटे प्राङ्मुखे प्रवर्तयेयुस्तदा तेन पदपांसुना घृताक्तेनाक्षस्य धुरमुपाञ्ज्यात्। तथा सति हविर्धानात्मन्येव यज्ञमुखे पदपांसुरूपे यज्ञमनु संततं कृतवान्भवति॥

अथ प्राचीनवंशस्य पश्चिमदेशस्थितात्पुरातनगार्हपत्यादग्नीषोमीयपशुश्रपणार्थस्याग्नेः श्रपणदेशं प्रति नयनं विधत्ते—

प्राञ्चमग्निं प्र हरन्त्युत्पत्नीमा नयन्त्यन्वनाँ-
सि प्र वर्तयन्त्यथ वा अस्यैष धिष्णियो
हीयते सोऽनु ध्यायति स ईश्वरो रुद्रो भूत्वा

---

१ क. घ. ङ. °पणस्या°।

प्रजां पशूंन्यजमानस्य शमयितोर्यर्हि पशु- मातीतमुदञ्चं नयन्ति तर्हि तस्य पशु- श्रपणꣳ हरेत्तेनैवैनं भागिनं करोति, इति।

षष्ठकाण्डे यदाम्नातम्-"आ सोमं ददत आ ग्राव्ण आ वायव्यान्या द्रोण- कलशमुत्पत्नीमा नयन्त्यन्वनाꣳसि प्रवर्तयति" इति। यदपि सूत्रकारेणोक्तम्— "अयं नो अग्निर्वरिवः कृणोत्वित्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चोऽभिप्रव्र- जन्ति" इति, तत्र पूर्वं पश्चिमदिगवस्थिते गार्हपत्ये स्थितोऽग्निः शालामुखीये पुरातनाहवनीये प्रथमं नीतः। अनन्तरं ततोऽपि प्राङ्मुखोद्धृतः। तदिदमुच्यते— प्राञ्चमग्निं प्रहरन्तीति। पश्चिमदिगवस्थितायां पत्नीशालायामवस्थितां पत्नीमपि शालामुखीयं पुरातनाहवनीयं प्रत्युदानयन्ति। प्रतीचीनगार्हपत्यसमीपस्थितानि शकटान्यपि प्राग्देशेऽनुक्रमेण प्रवर्तितानि। यदैतत्सर्वं संपद्यते तदानीमेवास्य पुरातनगार्हपत्यस्य धिष्णियः स्थानविशेषो हीयते शून्यो भवति। स चाग्निः पुनः पुनर्मनसि चिन्तयति। चिन्तयमानश्चासौ रुद्रः क्रूरो भूत्वा यजमानस्य प्रजां पशूञ्शमयितोर्विनाशयितुं समर्थो भवति। तस्य कः प्रतीकार इति तदुच्यते— आप्रीसंज्ञकाभिः प्रयाजयाज्याभिराप्रीतं तोषितं पशुं यदोदङ्मुखं नयन्ति तदा तस्य प्रतीचीनगार्हपत्यस्य संबन्धिनं पशुश्रपणकारिणमग्निं हरेत्। तेनैव हरणेनैनं प्रतीचीनगार्हपत्याग्निं भागयुक्तं करोति। ततः प्रजाद्यविनाश इति द्रष्टव्यम्॥

नन्वाहवनीयादेव पशुश्रपणमग्निं कुतो न हरेयुरित्याशङ्क्य तत्र दोषं दर्शयति—

यजमानो वा आहवनीयो यजमानं वा एतद्वि कर्षन्ते यदाहवनीयात्पशुश्रपणꣳ हरन्ति स वैव स्यान्नि- र्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय, इति।

आहवनीयादग्निं विकृष्य हरणे यजमानस्यायं विकर्षः स्यात्। आहवनी- यस्य प्रधानत्वेन यजमानरूपत्वात्। तस्मात्पूर्वोक्तः सोऽग्निरेव[1] वा स्यात्। अथवा निर्मथनेन लौकिकेन कंचिदग्निं श्रपणार्थमुत्पादयेत्। एवं सति यज- मानो विकर्षरहितः संपूर्णस्वरूपो भवति॥

अथ पशुप्रसङ्गेन किंचित्प्रायश्चित्तं विधत्ते—

---

१ ख. घ. ङ. च. 'ग्निरिव।

यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमव द्येत्सैव ततः प्रायश्चित्तिः, इति ।

प्रत्याख्यायं प्रत्येकं गणयित्वा यावन्त्यवदानानि नष्टानि तावत्कृत्व आज्यमवद्येत्सेयमवदानक्रियैव ततो दोषाद्विमोचनाय प्रायश्चित्तिर्भवति ॥

अथ प्रासङ्गिकं काम्यं विधत्ते—

ये पशुं विमथ्नीरन्यस्तान्कामयेताऽऽर्तिमार्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीध्रे जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमार्छन्ति ॥, इति ॥

ये वैरिणः पशुमुद्दिश्य विमथ्नीरन्कलहं कुर्वीरन्नस्मदीयोऽयं पशुरिति यदि हरेयुस्तदानीमपहर्तॄन्प्रति यो यजमान आर्तिमाप्नुयुरिति कामयेत सोऽयं कुविदङ्गेत्यृचाऽऽग्नीध्रधिष्णियस्थवह्नौ जुहुयात् । तस्या ऋचः सामर्थ्यं द्योतयितुं नमोवृक्तिवत्येत्युक्तम् । ये बर्हिषो नमोवृक्तिं न जग्मुरित्येवं नमोवृक्तिशब्दोऽस्यामस्तीति नमोवृक्तिवती । एषामपहर्तॄणां नमोवृक्तिमेव वृङ्क्ते नमस्कार्यत्ववर्जनमेव करोति । बन्धुमित्रादयः शिष्टादयोऽन्यजना अपि यथा तान्न नमस्कुर्वन्ति तथा बहिष्करोतीत्यर्थः । ते मानहानिं प्राप्तास्तदानीमेव म्रियन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

प्रजापंतेर्जायंमानाः प्रजा जाताश्च या इमाः । तस्मै प्रति प्र वेंदय चिकित्वाꣳ अनुं मन्यताम् । इमं पशुं पंशुपते ते अद्य बध्नाम्यंग्ने सुकृतस्य मध्ये । अनुं मन्यस्व सुयजां यजाम जुष्टं देवानांमिदमंस्तु हव्यम् । प्रजानन्तः प्रतिं गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् । सुवर्गं

याहि पथिभिर्देवयानैरोषधीषु प्रति तिष्ठा शरीरैः। येषामीशे ( १ ) पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्। निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु। ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च। अग्निस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः। य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः। वायुस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः। प्रमुञ्चमानाः ( २ ) भुवनस्य रेतो गातुं धत्त यजमानाय देवाः। उपाकृतꣳ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः। नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः। जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः। यत्पशुर्मायुमकृतोरो वा पद्भिराहते। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः। शमितार उपेतन यज्ञम् ( ३ ) देवेभिरिन्वितम्। पाशात्पशुं प्र मुञ्चत बन्धाद्यज्ञपतिं परि। अदितिः पाशं प्र मुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि।

अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रति मुञ्चामि पाशम् । त्वामु ते दधिरे हव्यवाहꣳ शृतंकर्तारमुत यज्ञियं च । अग्ने सदक्षः सतनुर्हि भूत्वाऽथ हव्या जातवेदो जुषस्व । जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ । घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः । स्वाहा देवेभ्यो देवेभ्यः स्वाहा ( ४ ) ॥

( ईशे प्रमुञ्चमाना यज्ञं त्वꣳ षोडश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

प्रजापतेरिति प्रजा—पतेः । जायमानाः । प्रजा इति प्र—जाः । जाताः । च । याः । इमाः । तस्मै । प्रति । प्रेति । वेदय । चिकित्वान् । अन्विति । मन्यताम् । इमम् । पशुम् । पशुपत इति पशु—पते । ते । अद्य । बध्नामि । अग्ने । सुकृतस्येति सु—कृतस्य । मध्ये । अन्विति । मन्यस्व । सुयजेति सु—यजा । यजाम । जुष्टम् । देवानाम् । इदम् । अस्तु । हव्यम् । प्रजानन्त इति प्र—जानन्तः । प्रतीति ।

गृह्णन्ति । पूर्वे । प्राणमिति प्र—अनम् । अङ्गेभ्यः । परीति । आचरन्तमित्या—चरन्तम् । सुवर्गमिति सु-वः—गम् । याहि । पथिभिरिति पथि—भिः । देव-यानैरिति देव—यानैः । ओषधीषु । प्रतीति । तिष्ठ । शरीरैः । येषाम् । ईशे ( १ ) । पशुपतिरिति पशु—पतिः । पशूनाम् । चतुष्पदामिति चतुः—पदाम् । उत । च । द्विपदामिति द्वि—पदाम् । निष्क्रीत इति निः—क्रीतः । अयम् । यज्ञियम् । भागम् । एतु । रायः । पोषाः । यजमानस्य । सन्तु । ये । बध्यमा-नम् । अन्विति । बध्यमानाः । अभ्यैक्षन्तेत्यभि—ऐक्षन्त । मनसा । चक्षुषा । च । अग्निः । तान् । अग्रे । प्रेति । मुमोक्तु । देवः । प्रजापतिरिति प्रजा—पतिः । प्रजयेति प्र—जया । संविदान इति सं—वि-दानः । ये । आरण्याः । पशवः । विश्वरूपा इति विश्व—रूपाः । विरूपा इति वि—रूपाः । सन्तः । बहुधेति बहु—धा । एकरूपा इत्येक—रूपाः । वायुः । तान् । अग्रे । प्रेति । मुमोक्तु । देवः । प्रजापतिरिति प्रजा—पतिः । प्रजयेति प्र—जया । संविदान इति सं—विदानः । प्रमुञ्चमाना इति प्र—मुञ्चमानाः(२) । भुवनस्य । रेतः । गातुम् । धत्त । यजमानाय । देवाः । उपाकृ-

तमित्युप—आकृतम् । शशमानम् । यत् । अस्थात् । जीवम् । देवानाम् । अपीति । एतु । पाथः । नाना । प्राण इति प्र—अनः । यजमानस्य । पशूनाम् । यज्ञः । देवेभिः । सह । देवयान इति देव—यानः । जीवम् । देवानाम् । अपीति । एतु । पाथः । सत्याः । सन्तु । यजमानस्य । कामाः । यत् । पशुः । मायुम् । अकृत । उरः । वा । पद्भिरिति पत्—भिः । आहत इत्या—हते । अग्निः । मा । तस्मात् । एनसः । विश्वात् । मुञ्चतु । अꣳहसः । शमितारः । उपेतनेत्युप—एतन । यज्ञम् (३) । देवेभिः । इन्वितम् । पाशात् । पशुम् । प्रेति । मुञ्चत । बन्धात् । यज्ञपतिमिति यज्ञ—पतिम् । परि । अदितिः । पाशम् । प्रेति । मुमोक्तु । एतम् । नमः । पशुभ्य इति पशु—भ्यः । पशुपतय इति पशु—पतये । करोमि । अरातीयन्तम् । अधरम् । कृणोमि । यम् । द्विष्मः । तस्मिन् । प्रतीति । मुञ्चामि । पाशम् । त्वाम् । उ । ते । दधिरे । हव्यवाहमिति हव्य—वाहम् । श्रृतंकर्तारमिति श्रृतं—कर्तारम् । उत । यज्ञियम् । च । अग्ने । सदक्ष इति स—दक्षः । सतनुरिति स—तनुः, हि । भूत्वा । अथ । हव्या । जातवेद इति जात—

वेदः । जुषस्व । जातवेद इति जात—वेदः । वपया । गच्छ । देवान् । त्वम् । हि । होता । प्रथमः । बभूथ । घृतेन । त्वम् । तनुवः । वर्धयस्व । स्वाहाकृतमिति स्वाहा—कृतम् । हविः । अदन्तु । देवाः । स्वाहा । देवेभ्यः । देवेभ्यः । स्वाहा ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः । )

---

पदाञ्जनं पशोः पाकवह्निश्चोक्तौ तृतीयके ॥
अथ चतुर्थे पशूपाकरणमन्त्रा आम्नायन्ते ।

कल्पः—“ बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशुमुपाकरोत्युपो देवान्दैवीर्विशः प्रजापतेर्जायमाना इति चैताभ्यामुपस्पृशन् ” इति । प्रजापतेरित्यादिके द्वे ऋचौ ॥

तत्रेयं प्रथमा—

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः । तस्मै प्रति प्र वेदय चिकित्वाꣳ अनु मन्यताम् ।, इति ।

याः प्रजा इदानीं जायमाना याश्चेमाः पूर्वं जातास्ताः सर्वाः प्रजापतेरेव यत्प्रसूता अतस्तस्मै प्रजापतये प्रति प्रत्येकं रहसि गत्वा प्रवेदय हे पशो त्वदीयं वृत्तान्तं कथय । स च प्रजापतिश्चिकित्वांस्त्वदीयां स्वर्गप्राप्तिं जानन्ननुमन्यताम् ॥

अथ द्वितीया—

इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये । अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ।, इति ।

( पशूपाकरणमन्त्राम्नानम् )

हे पशुपतेऽग्ने यदस्मिन्दिने सुकृतस्य मध्ये सम्यगनुष्ठितस्य ज्योतिष्टोमस्य कर्मणो मध्य इमं पशुं बध्नामि अतस्त्वमनुमन्यस्व । वयं सुयजा शोभनेन यज्ञेन यजाम । इदं हव्यं देवानां जुष्टं प्रियमस्तु ॥

कल्पः—" प्रजानन्तः प्रतिगृह्णन्ति पूर्वे इति पञ्च हुत्वा " इति । तत्रेयं प्रथमा—

प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः
पर्याचरन्तम् । सुवर्गं याहि पथिभिर्दे-
वयानैरोषधीषु प्रति तिष्ठा शरीरैः ।, इति ।

हे पशो पूर्वे देवास्त्वदीयं वृत्तान्तं जानन्तोऽङ्गेभ्यः परि त्वदीयावयवेभ्य ऊर्ध्वमाचरन्तं ते त्वदीयं प्राणं प्रतिगृह्णन्ति अस्माकमधीनोऽयमिति स्वी कुर्वन्ति । त्वं तु देवा येषु पथिषु यान्ति तैः पथिभिः स्वर्गं याहि । प्राणरूपेण स्वर्गं गत्वाऽवशिष्टैः शरीरावयवैरोषधीषु प्रतितिष्ठ पुरोडाशादिवद्धविर्भवेत्यर्थः ॥

अथ द्वितीया—

येषामीशे पशुपतिः पशूनां चतुष्पदामुत
च द्विपदाम् । निष्क्रीतोऽयं यज्ञियं भाग-
मेतु रायस्पोषा यजमानस्य सन्तु ।, इति ।

पशुस्वामी रुद्रो द्विपदां चतुष्पदां च येषां पशूनामीशे स्वामित्वेन वर्तते तेषां पशूनां मध्ये स्वामिनः सकाशादस्माभिर्निष्क्रीतोऽयं पशुर्यज्ञियं यज्ञयोग्यं भागमेतु भागत्वं प्राप्नोतु । यजमानस्य रायस्पोषा धनपुष्टयः सन्तु ॥

अथ तृतीया—

ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त म-
नसा चक्षुषा च । अग्निस्ताꣳ अग्रे प्र मुमो-
क्तु देवः प्रजापतिः प्रजया संविदानः ।, इति ।

अस्य पशोः पितृमातृभ्रातृसगर्भ्यसयूथ्यरूपा[1] ये पशव एतदीयस्नेहेन स्वयमपि बध्यमानमेनं पशुमनु बध्यमानाः सन्तो मनसा चक्षुषा चाभित

१ क. घ. ङ. च. 'तृभ्रातृमातृस'।

ऐक्षन्त तान्पशूनग्निरग्रे प्रकर्षेण मोचयतु । ततः प्रजापतिर्देवः स्वकीयया प्रजया संविदान ऐकमत्यं गतस्तान्पशून्मोचयतु ॥

अथ चतुर्थी—

य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः । वायुस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः ।, इति ।

जातिभेदैर्विश्वरूपा वर्णभेदेनोच्चनीचत्वादिभेदैश्च बहुधा विविधरूपाः सन्तोऽपि पशुत्वेनैकरूपाः । शेषं पूर्ववत् ॥

अथ पञ्चमी—

प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः । उपाकृतꣳ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः ।, इति ।

हे देवा भुवनस्य रेतो यागद्वारेणोत्पत्तिहेतुमिमं पशुं प्रमुञ्चमानाः प्रकर्षेण प्राणमातृपित्रादिभ्यो यज्ञार्थं मोचयन्तो यजमानस्य(नाय) गातुं धत्त स्वर्गलोकप्राप्तिं धत्त। उपाकृतमुपाकरणक्रियया संस्कृतं शशमानं हविर्भुक्षु देवेषु व्याप्रियमाणं यदस्थाद्यदङ्गजातमस्मिन्पशौ स्थितं तत्पाथोऽन्नं भूत्वा देवानां जीवमेतु जीवनार्थमुपाकरोतु । अपिशब्दाद्यजमानस्य स्वर्गं ददात्विति गम्यते ॥

कल्पः—“ नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति ” इति ।

पाठस्तु—

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः । जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः ।, इति ।

यजमानस्य प्राणः पशुना सह नाना पृथग्भवतु । अयमनुष्ठीयमानो यज्ञो देवेभिर्देवनशीलैः पशुप्राणैः सह देवयानो भवतु हविर्भुजो देवान्प्रति गच्छतु । पाथः पशुरूपमन्नं देवानां जीवमप्येतु जीवनहेतुत्वं प्राप्नोतु । तेन यजमानस्य कामाः सत्याः सन्तु ।

कल्पः—“ यत्पशुर्मायुमकृतेति संज्ञप्तहोमं जुहोति ” इति ।

---

१ ख. प्राणं मा' ।

पाठस्तु—

यत्पशुर्मायुमकृतोरो वा पद्भिराहते। अग्निर्मा
तस्माद्देनसो विश्वान्मुञ्चत्वꣳहसः।, इति।

अयं पशुर्मारणवेलायां मायुं दुःखहेतुकं शब्दमकुरुत। अथवा यतस्ततश्चाक्रम्यमाणैः पादैरुरस्ताडयति। तत्र यदेनो निष्पन्नं तस्मादेनसोऽग्निर्मा मोचयतु। किंचान्येनापि बन्धनाद्युपद्रवेण यद्यदंहो निष्पन्नं तस्मात्सर्वस्मादंहसो मां मोचयतु॥

कल्पः—"शमितार उपेतनेति वपाश्रपणीभ्यां पशुमुपेतोऽध्वर्युर्यजमानश्च" इति।

पाठस्तु—

शमितार उपेतन यज्ञं देवेभिरिन्वितम्। पाशात्पशुं प्र मुञ्चत बन्धाद्यज्ञपतिं परि।, इति।

हे शमितारो विशसनस्य कर्तारो देवा देवेभिरिन्वितं देवैर्व्याप्तं यज्ञमुपेतन प्राप्नुत प्रवर्तयतेत्यर्थः। इमं पशुं पाशाद्बन्धनरज्ज्वा यज्ञे प्रमुञ्चत यज्ञपतिं च बन्धनजन्याद्दोषात्परिमुञ्चत। अनेन मन्त्रेणाध्वर्युयजमानौ वपाश्रपणहेतुभ्यां काष्ठनिर्मिताभ्यामेकशूलाद्विशूलाभ्यां युक्तौ सन्तौ शामित्रदेशं समागच्छतः॥

कल्पः—"पशोः पाशं प्रमुञ्चत्यदितिः पाशं प्रमुमोक्त्वेतमिति" इति।

पाठस्तु—

अदितिः पाशं प्र मुमोक्त्वेतं नमः
पशुभ्यः पशुपतये करोमि।, इति।

अदितिः पृथिवी पशोरेतं पाशं प्रमुञ्चतु। अहं च पशुभ्यः पशुपतये च मदपराधनिवृत्त्यर्थं नमस्करोमि॥

कल्पः—"यद्यभिचरेदरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमिति तया वृक्षं स्थाणुं स्तम्भं वाऽपिदध्यात्" इति।

पाठस्तु—

अरातीयन्तमधरं कृणोमि यं द्विष्म-
स्तस्मिन्प्रति मुञ्चामि पाशम्।, इति।

---

१ ख. घ. ङ. च. °लाभ्यां।

यः पुरुषोऽस्माकमरातित्वं कर्तुमिच्छति तमध्वरं मत्तोऽवरं करोमि। यस्त्विदानीमरातित्वं नेच्छति तथाऽपि कालान्तरे तत्संभावनया वयमिदानीं तं द्विष्मः। तस्मिन्पुरुषे पाशमिमं प्रतिमुञ्चामि अनया रशनया तं बध्नामीत्यर्थः॥

कल्पः—"त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति" इति।

पाठस्तु—

त्वामु ते दधिरे हव्यवाहꣳ शृतंकर्तारमुत यज्ञियं च। अग्ने सदक्षः सतनुर्हि भूत्वाऽथ हव्या जातवेदो जुषस्व।, इति।

हेऽग्ने देवेभिरिन्वितमिति पूर्वोक्ता ये देवास्ते त्वां दधिरे त्वामेव कार्यकरत्वेन निश्चितवन्तः। कीदृशं त्वां, हव्यवाहं देवान्प्रति हविषो वोढारं शृतंकर्तारमार्द्रकं हविः पक्वं कुर्वन्तम्। अपि च यज्ञियं यज्ञसंपादनार्हम्। हे जातवेदो हि यस्मात्त्वं सतनुर्दृढशरीरो भूत्वा सदक्षः सोत्साहोऽथ तस्मात्कारणाद्धव्या जुषस्व हवींषि वोढुं प्रीतियुक्तो भव॥

कल्पः—"जातवेदो वपया गच्छ देवानिति वषट्कृते हुत्वा" इति।

पाठस्तु—

जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ। घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः।, इति।

हे जातवेदस्त्वं वपया सह देवान्गच्छ। हि यस्मात्त्वं प्रथमो होता बभूथ मनुष्यहोतुः पूर्वभावी बभूविथ तस्मात्त्वं घृतेन देवानां तनूर्वर्धयस्व। ते च देवाः स्वाहाकारेण समर्पितमिदं हविर्भक्षयन्तु॥

कल्पः—"स्वाहा देवेभ्य इति पूर्वं परिवप्यं हुत्वा" इति, "देवेभ्यः स्वाहेत्युत्तरं परिवप्यं हुत्वा" इति च।

पाठस्तु—

स्वाहा देवेभ्यो देवेभ्यः स्वाहा॥, इति॥

ये देवाः पुरस्तात्स्वाहाकारास्तेभ्य इदमाज्यं वपाहोमात्पूर्वं स्वाहाकृतमस्तु। तस्य च होमस्य वपाहोमाङ्गत्वाद्वप्यत्वम्। ये तु देवा उपरिष्टात्स्वाहाकारास्तेभ्यो वपाहोमादूर्ध्वमिदमाज्यं हुतमस्तु। वपाया उभयपार्श्वस्थितानां

( पशूपाकरणमन्त्राम्नानम् )

स्वाहाकारेण वपासामीप्यविच्छेदो मा भूदिति स्वाहाकारस्य पुरस्तादुपरिष्टाच्च प्रयोगः ॥

अत्र विनियोगसंग्रहः—

प्रजापतेरिति द्वाभ्यां स्यादुपाकरणं पशोः ।
प्रजा पश्च जुहोत्यग्नौ नाना तन्नयने जपेत् ॥ १ ॥
यत्पशुर्मृतद्धोमः स्याच्छमिता गच्छतः पशुम् ।
अध्वर्युयजमानौ द्वावदि पाशप्रमोचनम् ॥ २ ॥
अरा वृक्षादिषु ज्ञेयं त्वां जुहोति वपोपरि ।
जा वपाहुतिरेतस्याः स्वाहा इत्यभितो हुतिः ॥
अनुवाके चतुर्थेऽस्मिन्मन्त्राः षोडश वर्णिताः ॥ ३ ॥

अत्र मीमांसा ।

नवमाध्यायस्य तृतीयपादे चिन्तितम्—

पाशं पाशान्द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयम् ।
*एकत्वे च द्वयत्वे किमेकस्योहोऽथवा द्वयोः ॥
एकेनैव कृतार्थत्वादेको मन्त्रस्तदाऽपि च ।
अविकारेण बह्वर्थं +एकार्थासमवायतः ॥
प्राकृतत्वादुभावूह्यावे(ह्य ए)कार्थोऽत्र विवक्षया ।
बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरक्लृप्तितः ॥

ज्योतिष्टोमेऽग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ भिन्नयोः शाखयोराम्नातौ—"अदितिः पाशं प्रमुमोक्त्वेतम्" इत्येकत्र । "पाशान्प्रमुमोक्त्वेतान्" इत्यपरत्र । तावुभौ पशुद्वयोपेतायां विकृतौ चोदकेनातिदिष्टौ । सा च विकृतिरेवमाम्नायते—"मैत्रꣳ श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकामः" इति । तत्रैकेनैव मन्त्रेण चरितार्थत्वान्न द्वयोरतिदेश इत्याद्यः पक्षः । तदाऽप्यविकृतस्य प्रयोक्तुं शक्यत्वाद्बहुवचनान्तो मन्त्रो युक्तः । प्रकृतावेकस्मिन्पशावसमवेतार्थतया बहुवचनस्य विकृतावनूहनीयत्वादित्येकः पक्षः । तादृग्बहुवचनोपेतत्वादेव मन्त्रोऽप्यसावसमवेतार्थः प्रकृतौ भवति । एकवचनान्तस्तु मन्त्रः प्रकृतौ समवेतार्थत्वाद्विकृतावतिदिश्यताम् । स च द्विवचनान्तत्वेनोहनीय इति पक्षान्तरम् । प्रकृतौ विद्यमा-

* एकैकत्व इति न्यायमालापाठः । + एकार्थः समवायत इति न्यायमालापाठः ।

१ क. घ. ङ. °म् । क एकत्वे द्व° । २ क. घ. ङ. च. °तः । प्रकृ° ।

नयोरुभयोर्मन्त्रयोर्विकृतावतिदेशस्य वारयितुमशक्यत्वादेकमन्त्रपक्षस्यावान्तरत्वेनोपन्यस्तावुभावपि पक्षावेवयुक्तौ। मन्त्रद्वयातिदेशपक्षे तु एकवचनान्तः प्रकृतौ समवेतार्थतया विकृतावूहनीयः। बहुवचनान्तो यथास्थित एव पठनीय इति पूर्वपक्षः। लोके वेदे वा बहुवचनस्य द्वयोरर्थयोरकृत्स्नशक्तित्वाद्द्विवचनान्ततया सोऽप्यूहनीय इति सिद्धान्तः॥

तत्रैवान्यच्चिन्तितम्—

उत्कृष्टव्यो न वा मन्त्रो बह्वर्थोऽसंगतत्वतः।
उत्कर्षो न विकल्पोऽसौ गुणे त्वन्याय्यकल्पना॥

योऽयं पूर्वत्रोदाहृतो बहुवचनान्तः पाशमन्त्रस्तस्य प्रकरणादुत्कर्षो बहुपाशयुक्तेषु पशुगणेषु कर्तव्यः। कुतः। एकस्मिन्पशौ प्रकृते तस्यानन्वितत्वादिति चेत्। नासावुत्कृष्टव्यः किं त्वेकवचनान्तेन मन्त्रेण सह विकल्पनीयः। न हि पाशानित्यत्र प्रधानस्यांशस्यानन्वितत्वमस्ति प्रातिपदिकविभक्त्योः प्रातिपदिकं प्रधानं धर्मिवाचकत्वात्। विभक्तिस्तु कर्मत्वकरणत्वादिधर्मवाचकत्वाद्गुणभूता। तथा विभक्तिवचनयोर्विभक्तेः कर्मादिकारकवाचित्वात्प्राधान्यं वचनस्य कारकगतसंख्याभिधायित्वाद्गुणत्वम्। तथा सति बहुवचनान्तपाशशब्दे प्रातिपदिकं कर्मकारकविभक्तिश्चैकस्मिन्नपि पाशे संगच्छेते। गुणभूते तु बहुवचने लक्षणा वृत्तिः कल्पनीया, पाशावयवगतं बहुत्वं लक्ष्यत इति। तस्माद्गुणभूतं वचनमात्रमनुसृत्य कृत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः। किंतु प्रधानानुसारेण मन्त्रयोः समानबलत्वाद्विकल्पः कर्तव्यः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके
चतुर्थोऽनुवाकः॥ ४॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः। )

---

प्राजापत्या वै पशवस्तेषांꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्याऽऽलभत आत्मनोऽनाव्रस्काय द्वाभ्यामुपाकरोति

---

१ क. ङ. च. °क्षावुपयु°। २ ख. °वनुपयु°। ३ ख. घ. ङ. च. राद्धान्तः। ४ ख. द्वि पाशं पा°। च. °द्वि पाशौ पा°।

द्विपाद्यजमानः प्रतिष्ठित्या उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवावं रुन्धे मृत्यवे वा एष नीयते यत्पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै (१) यत्पशुर्मायुमकृतेति जुहोति शान्त्यै शमितार उपेतनेत्याह यथायजुरेवैतद्वपायां वा आह्रियमाणायामग्नेर्मेधोऽपं क्रामति त्वामु ते दधिरे हव्यवाहमिति वपामभि जुहोत्यग्नेरेव मेधमवं रुन्धेऽथो शृतत्वायं पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति तानेवोभयान्प्रीणाति (२) ॥

( व्यावृत्त्या अभितो वपां पञ्च च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः ।)

---

प्राजापत्या इति प्राजा—पत्याः । वै । पशवः । तेषाम् । रुद्रः । अधिपतिरित्यधि—पतिः । यत् । एताभ्याम् । उपाकरोतीत्युप—आकरोति । ताभ्याम् ।

एव । एनम् । प्रतिप्रोच्येति प्रति—प्रोच्य । एति । लभते । आत्मनः । अनाव्रस्कायेत्यना—व्रस्काय । द्वाभ्याम् । उपाकरोतीत्युप—आकरोति । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । उपाकृत्येत्युप—आकृत्य । पञ्च । जुहोति । पाङ्क्ताः । पशवः । पशून् । एव । अवेति । रुन्धे । मृत्यवे । वै । एषः । नीयते । यत् । पशुः । तम् । यत् । अन्वारभेतेत्यनु—आरभेत । प्रमायुक इति प्र—मायुकः । यजमानः । स्यात् । नाना । प्राण इति प्र—अनः । यजमानस्य । पशुना । इति । आह । व्यावृत्त्या इति वि—आवृत्त्यै ( १ ) । यत् । पशुः । मायुम् । अकृत । इति । जुहोति । शान्त्यै । शमितारः । उपेतनेत्युप—एतन । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । वपायाम् । वै । आह्रियमाणायामित्या—ह्रियमाणायाम् । अग्नेः । मेधः । अपेति । क्रामति । त्वाम् । उ । ते । दधिरे । हव्यवाहमिति हव्य—वाहम् । इति । वपाम् । अभीति । जुहोति । अग्नेः । एव । मेधम् । अवेति । रुन्धे । अथो इति । शृतत्वायेति शृत—त्वाय । पुरस्तात्स्वाहाकृतय इति पुरस्तात्—स्वाहाकृतयः ।

वै। अन्ये। देवाः। उपरिष्टात्स्वाहाकृतय इत्युपरिष्टात्—स्वाहाकृतयः। अन्ये। स्वाहा। देवेभ्यः। देवेभ्यः। स्वाहा। इति। अभितः। वपाम्। जुहोति। तान्। एव। उभयान्। प्रीणाति (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः। )

---

चतुर्थे वर्णिता मन्त्राः पशूपाकरणादिगाः॥
अथ पञ्चमे तेषां मन्त्राणां ब्राह्मणमभिधीयते।
तत्राऽऽदावुपाकरणं विधत्ते—

प्राजापत्या वै पशवस्तेषाꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्याऽऽ लभत आत्मनोऽनाव्रस्काय, इति।

प्रजापतिः पशूनां जनकः। अग्निश्च रुद्रशब्दाभिधेयस्तेषां स्वाम्यतस्तदुभयप्रतिपादकाभ्यां प्रजापतेर्जायमाना इमं पशुमित्येताभ्यां मन्त्राभ्यामुपाकुर्यात्। तथा सति ताभ्यां देवाभ्यां प्रतिप्रोच्यायं पशुमालब्धवान्भवति। तच्च कथनं स्वस्यानपराधत्वाय भवति॥

मन्त्रद्वित्वं प्रशंसति—

द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्यै, इति॥

उपाकरणादूर्ध्वं प्रजानन्त इत्यादिभिः पञ्चभिर्मन्त्रैर्होमं विधत्ते—

उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवाव रुन्धे, इति।

पुच्छसहितेषु पादेषु पञ्चसंख्यायोगात्पशूनां पाङ्क्तत्वम्॥

---

१ ख. घ. ङ. च. 'च्छसंहते'।

संज्ञपनाय पशुनयनकालेऽध्वर्योर्जपमन्त्रस्य नानाशब्दस्य तात्पर्यं दर्शयति—

मृत्यवे वा एष नीयते यत्पशुस्तं यदन्वा-
रभेत प्रमायुको यजमानः स्यान्नाना प्राणो
यजमानस्य पशुनेत्याह व्यावृत्त्यै, इति ।

पशोः पृष्ठतो हस्तेन स्पर्शोऽन्वारम्भः । व्यावृत्तिवाचकस्य नानाशब्दस्य प्रयोगो यजमानप्राणस्य म्रियमाणात्पशोर्व्यावृत्त्यै भवति ॥

संज्ञप्तहोमं विधत्ते—

यत्पशुर्मायुमकृतेति जुहोति शान्त्यै, इति ।

अंहसो मुञ्चत्वित्यनया मन्त्रगतया प्रार्थनया पापस्य शान्तिर्भवति ॥

अध्वर्युयजमानयोर्वपाश्रपण्यव्यवधानेन पशुप्राप्तिमन्त्रस्य स्पष्टार्थतां दर्शयति—

शमितार उपेतनेत्याह यथायजुरेवैतत्, इति ।

यद्यप्यसौ मन्त्रः पादबद्धत्वादृगेव तथाऽपि यजुर्वेदाम्नातत्वात्तत्कर्मणि विनियोज्यमानत्वाद्वा यजुरित्युच्यते ॥

वपाया उपरि होमं विधत्ते—

वपायां वा आह्रियमाणायामग्नेर्मेधोऽप क्रामति
त्वामु ते दधिरे हव्यवाहमिति वपामभि
जुहोत्यग्नेरेव मेधमव रुन्धेऽथो शृतत्वाय, इति ।

[यदा] वपा होतुमाह्रियते तदानीमग्नेः सकाशाद्यज्ञोऽपक्रामति । तस्य च यज्ञस्यानेन होमेनापक्रमणं निवारितं भवति । अत एव मन्त्रे दधिर इति प्रयुज्यते । अग्निं यज्ञस्य धारकं कृतवन्त इत्युक्तं भवति । किं च शृतंकर्तारमिति विशेषितत्वादयं होमो वपायाः पक्वत्वमपि संपद्यते ॥

परिवप्यहोमौ विधत्ते-

पुरस्तात्स्वाहाकृतयो वा अन्ये देवा
उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा
देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां
जुहोति तानेवोभयान्प्रीणाति॥, इति ॥

(अभिमर्शनविधीनां मन्त्रविशेषाणां चाभिधानम्)

वपासामीप्यं वाञ्छतां स्वाहाकारव्यवधानाद्बिभ्यतामुभयविधानां देवानां प्रीत्यै स्वाहाशब्दस्य मन्त्रयोर्व्यत्यासेन प्रयोग इत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ तृतीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ।)

---

यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान्भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्यर्चाऽऽग्नीध्रमभि मृशेद्वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुप चरति न देवताभ्य आ वृश्च्यते वसीयान्भवति युनज्मि ते पृथिवीं ज्योतिषा सह युनज्मि वायुमन्तरिक्षेण (१) ते सह युनज्मि वाचꣳ सह सूर्येण ते युनज्मि तिस्रो विपृचः सूर्यस्य ते। अग्निर्देवता गायत्री छन्द उपाꣳशोः पात्रमसि सोमो देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रमसीन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि बृहस्पतिर्देवताऽनुष्टुप्छन्दो मित्रावरुणयोः पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्यो

देवता बृहती ( २ ) छन्दः शुक्रस्य पात्रमसि चन्द्रमा देवता सतो बृहती छन्दो मन्थिनः पात्रमसि विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि पृथिवी देवता विराट्छन्दो ध्रुवस्य पात्रमसि ( ३ ) ॥

( अन्तरिक्षेण बृहती त्रयस्त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

यः । वै । अयथादेवतमित्ययथा—देवतम् । यज्ञम् । उपचरतीत्युप—चरति । एति । देवताभ्यः । वृश्च्यते । पापीयान् । भवति । यः । यथादेवतमिति यथा—देवतम् । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । आग्नेय्या । ऋचा । आग्नीध्रमित्याग्नि—इध्रम् । अभीति । मृशेत् । वैष्णव्या । हविर्धानमिति हविः—धानम् । आग्नेय्या । स्रुचः । वायव्यया । वायव्यानि । ऐन्द्रिया । सदः । यथादेवतमिति यथा—देवतम् । एव । यज्ञम् ।

उपेति । चरति । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । युनज्मि । ते । पृथिवीम् । ज्योतिषा । सह । युनज्मि । वायुम् । अन्तरिक्षेण (१)। ते । सह । युनज्मि । वाचम् । सह । सूर्येण । ते । युनज्मि । तिस्रः । विपृच इति वि—पृचः। सूर्यस्य । ते । अग्निः । देवता । गायत्री । छन्दः । उपांशोरित्युप—अंशोः । पात्रम् । असि । सोमः । देवता । त्रिष्टुप् । छन्दः । अन्तर्यामस्येत्यन्तः—यामस्य । पात्रम् । असि । इन्द्रः । देवता । जगती । छन्दः । इन्द्रवायुवोरितीन्द्र—वायुवोः । पात्रम् । असि । बृहस्पतिः । देवता । अनुष्टुबित्यनु—स्तुप् । छन्दः । मित्रावरुणयोरिति मित्रा—वरुणयोः। पात्रम् । असि । अश्विनौ । देवता । पङ्क्तिः। छन्दः। अश्विनोः । पात्रम् । असि । सूर्यः । देवता । बृहती (२)। छन्दः । शुक्रस्य । पात्रम् । असि । चन्द्रमाः । देवता । सतोबृहतीति सतः—बृहती । छन्दः । मन्थिनः । पात्रम् । असि । विश्वे । देवाः । देवता । उष्णिहा । छन्दः । आग्रयणस्य । पात्रम् । असि । इन्द्रः । देवता । ककुप् । छन्दः । उक्थानाम् । पा-

त्रम् । असि । पृथिवी । देवता । विराडिति वि-
राट् । छन्दः । ध्रुवस्य । पात्रम् । असि ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः । )

---

पूर्वानुवाकमन्त्राणां पञ्चमे ब्राह्मणं श्रुतम् ॥
अथ षष्ठेऽभिमर्शनविधयो मन्त्रविशेषाश्च केचिदाम्नायन्ते ।
तत्र सुत्यादिनगतप्रयोगारम्भेऽभिमर्शनं विधत्ते—

यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो
वृश्च्यते पापीयान्भवति यो यथादेवतं न देव-
ताभ्य आ वृश्च्यते वसीयान्भवत्याग्नेय्यर्चाऽऽ-
ग्नीध्रमभि मृशेद्वैष्णव्या हविर्धानमाग्नेय्या
स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथा-
देवतमेव यज्ञमुप चरति न देवताभ्य
आ वृश्च्यते वसीयान्भवति , इति ।

आग्नीध्रहविर्धानादीनां मध्ये यस्य या देवता तां देवतामभिक्रम्य तस्योपचारे सति देवताभ्योऽवच्छिद्यते[1] दरिद्रश्च भवति । अतस्तत्तद्देवताप्रतिपादकमन्त्रैरेव तस्य तस्याभिमर्शने सति नोक्तदोषो भवति । तांश्च मन्त्रविशेषानापस्तम्ब उदाजहार—" महारात्रे बुद्ध्वाऽग्ने नयेत्याग्नीध्रमभिमृशतीदं विष्णुर्विचक्रम इति हविर्धानमग्न आयूंषि पवस इति स्रुच आ वायो भूष शुचिपा इति वायव्यान्याघा ये अग्निमिन्धत इति सदः " इति । तेषु चत्वारो मन्त्राः प्रथमकाण्ड एवाऽऽम्नाता व्याख्याताश्च । आघा ये अग्निमिति मन्त्रस्तु ब्राह्मणग्रन्थे द्वितीयकाण्डस्य चतुर्थप्रपाठके वृषासो अंशुरित्यस्मिन्ननुवाक आम्नास्यमानत्वात्तत्रैव व्याख्यास्यते ॥

---

१ च. 'भ्यो विच्छि' ।

( अभिमर्शनविधीनां मन्त्रविशेषाणां चाभिधानम् )

**युनज्मि ते पृथिवीं ज्योतिषा सह युनज्मि वायुमन्तरिक्षेण ते सह युनज्मि वाचꣳ सह सूर्येण ते—**

कल्पः—" युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्य हविर्धानस्याधस्तात्पश्चादक्षं द्रोणकलशं सदशापवित्रं युनज्मि वायुमन्तरिक्षेण ते सहेत्युत्तरस्य हविर्धानस्योपरिष्टान्नीड आधवनीयं युनज्मि वाचꣳ सह सूर्येण त इति प्रधुरे पूतभृतम् " इति।

अत्र सर्वत्र प्रयुनक्तीति पदमनुवर्तते । हे द्रोणकलश ते तव स्वरूपभूतां पृथिवीं ज्योतिषाऽग्निना सहैतस्मिन्स्थाने युनज्मि सादयामि । हे आधवनीय ते स्वरूपभूतं वायुं तदाधारेणान्तरिक्षेण सहास्मिन्स्थाने युनज्मि । उच्यते नानाविधैर्मन्त्रैः प्रतिपाद्यत इति द्युलोको वाक् । हे पूतभृत्तव स्वरूपभूतां वाचं सूर्येण द्युलोकस्थेन सहास्मिन्स्थाने युनज्मि ॥

**युनज्मि तिस्रो विपृचः सूर्यस्य ते।**

कल्पः—" युनज्मि तिस्रो विपृचः सूर्यस्य त इति स्रुचः सन्ना अभिमन्त्रयते " इति।

जुहूपभृद्ध्रुवाख्यास्तिस्रो याः स्रुचस्ता विपृचः परस्परसंपर्करहिता यथा भवन्ति तथा सूर्यस्य तव प्रकाशेन परीक्ष्य युनज्मि ॥

**अग्निर्देवता गायत्री छन्द उपाꣳशोः पात्रमसि—**

कल्पः—"अथैतानि वायव्यान्यभिमृशत्यग्निर्देवता गायत्री छन्द उपाꣳशोः पात्रमसीति दशभिर्दश " इति।

हे ऊर्ध्वपात्राग्निर्देवता त्वां रक्षतु । गायत्री छन्दस्त्वां रक्षतु । त्वमुपांशुनामकस्य सोमरसग्रहणस्य पात्रमसि । एवमुत्तरेषु नवसु मन्त्रेषु योज्यम् ॥

तेषां पाठस्तु—

**सोमो देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रमसीन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि बृहस्पतिर्देवताऽनुष्टुप्छन्दो मित्रावरुणयोः पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्यो देवता बृहती छन्दः**

---

१ ख. °त्र युजन्मीति । २ क. ङ. °सु यो° ।

शुक्रस्य पात्रमसि चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि पृथिवी देवता विराट्छन्दो ध्रुवस्य पात्रमसि ॥, इति ॥

इन्द्रवायुवोरित्यादिभिर्देवतावाचकैः शब्दैस्तदीयं सोमरसग्रहणमुपलक्ष्यते । ( *आग्रयणादिषु हे स्थालीति संबोधनीयम् । शस्त्रवाचकेनोक्थानामिति शब्देन तत्तच्छस्त्रसंबन्धिसोमरसग्रहणमुपलक्ष्यते । ) अस्मिन्ननुवाके प्रोक्ताः सर्वे मन्त्रा हृदे त्वा मनसे त्वेत्यनुवाकात्प्रागेव द्रष्टव्याः ॥

अत्र विनियोगसंग्रहः—

" आग्नेय्यग्ने नयेतीदं विष्णुरित्येव वैष्णवी ।
अग्न आयूंषि चाऽऽग्नेयी आ वायो इति वायवी ॥ १ ॥
आधा ये अग्निमैन्द्री स्याद्युनज्मीति त्रिभिः क्रमात् ।
साद्यन्ते द्रोणकलशाधवनीयौ च पूतभृत् ॥ २ ॥
युनेति मन्त्रणं कुर्यात्सवनीयस्रुवस्रुचाम् ।
अग्निरित्यादिदशभिर्ग्रहपात्राणि संस्पृशेत् ॥
षष्ठानुवाके संप्रोक्ता मन्त्रा एकोनविंशतिः ॥ ३ ॥ " [ इति । ]

अथ मीमांसा ।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

आग्नेय्याऽऽग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः ।
उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥
साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः ।
विशेष(षे) विधिसंक्रान्त्या प्रकृताभिरितीष्यताम् ॥

ज्योतिष्टोमे श्रूयते—" आग्नेय्याऽऽग्नीध्रमुपतिष्ठते " इति । तत्राऽऽग्नीध्रनामकस्य मण्डपस्य यदुपस्थानं तद्यया कयाचिद्दाशतयीगतयाऽग्निदेवतया संबन्धिन्या कर्तव्यम् । अग्निर्देवता यस्या ऋचः साऽऽग्नेयीतिसाधारणोक्तादृग्विशेषस्याप्रतीतेरिति चेन्मैवम् । क्रतुप्रकरणपठितानामाग्नेयीनामृचां क्रतुप-

* धनुश्चिह्नान्तर्गतं ख. पुस्तक एव ।

युक्तव्यापारसाधनत्वं प्रकरणादेव । कोऽसौ व्यापार इति विशेषबुभुत्सायामाग्नीध्रोपस्थानरूपोऽयमिति बोधयन्नयं विधिर्विशेषमात्रं(त्रे) संक्रामतीति लाघवम् । अप्रकृतानां तु क्रतुप्रयुक्तव्यापारसाधनत्वं तद्व्यापारविशेषश्चेत्युभयं बोध्यत इति गौरवम् । तस्मात्प्रकृताभिराग्नेयीभिस्तदुपस्थानम् । एवमैन्द्रया सदो वैष्णव्या हविर्धानमित्यत्र सदोहविर्धाननामकयोर्मण्डपयोरुपस्थाने प्रकृतानामेवैन्द्रीणां वैष्णवीनां च प्रयोग इति द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः । )

---

इष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै
पूर्वोऽर्ष्टुः क्षीयत आसन्यान्मा मन्त्रात्पाहि
कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाका-
ञ्जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्म न-
ह्यतेऽनार्त्यै संवेशाय त्वोपवेशाय त्वा गायत्रि-
यास्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणा-
पानौ मृत्योर्मा पातं प्राणापानौ मा मा हा-
सिष्टं देवतासु वा एते प्राणापानयोः ( १ )
व्यायच्छन्ते येषाꣳ सोमः समृच्छते संवेशाय
त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै संवेश
उपवेशश्छन्दोभिरेवास्य छन्दाꣳसि वृङ्क्ते

---

१ ख. 'देवावगतम् । कोऽ' । च. 'देवावगन्तव्यम् । कोऽ' । २ ख. 'मयती' ।

प्रतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथंतरे भवत इयं वाव रथंतरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथंतरꣳ श्वो बृहदद्याश्वादेवैनमन्तरेति भूतम् ( २ ) वाव रथंतरं भविष्यद्बृहद्भूता-च्चैवैनं भविष्यतश्चान्तरेति परिमितं वाव रथंत-रमपरिमितं बृहत्परिमिताच्चैवैनमपरिमिताच्चा-न्तरेति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳ स एतज्जमदग्निर्विहव्यमपश्यत्तेन वै स वसि-ष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यꣳ शस्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः परस्तात्स्यादु-क्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान्भ-वति ( ३ ) ॥

( प्राणापानयोर्भूतं वृङ्क्तेऽष्टाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( परस्परमात्सर्यप्रवृत्तयजमानयोर्नैमित्तिकप्रयोगाभिधानम् )

( अथ तृतीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ।)

---

इष्टर्गः । वै । अध्वर्युः । यजमानस्य । इष्टर्गः । खलु । वै । पूर्वः । अर्ष्टुः । क्षीयते । आसन्यात् । मा । मन्त्रात् । पाहि । कस्याः । चित् । अभिशस्त्या इत्यभि—शस्त्याः । इति । पुरा । प्रातरनुवाकादिति प्रातः—अनुवाकात् । जुहुयात् । आत्मने । एव । तत् । अध्वर्युः । पुरस्तात् । शर्म । नह्यते । अनार्त्यै । संवेशायेति सं—वेशाय । त्वा । उपवेशायेत्युप—वेशाय । त्वा । गायत्रियाः । त्रिष्टुभः । जगत्याः । अभिभूत्या इत्यभि—भूत्यै । स्वाहा । प्राणापानाविति प्राण—अपानौ । मृत्योः । मा । पातम् । प्राणापानाविति प्राण—अपानौ । मा । मा । हासिष्टम् । देवतासु । वै । एते । प्राणापानयोरिति प्राण—अपानयोः ( १ ) । व्यायच्छन्त इति वि—आयच्छन्ते । येषाम् । सोमः । समृच्छत इति सम्—ऋच्छते । संवेशायेति सं—वेशाय । त्वा । उपवेशायेत्युप—वेशाय । त्वा । इति । आह । छन्दांसि । वै । संवेश इति सं—वेशः । उपवेश इत्युप—वेशः । छन्दोभिरिति छन्दः—भिः । एव । अस्य । छन्दांसि । वृङ्क्ते । प्रेतिवन्तीति प्रेति—

वन्ति । आज्यानि । भवन्ति । अभिजित्या इत्यभि—जित्यै । मरुत्वतीः । प्रतिपद इति प्रति—पदः । विजित्या इति वि—जित्यै । उभे इति । बृहद्रथंतरे इति बृहत्—रथंतरे । भवतः । इयम् । वाव । रथंतरमिति रथं—तरम् । असौ । बृहत् । आभ्याम् । एव । एनम् । अन्तः । एति । अद्य । वाव । रथंतरमिति रथं—तरम् । श्वः । बृहत् । अद्याश्वादित्यद्य—श्वात् । एव । एनम् । अन्तः । एति । भूतम् (२) । वाव । रथंतरमिति रथं—तरम् । भविष्यत् । बृहत् । भूतात् । च । एव । एनम् । भविष्यतः । च । अन्तः । एति । परिमितमिति परि—मितम् । वाव । रथंतरमिति रथं—तरम् । अपरिमितमित्यपरि—मितम् । बृहत् । परिमितादिति परि—मितात् । च । एव । एनम् । अपरिमितादित्यपरि—मितात् । च । अन्तः । एति । विश्वामित्रजमदग्नी इति विश्वामित्र—जमदग्नी । वसिष्ठेन । अस्पर्धेताम् । सः । एतत् । जमदग्निः । विहव्यमिति वि—हव्यम् । अपश्यत् । तेन । वै । सः । वसिष्ठस्य । इन्द्रियम् । वीर्यम् । अवृङ्क्त । यत् । विहव्यमिति वि—हव्यम् । शस्यते । इन्द्रियम् । एव । तत् । वीर्यम् । यजमानः ।

(परस्परमात्सर्यप्रवृत्तयजमानयोर्नैमित्तिकप्रयोगाभिधानम्)

भ्रातृ॑व्यस्य । वृ॒ङ्क्ते । यस्य॑ । भूया॒ꣳ᳚सः । य॒ज्ञ॒क्र॒तव॒ इति॑ य॒ज्ञ—क्र॒तवः॑ । इति॑ । आ॒हुः । सः । दे॒वताः॑ । वृ॒ङ्क्ते । इति॑ । यदि॑ । अ॒ग्नि॒ष्टो॒म इत्य॑ग्नि—स्तोमः॑ । सोमः॑ । प॒रस्ता॑त् । स्यात् । उ॒क्थ्य॑म् । कु॒र्वी॒त । यदि॑ । उ॒क्थ्यः॑ । स्यात् । अ॒ति॒रा॒त्रमित्य॑ति—रा॒त्रम् । कु॒र्वी॒त । य॒ज्ञ॒क्र॒तु॒भिरिति॑ य॒ज्ञक्र॒तु—भिः॑ । ए॒व । अ॒स्य । दे॒वताः॑ । वृ॒ङ्क्ते । वसी॑यान् । भ॒व॒ति (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

(अथ तृतीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ।)

---

आग्नीध्रस्पर्शनाद्यर्था मन्त्राः षष्ठ उदीरिताः ॥

अथ सप्तमे परस्परमात्सर्येण प्रवृत्तयोर्यजमानयोः कश्चिन्नैमित्तिकः प्रयोगो वक्तव्यः ।

तत्राऽऽदौ तावदेकं नित्यप्रयोगं विधत्ते—

इष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत आसन्यान्मा मन्त्रात्पाहि कस्याश्चिद्भिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्म नह्यतेऽनार्त्यै, इति ।

इष्टं काममृच्छति प्रमादालस्यादिना विनाशयतीतीष्टर्गोऽध्वर्युर्यजमानस्येष्टर्गो वै यागविधानेषु प्रमादादेर्निवारयितुमशक्यत्वात्तादृशोऽध्वर्युरर्ष्टुर्यज्ञविनाशेनाऽऽर्तिं गच्छतो यजमानात्पूर्वः क्षीयते स्वयं प्रथमत एव विनश्यति । तस्य स्वविनाशस्य परिहारायाऽऽसन्यादित्यादिमन्त्रेण होतृसंबन्धिनः प्रातरनुवाकपाठात्पुराऽऽज्यमध्वर्युराग्नीध्रे जुहुयात् । तेन होमेनाध्वर्युरात्मार्थं प्रथमं

शर्म नह्यते सुखं बध्नाति । तच्च यजमानस्यानार्त्यै संपद्यते । मन्त्रस्यायमर्थः— आसन्याद्वैरिणामास्ये भवान्मन्त्रादभिचाररूपान्मां पाहि हे देव मां पालय । तथा कस्याश्चिदभिशस्त्याः सर्वस्मादप्यपवादान्मां पाहीति ॥

मात्सर्येण सोमयागं कुर्वतोर्द्वयोर्यजमानयोरासन्यमन्त्रस्थाने मन्त्रान्तराणि पञ्च दर्शयति—

संवेशाय त्वोपवेशाय त्वा गायत्रियास्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टम् , इति ।

संवेशः शयनम् । उपवेश आसनम् । मम विश्रम्भेण तदुभयसिध्यर्थं गायत्र्या [अ]भिभूत्यै गायत्रीकर्तृकवैर्यभिभवार्थं च हेऽग्ने त्वां प्रति स्वाहुतमिदमस्तु । गायत्र्या इति पदादूर्ध्वमभिभूत्यै स्वाहेति पदद्वयस्यानुषङ्गः । त्रिष्टुभ इति पदस्य संवेशायेत्यादिः पूर्वानुषङ्गः । अभिभूत्यै स्वाहेत्युत्तरानुषङ्गः । जगत्या इति पदस्य संवेशायेत्यादिः पूर्वानुषङ्गः । एवमेते त्रयो मन्त्राः । हे प्राणापानौ मृत्योः सकाशान्मां पातम् । सोऽयं चतुर्थो मन्त्रः । हे प्राणापानौ मां कदाचिदपि मा हासिष्टं मा परित्यजतम् । सोऽयं पञ्चमो मन्त्रः । अत्रोभयत्र स्वाहेत्यनुषज्यते ॥

एतेषां मन्त्राणां ब्राह्मणमुच्यते—

देवतासु वा एते प्राणापानयोर्व्यायच्छन्ते येषाꣳ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दाꣳसि वृङ्क्ते , इति ।

येषां यजमानानां सोमयागः समृच्छते मात्सर्येण संभूय प्रवर्तते । एते यजमाना देवताविषये प्राणापानविषये च व्यायच्छन्ते विप्रतिपद्यन्ते । एतद्देवतादिकं ममैवास्तु नान्यस्येत्येको मन्यते । अपरोऽपि तथेति विप्रतिपत्तिः । तस्यां विप्रतिपत्तौ सत्यां संवेशायेत्यादिभिः पञ्चभिर्मन्त्रैः प्रातरनुवाकात्पुराऽऽग्नीध्रे जुहुयात् । तत्र विश्रम्भपूर्वकयोः शयनासनयोर्वाचकाभ्यां संवेशोपवेशशब्दाभ्यां तत्कारणीभूतानि गायत्र्यादिच्छन्दांस्युपलक्ष्यन्ते । तथा सति यः संवेशादिमन्त्रैर्जुहोति अस्य यज्ञे प्रवृत्तैश्छन्दोभिः प्रतिस्पर्धियज्ञगतानि च्छन्दांसि विना-

१ क. तत्तथे° । २ ख. °रणभू° ।

शितानि भवन्ति । ततो देवतानां प्राणापानयोश्च स्वाधीनत्वात्स्वयं निरुपद्रवः सुखेन संवेष्टुमुपवेष्टुं च प्रभुर्भवति ॥

अथ मात्सर्यप्रवृत्तावध्वर्युकर्तव्यान्युक्त्वोद्गातुः कर्तव्यविशेषं विधत्ते—

प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथंतरे भवतः, इति ।

प्रकृष्टा गतिः प्रेतिः । सा येष्वाज्यस्तोत्रेषु विद्यते तानि प्रेतिवन्ति । तादृशान्याज्यस्तोत्राण्युद्गातृभिरनुष्ठेयानि भवन्ति । तानि चाभिजयाय संपद्यन्ते । मात्सर्यनिमित्तं विहाय नित्यप्रयोगेऽग्न आयाहि वीतय इत्यादीन्याज्यस्तोत्राणि । मात्सर्यप्रवृत्तरूपे त्वस्मिन्संसवे प्र वो वाजा इत्यादीन्याज्यस्तोत्राणि । तत्र गतिप्रकर्षवाचिनः प्रशब्दस्य विद्यमानत्वादेतानि प्रेतिवन्तीत्युच्यन्ते । ननु ब्राह्मणग्रन्थ एकैको वै जनतायामिन्द्र इत्यस्मिन्ननुवाके यौ द्वौ सम्सुनुत इति द्वयोर्मात्सर्येण प्रवृत्तं संसवशब्दाभिधेयं सोमयागमुपक्रम्यैवमाम्नातम्—“ एतिवन्त्याज्यानि भवन्त्यभिजित्यै ” इति । आभिमुख्येन गमनमेतिः । सा येष्वाज्येष्वस्ति तान्येतिवन्ति । अग्न आयाहीत्यस्यामृच्यागमनस्य प्रतीतत्वात्तदादीन्येतिवन्त्याज्यानि । तान्येव नित्यप्रयोग इवात्रापि विधीयन्त इति चेत् । एवं तर्हि वचनद्वयबलात्प्रेतिवतामेतिवतां चात्र समुच्चयोऽस्तु नात्र विकल्पः शङ्कनीयोऽपूर्वभेदेन कार्यैकत्वाभावात् । मरुत्वच्छब्दो यास्वृक्ष्वस्ति ता मरुत्वत्यः । प्रतिपद्यन्ते प्रारभ्यन्त आज्यस्तोत्राणि याभिर्ऋग्भिस्ताः प्रतिपदः । उदाहृता मरुत्वत्य आज्यस्तोत्रेषु प्रतिपदो भवन्ति । तच्च विजयाय संपद्यते । नित्यप्रयोगे पृष्ठस्तोत्रे बृहत्साम रथंतरसाम वेत्युभयमिच्छया विकल्प्यते । इह तु संसवे बृहद्रथंतरे समुचिते कार्ये ॥

अथ तयोः समुच्चितयोर्बहुधा प्रशंसामाह—

इयं वाव रथंतरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथंतरꣳ श्वो बृहदद्याश्वादेवैनमन्तरेति भूतं वाव रथंतरं भविष्यद्बृहद्भूताच्चैवैनं भविष्यतश्चान्तरेति परिमितं वाव रथंतरमपरिमितं बृहत्परिमिताच्चैवैनमपरिमिताच्चान्तरेति, इति ।

बृहद्रथंतरे भूलोकादिप्राप्तिहेतुत्वात्तद्रूपेण स्तूयेते । तदुभयं समुच्चित्य प्रयु-

१ ख. विहाय । २ क. घ. ङ. °कल्पते ।

ज्ञान आभ्यां लोकाभ्यामेनं प्रतिस्पर्धिनमन्तरेति प्रच्युतं करोति। तथा वर्तमानदिनरूपेण भविष्यद्दिनरूपेण च ते स्तूयेते। तथा सत्यश्राश्वादिनद्वयादेनं च्यावयति। तथा भूतभविष्यच्छ्रेयोरूपेण स्तुत्वा ताभ्यां श्रेयोभ्यामेनं च्यावयति। तथा परिमितापरिमितरूपाभ्यामपि श्रेयोभ्यां च्यावयति॥

इत्थं द्वयोः संवेशेत्यादिनाऽत्र कर्तव्यमभिधाय हौत्रं कर्तव्यं दर्शयति—

विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताᳬं स एतज्जमदग्निर्विहव्यमपश्यत्तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यᳬं शस्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते, इति।

आ नो भद्रा इत्येतन्नित्यप्रयोगे वैश्वदेवशस्त्रगतं सूक्तं तस्य स्थाने ममाग्ने वर्चो विहवेष्वस्त्वित्येतत्सूक्तं मात्सर्यग्रस्तः प्रयुञ्जीत। तेन प्रतिस्पर्धिन इन्द्रियसामर्थ्यं वृङ्क्ते विनाशयति। यथा[1] जमदग्निर्वसिष्ठस्य वीर्यं तद्वत्॥

एवमृत्विज एकैकस्य कर्तव्यविशेषमुक्त्वा यजमानस्य कर्तव्यविशेषं दर्शयति—

यस्य भूयाᳬंसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान्भवति॥, इति॥

देवतामुद्दिश्य हविस्त्यागमात्रं यज्ञ इत्युच्यते। अङ्गोपाङ्गसहितः संपूर्णः क्रतुः। यज्ञश्चासौ क्रतुश्चेति यज्ञक्रतुः। हविस्त्यागसामान्यस्य विद्यमानत्वाद्यज्ञोऽपि भवति। अङ्गोपाङ्गविशेषसद्भावात्क्रतुरपि भवति। यथा चूतवृक्षः पनसवृक्ष इति सामान्यविशेषाभ्यां निर्दिश्यते तद्वत्। द्वयोः स्पर्धमानयोर्यजमानयोर्मध्ये यस्य यज्ञक्रतुरङ्गोपाङ्गैर्भूयान्भवति स यजमानः प्रतिस्पर्धिनो देवान्विनाशयति। ततो यदि प्रतिस्पर्धिनो द्वादशस्तोत्रयुक्तोऽग्निष्टोमः परस्तादनुष्ठानसमाप्तौ पर्यवसितो भवेत्तदानीमितरः पञ्चदशस्तोत्रयुक्तमुक्थ्यं कुर्वीत। यदि प्रतिस्पर्धिन उक्थ्यः स्यात्तदानीमितर एकोनत्रिंशत्स्तोत्रयुक्तमतिरात्रं कुर्वीत।

---

१ क. घ. ङ. 'था वसि'।

( उपांशुग्रहार्थाभिषवमन्त्राणामभिधानम् )

एवं सति भूयोभिः स्वकीययज्ञक्रतुभिः प्रतिस्पर्धिनो देवता विनाश्य स्वयं वसुमत्तमो भवति ॥

अत्र विनियोगसंग्रहः—

" आसन्येति पुरा होमः स्यात्प्रातरनुवाकतः ।
स्पर्धया सुन्वतः सोमं संवेशाहुतिपञ्चकम् ॥ १ ॥
प्रशब्दयुक्तान्याज्यानि मरुत्वत्य उपक्रमे ।
बृहद्रथंतरे द्वे च विहव्यं च निमित्ततः ॥
नित्यप्रयोगादेतावान्विशेषः स्पर्धया भवेत् " ॥ २ ॥

अथ मीमांसा ।

दशमाध्यायस्य षष्ठे पादे चिन्तितम्—

संसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम् ।
एकं प्रकृतिवद्विश्वजितीवान्यत्र चेतरत् ॥
वचनाद्विश्वजित्येते साम्नी द्वे स्तोत्रयोर्द्वयोः ।
नेहास्ति तत्पृष्ठ एव साहित्यं स्यात्पुनर्विधेः ॥

इदमाम्नायते—" संसव उभे कुर्यात्, गोसव उभे कुर्यात्, अभिजित्येकाह उभे बृहद्रथंतरे कुर्यात् " इति । किमत्र बृहद्रथंतरयोरेकं पृष्ठस्तुतावितरदन्यस्तुतौ स्यात्, किं वा समुचितमुभयं पृष्ठ एवेति संशयः । प्रकृतौ द्वयोर्विकल्पितत्वादेकस्मिन्प्रयोग एकस्य पृष्ठत्वादन्यत्रापि तथात्वं युक्तम् । तथा सत्यवशिष्टं साम सर्वपृष्ठविश्वजिन्न्यायेन स्तोत्रान्तरे प्रयोक्तव्यमिति पूर्वः पक्षः । तादृग्वचनाभावेनात्र विश्वजिद्वैषम्यात्प्रकृतिवद्विकल्पे सति पूर्वविधानवैयर्थ्यात्समुच्चय इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ।

---

निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्प-

यत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयताऽऽत्मानं मे तर्पयताऽङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गृहान्मे तर्पयत गणान्मे तर्पयत सर्वगणं मा तर्पयत तर्पयंत मा ( १ ) गणा मे मा वि तृषन्नोषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताꣳ सवनाय सोममित्याहौषधीभ्य एवैनꣳ स्वायै विशः स्वायै देवतायै निर्याच्याभि षुणोति यो वै सोमस्याभिषूयमाणस्य ( २ ) प्रथमोऽꣳशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून्यजमानस्य निर्हन्तोस्तमभि मन्त्रयेताऽऽ माऽस्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः। तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ( ३ ) ॥

(उपांशुग्रहार्थाभिषवमन्त्राणामभिधानम्)

(तर्पयंत माऽभिषूयमाणस्य यश्च दर्श च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ तृतीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः।)

---

निग्राभ्यां इतिं नि—ग्राभ्याः । स्थ । देवश्रुत इतिं देव—श्रुतः । आयुः । मे । तर्पयत । प्राणमितिं प्र—अनम् । मे । तर्पयत । अपानमित्यंप—अनम् । मे । तर्पयत । व्यानमितिं वि—अनम् । मे । तर्प-यत । चक्षुः । मे । तर्पयत । श्रोत्रम् । मे । तर्पयत । मनः । मे । तर्पयत । वाचम् । मे । तर्पयत । आत्मानम् । मे । तर्पयत । अङ्गानि । मे । तर्पयत । प्रजामितिं प्र—जाम् । मे । तर्पयत । पशून् । मे । तर्पयत । गृहान् । मे । तर्पयत । गणान् । मे । तर्पयत । सर्वगणमितिं सर्व—गणम् । मा । तर्पयत । तर्पयंत । मा (१) । गणाः । मे । मा । वीतिं । तृषन् । ओषधयः । वै । सोमस्य । विशः । विशः । खलु । वै । राज्ञः । प्रदातोरिति प्र—दातोः । ईश्वराः । ऐन्द्रः । सोमः । अवीवृधम् । वः । मनसा । सुजाता

इति सु—जाताः । ऋतंप्रजाता इत्यृतं—प्रजाताः । भगे । इव । वः । स्याम । इन्द्रेण । देवीः । वीरुधः । संविदाना इति सं—विदानाः । अन्विति । मन्यन्ताम् । सवनाय । सोमम् । इति । आह । ओषधीभ्य इत्योषधि—भ्यः । एव । एनम् । स्वायै । विशः । स्वायै । देवतायै । निर्याच्येति निः—याच्य । अभीति । सुनोति । यः । वै । सोमस्य । अभिषूयमाणस्येत्यभि—सूयमानस्य (२)। प्रथमः । अंशुः । स्कन्दति । सः । ईश्वरः । इन्द्रियम् । वीर्यम् । प्रजामिति प्र—जाम् । पशून् । यजमानस्य । निर्हन्तोरिति निः—हन्तोः । तम् । अभीति । मन्त्रयेत । एति । मा । अस्कान् । सह । प्रजयेति प्र—जया । सह । रायः । पोषेण । इन्द्रियम् । मे । वीर्यम् । मा । निरिति । वधीः । इति । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । इन्द्रियस्य । वीर्यस्य । प्रजाया इति प्र—जायै । पशूनाम् । अनिर्घातायेत्यनिः—घाताय । द्रप्सः । चस्कन्द । पृथिवीम् । अन्विति । द्याम् । इमम् । च । योनिम् । अन्विति । यः । च । पूर्वः । तृतीयम् । योनिम् ।

अन्विति । संचरन्तमिति सं—चरन्तम् । द्रप्सम् । जुहोमि । अन्विति । सप्त । होत्राः ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः । )

---

विशेषविधयः प्रोक्ताः स्पर्धायुक्तस्य सप्तमे ॥

अथाष्टमेऽनुवाक उपांशुग्रहार्थस्याभिषवस्यापेक्षिता मन्त्रा उच्यन्ते ।

कल्पः—" उत्तरस्यां वर्तन्यां होतृचमसं वसतीवरीभिरभिपूर्य निग्राभ्यासु यजमानं वाचयति निग्राभ्याः स्थ देवश्रुतः " इति । दक्षिणस्य हविर्धानस्योत्तरस्मिन्नथचक्रमार्गे वसतीवरीशब्दाभिधेयाभिरद्भिरभिपूर्यते होतृचमसस्तत्राभिपूरणाय निग्राभ्याभिधास्वप्स्वानीयमानासु मन्त्रं वाचयेत् ।

तत्पाठस्तु—

निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयताऽऽत्मानं मे तर्पयताङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गृहान्मे तर्पयत गणान्मे तर्पयत सर्वगणं मा तर्पयत तर्पयत मा गणा मे मा वि तृषन्, इति ।

हविष्मतीरिमा आप इति मन्त्रेण कुम्भे नितरां ग्रहीतव्या आपो निग्राभ्याः । देवैः श्रूयन्त इति देवश्रुतः । हे आपो यूयं तादृश्यः स्थ । ता यूयं मदीयमायुस्तर्पयत । एवं प्राणादिषु योज्यम् । आत्मानं जीवम् । अङ्गानि हस्तपादाद्यवयवान् । गणान्भृत्यसमूहान् । सर्वगणं सर्वे पुत्रभृत्यादिसमूहा यस्य

---

१ ख. ङ. च. °भ्यान्यज° ।

मम तादृशं माम् । किं बहुना तर्पयत मेत्युपसंहारः । त्वदीयेन[1] तर्पणेन मदीया गणास्तृषादिरहिता भवन्तु । पूर्वानुवाकोक्ता आसन्यादित्यादिका मन्त्रा हृदे त्वेत्यनुवाकात्पूर्वं द्रष्टव्याः । अयं तु निग्राभ्याः स्थेति मन्त्रस्तस्मादूर्ध्वं द्रष्टव्यः ॥

यदुक्तं सूत्रकारेण—"धिषणे वीडु इत्यधिषवणफलके, अवीवृधं वो मनसा सुजाता इति राजानमेवाभिमन्त्र्य " इति, तमिमं मन्त्रमवतार्य व्याचष्टे—

ओषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताꣳ सवनाय सोममित्याहौषधीभ्य एवैनꣳ स्वायै विशः स्वायै देवतायै निर्याच्याभि षुणोति, इति ।

यः सोमो राजा तस्यौषधय एव विशः प्रजास्थानीयाः । अत एव ता ओषधिरूपा विशो राज्ञः प्रदातोरीश्वराः सोमं राजानमीश्वरमस्मभ्यं दातुं समर्थाः । सोमश्चेन्द्रदेवत्यः । तस्मादोषधीन्द्रविषयेणावीवृधमित्यादिमन्त्रेण सोमाभिमन्त्रणं युक्तम् । तस्य च मन्त्रस्यायमर्थः—हे सुजाताः सर्वजनोपकारित्वेन शोभनजन्मानो विशेषतश्च ऋतप्रजाता यज्ञार्थं प्रकर्षेणोत्पन्नास्तादृश्यो हे ओषधयो वो युष्मान्मनसाऽवीवृधं वर्धयामः । वो युष्माकं भग इद्भजन एव वयं स्याम सर्वदा युष्मद्भजनरूपे कर्मणि तिष्ठामेत्यर्थः । देवीर्वीरुधः सोमवल्लीरूपा देव्य इन्द्रेण संविदाना ऐकमत्यं गताः सवनाय प्रातःसवनकर्मणे सोममनुमन्यन्तामिति । एतन्मन्त्रपाठेनौषधिरूपा सोमस्य या विट्स्वकीयप्रजा या चेन्द्ररूपा सोमस्य स्वकीयदेवता तस्याः प्रजाया देवतायाश्च सकाशात्सोमं विशेषेण याचित्वाऽभिषुणोति ॥

यदुक्तं सूत्रकारेण—" आ माऽस्कानिति प्रथमप्लुतमंशुमभिमन्त्रयते " इति, तदिदं विधत्ते—

यो वै सोमस्याभिषूयमाणस्य प्रथमोऽꣳशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून्य-

---

1 ख. ङ. च. तदीयेन ।

जमानस्य निर्हन्तोस्तमभि मन्त्रयेताऽऽ माऽ-
स्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं
मा निर्वधीरित्याशिषमेवैतामा शास्त इन्द्रिय-
स्य वीर्यस्य प्रजायै पशूनामनिर्घाताय, इति।

अधिषवणफलकयोरवस्थाप्य ग्रावभिरभिषूयमाणस्य सोमस्य यः प्रथमोंऽशुर्लेशो भूमौ पतति स लेशो यजमानस्येन्द्रियादीन्निःशेषेण विनाशयितुं समर्थः। तस्मात्तत्परिहारार्थमा माऽस्कानित्यादिमन्त्रेण तमंशुमभिमन्त्रयेत। तस्य च मन्त्रस्यायमर्थः—हे भूमौ पतितांशो त्वं प्रजया धनसमृद्ध्या च सह मां प्रत्यास्कान्पुनरागतोऽसि। तस्मान्मदीयमिन्द्रियं वीर्यं च मा निर्वधीर्मा विनाशयेति। अनेनाभिमन्त्रणेन प्रजादीनामविनाशायाऽऽशिषमेवाऽऽशास्ते ॥

यदुक्तं सूत्रकारेण—"द्रप्सश्चस्कन्देति विप्रुषः" इति। अभिमन्त्रयत इत्यनुवर्तते। तमिमं मन्त्रं पठति—

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनि-
मनु यश्च पूर्वः। तृतीयं योनिमनु संच-
रन्तं द्रप्सं जुहोम्यनु सप्त होत्राः॥, इति॥

द्रप्सः सोमरसबिन्दुः पृथिवीमनु चस्कन्द पृथिव्यां पतित इत्यर्थः। स च द्रप्सो हुतः सन्स्थानत्रयेऽनुसंचरति द्युलोकेऽन्तरिक्षलोके भूलोके च। तदेतदभिप्रेत्य स्मर्यते स्म—

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति॥

योऽयमर्थो द्यामित्यादिनाऽभिधीयते द्यामिमं च योनिमनु अन्तरिक्षरूपमिदं स्थानमनुसंचरति। यश्च पूर्वो योनिः पृथिवीमनु चस्कन्देति पूर्वोक्तस्थानविशेषः, तमप्यनुसंचरति। तृतीयं योनिं द्युलोकरूपमादित्यस्थानमनुसंचरति, तमिमं त्रिषु स्थानेष्वनुसंचरन्तं द्रप्सं जुहोमि मनसा हुतमिव भावयामि। कुत्र होम इति तदुच्यते—अनु सप्त होत्रा इति। यस्यां दिशि द्रप्सः पतितस्तद्व्यतिरिक्तहोमयोग्याः सप्त दिशो याः सन्ति तास्वनुक्रमेण जुहोमि। यथाऽयं द्रप्सो हुत आदित्यादिस्थानत्रयेषु संचरन्नुपकरोति तथा भावयामीत्यर्थः। त एते मन्त्रा वाचस्पतये पवस्वेत्यस्मादनुवाकात्पूर्वं द्रष्टव्याः ॥

अत्र विनियोगसंग्रहः—

निग्राभ्यादितृषन्नन्तं निग्राभ्याग्रहणे सति ।
स्वामिनं वाचयेत्सोमं मन्त्रयेत ह्यवीवृधम् ॥ १ ॥
आमास्कानभिमन्त्र्यांशुर्द्रप्सो बिन्दुं तु मन्त्रयेत् ।
चत्वार एते मन्त्राः स्युरष्टमे त्वनुवाकके ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयप्रपाठके नवमोऽनुवाकः । )

---

यो वै देवान्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्वग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशंभूः । स नः पावको द्रविणं दधातु ( १ ) आयुष्मन्तः सहभक्षाः स्याम । विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम । इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमै-

रयन्त । ते सौधन्वनाः सुवर्गनशानाः स्विष्टिं
नो अभि वसीयो नयन्तु । आयतनवतीर्वा
अन्या आहुतयो हूयन्तेऽनायतना अन्या या
आघारवतीस्ता आयतनवतीर्याः ( २ ) सौ-
म्यास्ता अनायतना ऐन्द्रवायवमादायाऽऽघा-
रमा घारयेदध्वरो यज्ञोऽयमस्तु देवा ओष-
धीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्व-
रोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या
एव तदाहुतीरायतनवतीः करोत्यायतनवान्भ-
वति य एवं वेदाथो द्यावापृथिवी एव घृतेन
व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजी-
वनीयो भवति ( ३ ) य एवं वेदैष ते रुद्र
भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ
रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ।
मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठं
ब्रह्मचर्यं वसन्तं निरभजत्स आऽगच्छत्सोऽब्र-
वीत्कथा मा निरभागिति न त्वा निरभाक्षमि-
त्यब्रवीदङ्गिरस इमे सत्रमासते ते ( ४ ) सु-
वर्गं लोकं न प्र जानन्ति तेभ्य इदं ब्राह्मणं
ब्रूहि ते सुवर्गं लोकं यन्तो य एषां पशवस्ता-

ᳲस्ते दास्यन्तीति तदेभ्योऽब्रवीत्ते सुवर्गं लोकं यन्तो य एषां पशव आसन्तानस्मा अददुस्तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आऽगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै ( ५ ) मह्य-मिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाभ्यवेत्यᳲ सोऽब्रवीद्यज्ञे माऽऽ भजाथ ते पशून्नाभि मᳲस्य इति तस्मा एतं मन्थिनः सᳲस्रावमजुहोत्ततो वै तस्य रुद्रः पशून्नाभ्यमन्यत यत्रैतमेवं विद्वान्मन्थिनः सᳲस्रावं जुहोति न तत्र रुद्रः पशूनभि मन्यते ( ६ )

( दधात्वायतनवतीर्या उपजीवनीयं भवत उपजीवनीयो भवति तेऽदुर्वै यत्रैतमेकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः । )

---

यः । वै । देवान् । देवयशसेनेति देव—यशसेन । अर्पयति । मनुष्यान् । मनुष्ययशसेनेति मनुष्य—यशसेन । देवयशसीति देव—यशसी । एव । देवेषु ।

भवति । मनुष्ययशसीति मनुष्य—यशसी। मनुष्येषु।
यान् । प्राचीनम् । आग्रयणात् । ग्रहान् । गृह्णीयात् ।
तान् । उपांश्वित्युप—अंशु । गृह्णीयात् । यान् ।
ऊर्ध्वान् । तान् । उपब्दिमत इत्युपब्दि—मतः ।
देवान् । एव । तत् । देवयशसेनेति देव—यशसेन ।
अर्पयति । मनुष्यान् । मनुष्ययशसेनेति मनुष्य—
यशसेन । देवयशसीति देव—यशसी । एव । देवेषु ।
भवति । मनुष्ययशसीति मनुष्य—यशसी । मनु-
ष्येषु । अग्निः । प्रातःसवन इति प्रातः—सवने ।
पातु । अस्मान् । वैश्वानरः । महिना । विश्वशंभू-
रिति विश्व—शंभूः । सः । नः । पावकः । द्रवि-
णम् । दधातु ( १ ) । आयुष्मन्तः । सहभक्षा इति
सह—भक्षाः । स्याम । विश्वे । देवाः । मरुतः ।
इन्द्रः । अस्मान् । अस्मिन् । द्वितीये । सवने । न ।
जह्युः । आयुष्मन्तः । प्रियम् । एषाम् । वदन्तः ।
वयम् । देवानाम् । सुमताविति सु—मतौ । स्याम ।
इदम् । तृतीयम् । सवनम् । कवीनाम् । ऋतेन । ये ।
चमसम् । ऐरयन्त । ते । सौधन्वनाः । सुवः । आन-
शानाः । स्विष्टिमिति सु—इष्टिम् । नः । अभीति ।
वसीयः । नयन्तु । आयतनवतीरित्यायतन—वतीः ।

वै । अन्याः । आहुतय इत्या—हुतयः । हूयन्ते । अनायतना इत्यना—यतनाः । अन्याः । याः । आधारवतीरित्याधार—वतीः । ताः । आयतनवतीरित्यायतन—वतीः । याः ( २ ) । सौम्याः । ताः । अनायतना इत्यना—यतनाः । ऐन्द्रवायवमित्यैन्द्र—वायवम् । आदायेत्या—दाय । आघारमित्या—घारम् । एति । घारयेत् । अध्वरः । यज्ञः । अयम् । अस्तु । देवाः । ओषधीभ्य इत्योषधि—भ्यः । पशवे । नः । जनाय । विश्वस्मै । भूताय । अध्वरः । असि । सः । पिन्वस्व । घृतवदिति घृत—वत् । देव । सोम । इति । सौम्याः । एव । तत् । आहुतीरित्या—हुतीः । आयतनवतीरित्यायतन—वतीः । करोति । आयतनवानित्यायतन—वान् । भवति । यः । एवम् । वेद । अथो इति । द्यावापृथिवी इति द्यावा—पृथिवी । एव । घृतेन । वीति । उनत्ति । ते इति । व्युत्ते इति वि—उत्ते । उपजीवनीये इत्युप—जीवनीये । भवतः । उपजीवनीय इत्युप—जीवनीयः । भवति ( ३ ) । यः । एवम् । वेद । एषः । ते । रुद्र । भागः । यम् । निरयाचथा इति निः—अयाचथाः । तम् । जुषस्व । विदेः । गौपत्यम् ।

रायः। पोषम्। सुवीर्यमिति सु—वीर्यम्। संवत्सरीणामिति सं—वत्सरीणाम्। स्वस्तिम्। मनुः। पुत्रेभ्यः। दायम्। वीति। अभजत्। सः। नाभानेदिष्ठम्। ब्रह्मचर्यमिति ब्रह्म—चर्यम्। वसन्तम्। निरिति। अभजत्। सः। एति। अगच्छत्। सः। अब्रवीत्। कथा। मा। निरिति। अभाक्। इति। न। त्वा। निरिति। अभाक्षम्। इति। अब्रवीत्। अङ्गिरसः। इमे। सत्रम्। आसते। ते (४)। सुवर्गमिति सुवः—गम्। लोकम्। न। प्रेति। जानन्ति। तेभ्यः। इदम्। ब्राह्मणम्। ब्रूहि। ते। सुवर्गमिति सुवः—गम्। लोकम्। यन्तः। ये। एषाम्। पशवः। तान्। ते। दास्यन्ति। इति। तत्। एभ्यः। अब्रवीत्। ते। सुवर्गमिति सुवः—गम्। लोकम्। यन्तः। ये। एषाम्। पशवः। आसन्। तान्। अस्मै। अददुः। तम्। पशुभिरिति पशु—भिः। चरन्तम्। यज्ञवास्ताविति यज्ञ—वास्तौ। रुद्रः। एति। अगच्छत्। सः। अब्रवीत्। मम। वै। इमे। पशवः। इति। अदुः। वै (५)। मह्यम्। इमान्। इति। अब्रवीत्। न। वै। तस्य। ते। ईशते। इति। अब्रवीत्। यत्। यज्ञवास्ताविति

यज्ञ—वास्तौ । हीयते । ममं । वै । तत् । इति । तस्मात् । यज्ञवास्त्विति यज्ञ—वास्तु । न । अभ्यवेत्यामित्यभि—अवेत्यम् । सः । अब्रवीत् । यज्ञे । मा । एति । भज । अथ । ते । पशून् । न । अभीति । मꣳस्ये । इति । तस्मै । एतम् । मन्थिनः । सꣳस्रावमिति सं—स्रावम् । अजुहोत् । ततः । वै । तस्य । रुद्रः । पशून् । न । अभीति । अमन्यत । यत्रं । एतम् । एवम् । विद्वान् । मन्थिनः । सꣳस्रावमिति सं—स्रावम् । जुहोति । न । तत्रं । रुद्रः । पशून् । अभीति । मन्यते ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः । )

---

उपांशुग्रहसंयुक्ता मन्त्रा अष्टम ईरिताः ॥

अथ नवमे सवनाहुत्यादिमन्त्रा वक्तव्याः । तत्राऽऽदौ तावद्ग्रहमन्त्राणां क्रमेण नीचमुच्चं च ध्वनिं विधत्ते—

यो वै देवान्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपाꣳशु गृह्णीयाद्यानूर्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेना-

( सवनाहुत्यादिमन्त्राणामभिधानम् )

र्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु, इति।

देवानां यशः कीर्तिर्देवयशसं तेन देवान्यो यजमानोऽर्पयति योजयति मनुष्यानपि मनुष्ययशसेन योजयति स स्वर्गे देवेषु मध्ये देवयशसवानेव भवति। भूलोके मनुष्येषु मध्ये मनुष्ययशसवानेव भवति । तदुभयसिद्ध्यर्थे क उपाय इति, तदुच्यते—आग्रयणग्रहात्प्राचीनं पूर्वस्मिन्काले यान्ग्रहानंशूपांश्वन्तर्यामैन्द्रवायवादीन्गृह्णाति तान्सर्वानुपांशु यथा भवति तथा गृह्णीयात्[1]। मन्त्रा यथा पार्श्वस्थैर्न श्रूयन्ते तथोच्चार्य गृह्णीयादित्यर्थः। यानाग्रयणग्रहादूर्ध्वभाविन उक्थ्यादीन्ग्रहान्गृह्णीयात्तानुपब्दिमतो गृह्णीयात्। समीपस्थैरीषच्छ्रवणमुपब्दिस्तथोच्चार्य गृह्णीयादित्यर्थः। तत्रोपांशूच्चारणेन देवानां कीर्तिप्राप्तिः। ईषदुच्चध्वनिना मनुष्याणां कीर्तिप्राप्तिः । तेनोभयेन स्वस्यापि लोकद्वये कीर्तिर्भवति॥

कल्पः—" अग्निः प्रातःसवने पात्वस्मानिति संस्थिते सवन आहुतिं जुहोति " इति।

पाठस्तु—

अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशंभूः। स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम।, इति।

अयमग्निः प्रातःसवनेऽस्माभिरनुष्ठिते सत्यस्मान्पातु। वैश्वानरो विश्वेषां नराणां स्वामित्वेन संबन्धी। महिना स्वकीयेन माहिम्ना विश्वशंभूर्विश्वस्य सुखप्रापकः। स तादृशोऽग्निरस्मभ्यं द्रविणं दधातु धनं दद्यात्। कीदृशः, पावकः शोधयिता पापक्षयं कृत्वाऽस्माञ्शोधयतीत्यर्थः। किं च, वयमायुष्मन्तो दीर्घायुषः सहभक्षा भक्षयितृभिः सर्वैः सहिताश्च सर्वशः स्याम। सोऽयं प्रातःसवनसमाप्तौ होममन्त्रः॥

कल्पः—"विश्वे देवा मरुत इति संस्थिते सवन आहुतिं जुहोति" इति।

पाठस्तु—

विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां

---

[1] ख. °ति तथा मं°।

वदन्तो वयं देवानाꣳ सुमतौ स्याम।, इति।

ये मरुतो यश्चेन्द्रस्ते विश्वे देवाः सर्वे देवा अस्मिन्द्वितीये माध्यंदिने सवने नोऽस्मान्न जह्युर्मा परित्यजेयुः। वयमप्यायुष्मन्तो दीर्घायुषो येषां देवानां स्तोत्रादिकं वदन्तस्तेषां सुमतावनुग्रहबुद्धौ स्याम तिष्ठेम। सोऽयं माध्यंदिनसवनसमाप्तौ होममन्त्रः॥

कल्पः—"इदं तृतीयꣳ सवनं कवीनामिति संस्थिते सवन आहुतिं जुहोति" इति।

पाठस्तु—

इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु।, इति।

कवीनां विदुषामृत्विजां संबन्धि यदिदं तृतीयसवनं तदिदं देवा वसीयो वसुमत्तरं कृत्वा नोऽस्माकं या स्विष्टिः शोभनो यागस्तां स्विष्टिमभिलक्ष्य नयन्तु प्रापयन्तु। कीदृशा देवास्तदुच्यते—ये देवाश्चमसं चमसगणमैरयन्त प्रेरितवन्तस्ते देवाः सौधन्वनाः सुधन्वन इन्द्रस्य संबन्धिन ऋभुनामानः सुवरानशानाः स्वर्गं प्राप्नुवन्तः। तादृशा देवा नयन्त्वित्यन्वयः। सोऽयं तृतीयसवनसमाप्तौ होममन्त्रः। एतेषु मन्त्रेष्वग्निः प्रातःसवन इत्ययमाद्यो मन्त्र ओमासश्चर्षणीधृत इत्यनुवाकादूर्ध्वं द्रष्टव्यः। विश्वे देवा इत्ययं द्वितीयो मन्त्रो महाꣳ इन्द्रो नृवदित्यनुवाकादूर्ध्वं द्रष्टव्यः। इदं तृतीयꣳ सवनमिति तृतीयो मन्त्रो बृहस्पतिसुतस्येत्यनुवाकादूर्ध्वं द्रष्टव्यः॥

यदुक्तं सूत्रकारेण—"अध्वरो यज्ञोऽयमस्तु देवा इति परिप्लवयाऽऽघारमाघारयति" इति।

परिप्लवाशब्देन होमसाधनं काष्ठपात्रमुच्यते। तमिममाघारं विधत्ते—

आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः सौम्यास्ता अनायतना ऐन्द्रवायवमादायाऽऽघारमा घारयेदध्वरो यज्ञोऽयमस्तु देवा

---

१ ख. घ. ङ. च. °प्लवाघा°।

ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूताया‌ध्वरोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः करोत्यायतनवान्भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनक्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति य एवं वेद , इति।

हूयमाना आहुतयो द्विविधा आयतनयुक्तास्तद्रहिताश्च । आघारेण व्यवस्थापितं होमस्थानं होतव्यानामायतनं यत्तद्ब्राह्मणे पुरोडाशाद्याहुतीनामस्ति । आघारस्य प्रकरणे विहितत्वात् । सौम्यास्त्वंशूपांश्वन्तर्यामग्रहा आघाररहितत्वादनायतनास्तद्वदैन्द्रवायवग्रहाद्याहुतीनामप्यनायतनत्वं प्राप्तम् । अतस्तद्व्यावृत्त्यर्थं यदैन्द्रवायवं होतुमादत्ते तदा वामहस्ते तं धृत्वा दक्षिणहस्तेनाध्वरो यज्ञ इत्यादिमन्त्रेणाऽऽघारं जुहुयात् । दक्षिणं परिधिसंधिमन्ववहृत्य प्राञ्चमुदञ्चं सोमरसं पातयेत् । सोऽयमाघारः । मन्त्रार्थस्तु—हे देवा अयमस्माकं यज्ञोऽध्वरो हिंसकरहितोऽस्तु । किमर्थमिति तदुच्यते—ओषधीभ्यः पशवे जनाय चास्माकं सर्वप्राणिभ्यश्च हे सोम त्वमध्वरो हिंसारहितोऽसीति घृतवत्सिञ्चेति । तत्तेन सौम्या ऐन्द्रवायवादिग्रहसंबन्धिन्योऽप्याहुतीरायतनवतीः करोति। यश्चैवं वेद सोऽप्यायतनवान्भवति। अपि च घृतवदित्युक्त्या द्यावापृथिव्यावपि घृतेन विविधं क्लेदयति। ते च विविधं क्लेदिते सत्यौ सर्वेषां प्राणिनामुपजीवनीये भवतः। य एवं वेद सोऽप्युपजीवनीयो भवति ॥

यदुक्तं सूत्रकारेण—“ उत्तरार्धात्प्रतिप्रस्थाता बहिष्परिध्यङ्गारं निर्वर्त्य तस्मिन्मन्थिनः सꣳस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथा इति ” इति।

पाठस्तु—

एष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् । , इति।

हे रुद्र क्रूरदेवैष संस्रावस्तव भागस्तं(गः,यं) भागं निरयाचथा देवेभ्यो निष्कृष्य तवैवासाधारणत्वेन याचितवानसि, तद्याचनं ब्राह्मणे स्पष्टी भविष्यति, तं याचितं भागं सेवस्व। त्वं तु गवां पालनं धनस्य पुष्टिं शोभनंपुत्रं

संवत्सरनिष्पाद्यानामोषधीनामविनाशं च विदेर्जानासि । तस्मात्सर्वमस्मदर्थं संपादयेत्यभिप्रायः ॥

तमिमं संस्रावहोमं विधातुं पीठिकामारचयति—

मनुः पुत्रेभ्यो दायं व्यभजत्स नाभा-
नेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत्स
आऽगच्छत्सोऽब्रवीत्कथा मा निरभागि-
ति न त्वा निरभाक्षमित्यब्रवीत् , इति ।

मनोर्बहवः पुत्रास्तेषु कनिष्ठो नाभानेदिष्ठनामको बालो वेदाध्ययनं करोति । तदानीं पिता प्रवृद्धेभ्यः पुत्रेभ्यः स्वकीयं धनं विभज्य दत्तवान् । अध्ययनपरं बालं भागरहितमकरोत् । स च बाल आगत्य केन हेतुना मां भागरहितमकार्षीरिति पितरमब्रवीत् । स च पिता त्वां भागरहितं न कृतवानस्मीत्यब्रवीदुक्त्वा च तत्प्राप्त्युपायं पुत्रायोपदिदेश ॥

अनन्तरं च पुत्रस्तेनोपायेन भागं प्राप्तवानित्येतद्दर्शयति—

अङ्गिरस इमे सत्रमासते ते सुवर्गं लोकं न
प्र जानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गं
लोकं यन्तो य एषां पशवस्ताꣳस्ते दास्य-
न्तीति तदेभ्योऽब्रवीत्ते सुवर्गं लोकं यन्तो
य एषां पशव आसन्तानस्मा अददुः , इति ।

अङ्गिरोनामका इमे महर्षयः सत्रमनुतिष्ठन्ति । ते तु स्वर्गप्राप्तिसाधनानां नाभानेदिष्ठनामकशस्त्रादीनामपरिज्ञानात्स्वर्गं न जानन्त्यतस्तेभ्य इदं त्वयाऽधीतं शस्त्रादिप्रतिपादकं ब्राह्मणं ब्रूहि । तेऽपि सत्रं परिसमाप्य स्वर्गं गच्छन्तो यागोपयुक्तेभ्योऽवशिष्टान्स्वकीयान्पशून्सर्वांस्तुभ्यं दास्यन्ति । सोऽयं भागप्राप्त्युपायः । इत्येवं प्रोक्तः पुत्र इदं ब्राह्मणं तेभ्योऽभिदधे । ततस्तदीयानवशिष्टान्सर्वान्पशूँल्लब्धवान् ॥

अथ नाभानेदिष्ठस्य रुद्रेण सह संवादं दर्शयति—

तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आऽगच्छ-
त्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्य-
मिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवी-

यद्यज्ञवास्तौ हीयते मम वै तदिति त-
स्माद्यज्ञवास्तु नाभ्यवेत्यꣳ सोऽब्रवीद्यज्ञे
माऽऽभजाथ ते पशून्नाभि मꣳस्य इति
तस्मा एतं मन्थिनः सꣳस्रावमजुहोत्ततो
वै तस्य रुद्रः पशून्नाभ्यमन्यत , इति।

अङ्गिरोभिर्दत्तान्पशून्स्वगृहे नेतुं तदीये(यायां) यज्ञभुवि यज्ञशेषैः पशुभिः संचरन्तं नाभानेदिष्ठं रुद्र आगत्य मदीया एते पशव इत्यब्रवीत्। ततः स नाभानेदिष्ठो मह्यमङ्गिरस इमान्पशून्दत्तवन्त इत्यब्रवीत्। ततः स रुद्रस्तस्य यज्ञशेषस्य द्रव्यस्य तेऽङ्गिरसो न स्वामिनस्तस्मात्तैर्दत्तं पशुद्रव्यमस्वामिदत्तत्वात्तव न योग्यमित्यब्रवीत्। कस्तर्हि स्वामीति चेच्छृणु—यद्द्रव्यं यज्ञभूमौ हीयते यज्ञसमाप्तेरूर्ध्वमवशिष्यते तत्सर्वं ममैव स्वम्। तस्मान्ममानुज्ञामन्तरेण यज्ञभूमिः केनापि न प्रवेष्टव्या। यदि तव शिष्टपश्वपेक्षाऽस्ति तर्हि मां यज्ञे भागिनं कुरु ततस्तुभ्यं दत्ता[1]नेतान्पशून्न मारयिष्यामीति रुद्रोऽब्रवीत्। ततो नाभानेदिष्ठस्तस्मै रुद्रायैतं मन्थिनः संस्रावमजुहोत्। मन्थिग्रहं हुत्वा तत्पात्रस्थं द्रव्यशेषं परिधेर्बहिस्थापितेऽङ्गारे हुतवान्। ततस्तुष्टो रुद्रस्तस्य नाभानेदिष्ठस्य पशून्नैव हिंसितवान्॥

आख्यानं परिसमाप्य विधत्ते—

यत्रैतमेवं विद्वान्मन्थिनः सꣳस्रावं जुहो-
ति न तत्र रुद्रः पशूनभि मन्यते॥, इति॥

ऐन्द्रवायवादिषूक्थ्यान्तेषु ग्रहेषु गृहीतेषु [2]ऋतुपात्रयोः सोमग्रहणात्प्रागेवैन्द्रवायवमान्थिग्रहप्रचारस्य काल(ये)त्वान्मधुश्च माधवश्चेत्येतस्मादनुवाकात्प्रागेवाध्वरो यज्ञ इत्याघारमन्त्र एष ते रुद्र भाग इति संस्रावमन्त्रश्च द्रष्टव्यः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

१ ख. च. 'त्तान्प'। २ ख. च. 'षु ऋतु'।

( अथ तृतीयाष्टके प्रथमप्रपाठके दशमोऽनुवाकः । )

---

जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्तस्मिन्मा धाः स्वाहा सरस्वत्यै । ऋचा स्तोमꣳ समर्धय गायत्रेण रथंतरम् । बृहद्गायत्रवर्तनि । यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि यस्ते पवित्रात्स्वाहाकृतमिन्द्राय तं जुहोमि । यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात् ( १ ) पुरोडाशात्करम्भात् । धानासोमान्मन्थिन इन्द्र शुक्रात्स्वाहाकृतमिन्द्राय तं जुहोमि । यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान्त्स्वाहाकृतः पुनरप्येति देवान् । दिवः पृथिव्याः पर्यन्तरिक्षात्स्वाहाकृतमिन्द्राय तं जुहोमि । अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि ( २ ) च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान्गृहीत्वा बहिष्पवमानꣳ सर्पन्ति पराञ्चो हि यन्ति

परांचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योप तिष्ठते
यज्ञो वै विष्णुर्यज्ञमेवाकर्विष्णो त्वं नो अन्तमः
शर्म यच्छ सहन्त्य। प्र ते धारा मधुश्चुत
उत्सं दुह्रते अक्षितमित्याह यदेवास्य शयान-
स्योपशुष्यति तदेवास्यैतेनाऽऽ प्याययति(३)॥

(परिवापात्प्रजां मयि दुह्रते चतुर्दश च)।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
प्रथमप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ तृतीयाष्टके प्रथमप्रपाठके दशमोऽनुवाकः।)

---

जुष्टः। वाचः। भूयासम्। जुष्टः। वाचः।
पतये। देवि। वाक्। यत्। वाचः। मधुमदिति
मधु—मत्। तस्मिन्। मा। धाः। स्वाहा। सर-
स्वत्यै। ऋचा। स्तोमम्। समिति। अर्धय। गाय-
त्रेण। रथंतरमिति रथं—तरम्। बृहत्। गायत्रवर्त-
नीति गायत्र—वर्तनि। यः। ते। द्रप्सः। स्कन्दति।
यः। ते। अंशुः। बाहुच्युत इति बाहु—च्युतः।
धिषणयोः। उपस्थादित्युप—स्थात्। अध्वर्योः।
वा। परीति। यः। ते। पवित्रात्। स्वाहाकृतमिति
स्वाहा—कृतम्। इन्द्राय। तम्। जुहोमि। यः। ;

द्रप्सः। अंशुः। पतितः। पृथिव्याम्। परिवापादिति परि—वापात् (१)। पुरोडाशात्। करम्भात्। धानासोमादिति धाना—सोमात्। मन्थिनः। इन्द्र। शुक्रात्। स्वाहाकृतमिति स्वाहा—कृतम्। इन्द्राय। तम्। जुहोमि। यः। ते। द्रप्सः। मधुमानिति मधु—मान्। इन्द्रियावानितीन्द्रिय—वान्। स्वाहाकृत इति स्वाहा—कृतः। पुनः। अप्येतीत्यपि—एति। देवान्। दिवः। पृथिव्याः। परीति। अन्तरिक्षात्। स्वाहाकृतमिति स्वाहा—कृतम्। इन्द्राय। तम्। जुहोमि। अध्वर्युः। वै। ऋत्विजाम्। प्रथमः। युज्यते। तेन। स्तोमः। योक्तव्यः। इति। आहुः। वाक्। अग्रेगा इत्यग्रे—गाः। अग्रे। एतु। ऋजुगा इत्यृजु—गाः। देवेभ्यः। यशः। मयि। दधती। प्राणानिति प्र—अनान्। पशुषु। प्रजामिति प्र—जाम्। मयि (२)। च। यजमाने। च। इति। आह। वाचम्। एव। तत्। यज्ञमुख इति यज्ञ—मुखे। युनक्ति। वास्तु। वै। एतत्। यज्ञस्य। क्रियते। यत्। ग्रहान्। गृहीत्वा। बहिष्पवमानमिति बहिः—पवमानम्। सर्पन्ति। पराञ्चः। हि। यन्ति। पराचीभिः। स्तुवते।

वैष्णव्या । ऋचा । पुनः । एत्येत्या—इत्य । उपेति ।
तिष्ठते । यज्ञः । वै । विष्णुः । यज्ञम् । एव । अकः ।
विष्णो इति । त्वम् । नः । अन्तमः । शर्म ।
यच्छ । सहन्त्य । प्रेति । ते । धाराः । मधुश्चुत इति
मधु—श्चुतः । उत्सम् । दुह्रते । अक्षितम् । इति ।
आह । यत् । एव । अस्य । शयानस्य । उपशुष्य-
तीत्युप—शुष्यति । तत् । एव । अस्य । एतेन ।
एति । प्यायति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( अथ तृतीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः । )

आघारसंस्रावमन्त्रौ नवमे कथितावुभौ ॥

अथ दशमे प्रवृतहोमादिमन्त्रा उच्यन्ते ।

कल्पः—"प्रवृतः प्रवृतः प्रवृतहोमौ जुहोति जुष्टो वाचो भूयासमृचा स्तोमꣳ समर्धयेत्येताभ्याम्" इति ।

षष्ठे काण्डे यद्विहितमृत्विजो वृणीते छन्दाꣳस्येव वृणीत इति, तत्र यो यो वृतो भवति तेन तेनेमौ होमौ कर्तव्यौ ।

तत्र प्रथममन्त्रपाठस्तु—

जुष्टो वाचो भूयासं जुष्टो वाचस्पतये
देवि वाक् । यद्वाचो मधुमत्तस्मि-
न्मा धाः स्वाहा सरस्वत्यै ।, इति ।

अहं वाग्देवतायाः प्रियो भूयासं, तथा वाचां पालको यो देवस्तस्यापि प्रियो भूयासम् । हे वाग्देवि शब्दरूपाया वाचः संबन्धि यन्मधुरं पदं तस्मिन्मा धा मां स्थापय । सरस्वत्यै तुभ्यमेतद्धुतमस्तु ॥

द्वितीयमन्त्रपाठस्तु—

ऋचा स्तोमꣳ समर्धय गायत्रेण रथंतरम् । बृहद्गायत्रवर्तनि ।, इति ।

हे वाग्देवि ऋचा योनिभूतया स्तोमं स्तोत्रं सामावृत्तिं वा समर्धय समृद्धिं कुरु । तथा गायत्रेण साम्ना सहितं रथंतरं साम समर्धय । गायत्रस्य वर्तनी मार्गो यस्य बृहतः साम्नस्तद्गायत्रवर्तनि । तादृशं यथा भवति तथा बृहत्साम समर्धय । कर्मानुष्ठानाय वृतेषु ऋत्विक्षु ऋक्सामादिगतं यद्वैकल्यं तत्परिहृत्य समृद्धं कुर्विति तात्पर्यार्थः ॥

कल्पः—"यस्ते द्रप्सो यो द्रप्स इत्येतैः प्रतिमन्त्रं वैप्रुषहोमाञ्जुहोति" इति ।

यस्ते द्रप्स इत्येतद्द्वयोः प्रतीकं ततस्त्रयो मन्त्रास्तैर्मन्त्रैः पवमानार्थं प्रसर्पणात्पूर्वं जुहुयात् । वैप्रुषान्सप्तहोतारं च हुत्वा बहिष्पवमानवन्माध्यंदिनं पवमानं प्रसर्पन्तीति सूत्रकारेणोक्तत्वात् ।

तत्र प्रथमामृचमाह—

यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि यस्ते पवित्रात्स्वाहाकृतमिन्द्राय तं जुहोमि ।, इति ।

हे सोम तव संबन्धी यो द्रप्सो रसबिन्दुरथवांऽशुरधिषवणफलकयोरुपस्थादुपरिभागात्स्कन्दति भूमौ पतत्यथवाऽध्वर्योर्बाहुच्युतः स्कन्दति । अथवा यस्ते रसबिन्दुः पवित्राद्दशापवित्राद्वा भूमौ पतति तं द्रप्सं तं चांशुमिन्द्राय स्वाहाकृतं स्वाहाकारेण समर्पितं कृत्वा जुहोमि ॥

अथ द्वितीयामृचमाह—

यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात्पुरोडाशात्करम्भात् । धानासोमान्मन्थिन इन्द्र शुक्रात्स्वाहाकृतमिन्द्राय तं जुहोमि । , इति ।

परिवापादीनि सवनीयपुरोडाशद्रव्याणि । परिवापो लाजानां समूहः । पुरोडाशः प्रसिद्धः । करम्भः सक्तवः । धाना भृष्टयवतण्डुलाः । सोमः

(प्रवृतहोमादिमन्त्राणामभिधानम्)

प्रसिद्धः। धानाश्च सोमश्च धानासोमं तस्मात्। मन्थी शुक्रश्च ग्रहौ। हे इन्द्रोक्तानां परिवापादीनां सकाशाद्यो द्रप्सो भूमौ पतितो यश्चांशुर्भूमौ पतितस्तं द्रप्सं तं चांशुं स्वाहाकारेण समर्पितं कृत्वा तुभ्यमिन्द्राय जुहोमि॥

अथ तृतीयामाह—

यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान्त्स्वाहाकृतः पुनरप्येति देवान्। दिवः पृथिव्याः पर्यन्तरिक्षात्स्वाहाकृतमिन्द्राय तं जुहोमि।, इति।

हे सोम यस्ते द्रप्सो मधुमान्माधुर्यवानिन्द्रियवानिन्द्रियवृद्धिकारी मया स्वाहाकृतः सन्दिवो वा पृथिव्या वाऽन्तरिक्षाद्वा परितः पतितस्ततस्तस्मात्सर्वस्मादागत्य पुनर्देवानप्येति प्राप्नोति तं द्रप्समिन्द्राय स्वाहाकारेण समर्पितं कृत्वा जुहोमि॥

यदुक्तं सूत्रकारेण—"उदञ्चः प्रह्वा बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्त्यध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः" इति। "पूर्वोऽध्वर्युर्बर्हिर्मुष्टिं धून्वन्सर्पति वागग्रेगा अग्र एत्विति" इति च, तदेतद्विधत्ते—

अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति, इति।

बहिष्पवमानाय सर्पतामृत्विजां मध्येऽध्वर्युरेव प्रथमो युज्यते पूर्वभावीसन्सर्पणे प्रवर्तते। तस्मात्तेनाध्वर्युणा स्तोमो योक्तव्यः। बहिष्पवमानस्तोत्रं प्रस्तोत्रादिषु योजनीयमित्यभिज्ञा आहुः। तद्योजनाय वागग्रेगा इति मन्त्रं पठेत्। अग्रे गन्तुं शक्नोतीत्यग्रेगाः। तादृशी वाग्देवतर्त्विजामग्रे गच्छतु। कथंभूता वाक्, ऋजुगा देवेभ्यो देवप्राप्त्यर्थमृजुना मार्गेण गच्छन्ती, मय्यध्वर्यौ यशो दधती कीर्तिं स्थापयन्ती, पशुषु गवादिषु प्राणान्सुस्थिरं दधती, मयि च यजमाने च पुत्रादिरूपां प्रजां दधतीति मन्त्रस्यार्थः। तेन मन्त्रपाठेनाध्वर्युर्यज्ञमुखे बहिष्पवमानारम्भे वाचमेव योजितवान्भवति॥

बहिष्पवमानसर्पणस्य कालं विधत्ते—

वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान्गृहीत्वा बहिष्पवमानꣳ सर्पन्ति, इति।

ऐन्द्रवायवादिकान्ग्रहान्पूर्वभाविनः सर्वान्गृहीत्वा बहिष्पवमानमृत्विजः संर्पन्तीति यदेतेन यज्ञस्य वास्तु क्रियते गृहरूपं स्थानं कृतं भवति । तस्मादुक्तग्रहादूर्ध्वं सर्पेयुरित्यर्थः ॥

यदुक्तं सूत्रकारेण—"वैष्णव्यर्चा पुनरेत्य यजमानो राजानमुपतिष्ठते विष्णो त्वं नो अन्तम इति," तदेतद्विधत्ते—

पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योप तिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाकः, इति।

हि यस्मात्पराञ्चः पुनरावृत्तिरहिता ऋत्विजो बहिष्पवमानाय यन्ति सर्पन्ति । यस्माच्च सामगाः पराचीभिः पुनरावृत्तिरहिताभिर्बहिष्पवमानस्तोत्राधारभूताभिरुपास्मै गायतेत्यादिभिर्नवभिर्ऋग्भिः स्तुवते, तस्मात्पराक्त्वेन यज्ञविघ्नो मा भूदित्यभिमेत्य पुनः सोमसमीपमागत्य यजमानमुपतिष्ठेत । विष्णोर्व्याप्तत्वेन यज्ञस्वरूपत्वाद्वैष्णवमन्त्रेण यज्ञमेव पुनरपि प्रवर्तितवान्भवति ॥

तं मन्त्रं पठित्वा तात्पर्यं दर्शयति—

विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितमित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाऽऽप्याययति ॥, इति ॥

हे विष्णो त्वं नोऽस्माकमन्तमोऽन्तिकतमः प्रत्यासन्नतमः । हे सहन्त्यास्मदपराधं सहिष्णो शर्म सुखमस्मभ्यं यच्छ । ते तव संबन्धिनः सोमरसस्य धारा मधुश्चुतो मधुरं रसं क्षरन्त्य उत्समक्षितमुपक्षयरहितं यथा भवति तथा प्रदुह्रते प्रकर्षेण दुह्रताम् । एतेन मन्त्रपाठेन पूर्वेषु पात्रेषु गृहीतस्यास्य सोमस्य यदेव स्वरूपं चिरावस्थानेनोपशुष्यति तत्सर्वमाप्यायितमेव भवति । सं ते प्राण इत्यस्मिन्ननुवाके सं यज्ञपतिराशिषेति मन्त्रेण पशोः श्रोण्यामञ्जनं विहितम् । घृतेनाक्ताविति मन्त्रेण पशोः शिरस्यञ्जनं विहितं, तयोरुभयोर्मध्य ऋत्विजो वृणीत इति वरणस्य विहितत्वाज्जुष्टो वाच इत्यादिकौ प्रवृतहो-

१ क. °तिष्ठते । तद्विष्णो° । २ क. ङ. °तं प्रस्नं य° । घ. °तं प्रस्नवं य° ।

( कासांचित्पुरोनुवाक्यानामभिधानम् )

मन्त्रौ तयोरञ्जनमन्त्रयोर्मध्ये द्रष्टव्यौ। ऋतुग्रहग्रहणात्पूर्वं बहिष्पवमानस्यानुष्ठेयत्वात्तदङ्गमन्त्राणां यस्ते द्रप्स इत्यादीनां मधुश्च माधवश्चेत्येतस्मादनुवाकात्प्राचीनं स्थानं द्रष्टव्यम् ॥

अत्र विनियोगसंग्रहः—

जुष्टो द्वे प्रवतो योऽसौ जुहुयात्प्रहृताहुती।
यस्त्रिभिर्वैप्रुषो होमो वागध्वर्युर्ब्रवीति हि ॥
विष्णो सोमं स्पृशेदत्र मन्त्राः सप्त प्रकीर्तिताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

अग्निना रयिमश्नवत्पोषमेव दिवेदिवे। यशसं वीरवत्तमम्। गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावाꣳ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान्। आ प्यायस्व सं ते। इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये। अस्माकमस्तु केवलः। तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व। यतो वीरः ( १ ) कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः। शिवस्त्वष्टरिहाऽऽगहि विभुः पोष उत त्मना। यज्ञेयज्ञे न उदव। पिशङ्गरूपः सुभरो वयोधाः

श्रुष्टी वीरो जायते देवकामः । प्रजां त्वष्टा वि ष्यंतु नाभिमस्मे अथा देवानामप्येतु पाथः । प्र णो देव्या नो दिवः । पीपिवांसꣳ सरस्वतः स्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषम् (२) । ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे । यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम । दिव्यꣳ सुपर्णं वयसं बृहन्तमपां गर्भं वृषभमोषधीनाम् । अभीपतो वृष्ट्या तर्पयन्तं तꣳ सरस्वन्तमवसे हुवेम । सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यम् ( ३ ) आहुतं प्रजां देवि दिदिड्ढि नः । या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन । इन्द्रं वो विश्वतस्परीन्द्रं नरः । असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्ति । त आऽववृत्रन्त्सदनानि कृत्वाऽऽदित्पृथिवी घृतैर्व्युद्यते । हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् । शुचिभ्राजा उषसः ( ४ ) नवेदा यशस्वतीर-

( कासांचित्पुरोनुवाक्यानामभिधानम् )

पस्युवो न सत्याः । आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् । शिवाभिर्न स्मयमानाभिराऽगात्पतन्ति मिहः स्तनयन्त्यभ्रा । वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि । पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः । यत्क्रीडथ मरुतः ( ५ ) ऋष्टिमन्त आप इव सध्रियञ्चो धवध्वे । अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन । दृतिꣳ सु कर्ष विषितं न्यञ्चꣳ समा भवन्तूद्वता निपादाः । त्वं त्या चिदच्युताग्ने पशुर्न यवसे । धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः । अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम । याश्च ( ६ ) माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो । दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः । पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः । अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तन-

यन्तमक्षितम् । उदप्रुतो मरुतस्ताꣳ इयर्त वृष्टिम्
(७)ये विश्वे मरुतो जुनन्ति । क्रोशाति गर्दा क-
न्येव तुन्ना पेरुं तुञ्जाना पत्येव जाया । घृतेन
द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणु-
ताऽऽप ओषधीः । ऊर्जं च तत्र सुमतिं च
पिन्वथ यत्रा नरो मरुतः सिञ्चथा मधु । उदु
त्यं चित्रम् । और्वभृगुवच्छुचिमप्रवानवदा हुवे ।
अग्निꣳ समुद्रवाससम् । आ सवꣳ सवितुर्यथा
भगस्येव भुजिꣳ हुवे । अग्निꣳ समुद्रवाससम् ।
हुवे वातस्वनं कविं पर्जन्यक्रन्द्यꣳ सहः । अ-
ग्निꣳ समुद्रवाससम् ( ८ ) ॥

( वीर इषꣳ हव्यमुषसो मरुतश्च वृष्टिं भगस्य द्वादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

प्रजापतिरेष ते गायत्रो यज्ञं वै प्रजापतेः प्राजापत्या यो वा अयथादे-
वत्तमिष्टर्गो निग्राभ्याः स्थ यो वै देवाजुष्टोऽग्निना रयिमेकादश ॥ ११ ॥

प्रजापतिरकामयत प्रजापतेर्जायमाना व्यायच्छन्ते महामिमान्माया मा-
यिना द्विचत्वारिꣳशत् ॥ ४२ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
प्रथमः प्रपाठकः ॥ १ ॥

---

( कासांचित्पुरोनुवाक्यानामभिधानम् )
( अथ तृतीयाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः । )

---

अग्निना । रयिम् । अश्नवत् । पोषम् । एव । दिवेदिव इति दिवे—दिवे । यशसम् । वीरवत्तममिति वीरवत्—तमम् । गोमानिति गो—मान् । अग्ने । अविमानित्यवि—मान् । अश्वी । यज्ञः । नृवत्सखेति नृवत्—सखा । सदम् । इत् । अप्रमृष्य इत्यप्र—मृष्यः । इडावानितीडा—वान् । एषः । असुर । प्रजावानिति प्रजा—वान् । दीर्घः । रयिः । पृथुबुध्न इति पृथु—बुध्नः । सभावानिति सभा—वान् । एति । प्यायस्व । समिति । ते । इह । त्वष्टारम् । अग्रियम् । विश्वरूपमिति विश्व—रूपम् । उपेति । ह्वये । अस्माकम् । अस्तु । केवलः । तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वीति । रराणः । स्यस्व । यतः । वीरः (१)। कर्मण्यः । सुदक्ष इति सु—दक्षः । युक्तग्रावेति युक्त—ग्रावा । जायते । देवकाम इति देव—कामः । शिवः । त्वष्टः । इह । एति । गहि । विभुरिति वि—भुः । पोषे । उत । त्मना । यज्ञेयज्ञ इति यज्ञे—यज्ञे । नः । उदिति । अव । पिशङ्गरूप इति पिशङ्ग—रूपः । सुभर इति सु—भरः । वयोधा इति वयः—धाः । श्रुष्टी । वीरः ।

जायते । देवकाम इति देव—कामः । प्रजामिति प्र—जाम् । त्वष्टा । वीति । स्यतु । नाभिम् । अस्मे इति । अथ । देवानाम् । अपीति । एतु । पाथः । प्रेति । नः । देवी । एति । नः । दिवः । पीपिवांसम् । सरस्वतः । स्तनम् । यः । विश्वदर्शत इति विश्व—दर्शतः । धुक्षीमहि । प्रजामिति प्र—जाम् । इषम् ( २ ) । ये । ते । सरस्वः । ऊर्मयः । मधुमन्त इति मधु—मन्तः । घृतश्चुत इति घृत—श्चुतः । तेषाम् । ते । सुम्नम् । ईमहे । यस्य । व्रतम् । पशवः । यन्ति । सर्वे । यस्य । व्रतम् । उपतिष्ठन्त इत्युप—तिष्ठन्ते । आपः । यस्य । व्रते । पुष्टिपतिरिति पुष्टि—पतिः । निविष्ट इति नि—विष्टः । तम् । सरस्वन्तम् । अवसे । हुवेम । दिव्यम् । सुपर्णमिति सु—पर्णम् । वयसम् । बृहन्तम् । अपाम् । गर्भम् । वृषभम् । ओषधीनाम् । अभीपतः । वृष्ट्या । तर्पयन्तम् । तम् । सरस्वन्तम् । अवसे । हुवेम । सिनीवालि । पृथुष्टुक इति पृथु—स्तुके । या । देवानाम् । असि । स्वसा । जुषस्व । हव्यम् ( ३ ) । आहुतमित्या—हुतम् । प्रजामिति प्र—जाम् । देवि । दिदिड्ढि । नः । या । सुपाणिरिति सु—पाणिः ।

( कासांचित्पुरोनुवाक्यानामभिधानम् )

स्वङ्गुरिरिति सु—अङ्गुरिः । सुषूमेति सु—सूमा ।
बहुसूवरीति बहु—सूवरी । तस्यै । विश्पत्नियै ।
हविः । सिनीवाल्यै । जुहोतन । इन्द्रम् । वः ।
विश्वतः । परीति । इन्द्रम् । नरः । असितवर्णा
इत्यसित—वर्णाः । हरयः । सुपर्णा इति सु—पर्णाः ।
मिहः । वसानाः । दिवम् । उदिति । पतन्ति । ते ।
एति । अववृत्रन् । सदनानि । कृत्वा । आत् । इत् ।
पृथिवी । घृतैः । वीति । उद्यते । हिरण्यकेश इति
हिरण्य—केशः । रजसः । विसार इति वि—सारे ।
अहिः । धुनिः । वातः । इव । ध्रजीमान् । शुचि-
भ्राजा इति शुचि—भ्राजाः । उषसः (४) । नवेदाः ।
यशस्वतीः । अपस्युवः । न । सत्याः । एति । ते ।
सुपर्णा इति सु—पर्णाः । अमिनन्त । एवैः । कृष्णः ।
नोनाव । वृषभः । यदि । इदम् । शिवाभिः । न ।
स्मयमानाभिः । एति । अगात् । पतन्ति । मिहः ।
स्तनयन्ति । अभ्रा । वाश्रा । इव । विद्युदिति वि—
द्युत् । मिमाति । वत्सम् । न । माता । सिषक्ति ।
यत् । एषाम् । वृष्टिः । असर्जि । पर्वतः ।
चित् । महि । वृद्धः । बिभाय । दिवः ।
चित् । सानु । रेजत । स्वने । वः । यत् ।

क्रीडथ । मरुतः ( ५ ) । ऋष्टिमन्त इत्यृष्टि—मन्तः । आपः । इव । सध्रियञ्चः । धवध्वे । अभीति । क्रन्द । स्तनय । गर्भम् । एति । धाः । उदन्वतेत्युदन्—वता । परीति । दीय । रथेन । दृतिम् । स्विति । कर्ष । विषितमिति वि—सितम् । न्यञ्चम् । समाः । भवन्तु । उद्वतेत्युत्—वता । निपादा इति नि—पादाः । त्वम् । त्या । चित् । अच्युता । अग्ने । पशुः । न । यवसे । धाम । ह । यत् । ते । अजर । वना । वृश्चन्ति । शिक्वसः । अग्ने । भूरीणि । तव । जातवेद इति जात—वेदः । देव । स्वधाव इति स्वधा—वः । अमृतस्य । धाम । याः । च ( ६ )। मायाः । मायिनाम् । विश्वमिन्वेति विश्वम्—इन्व । त्वे इति । पूर्वीः । संदधुरिति सं—दधुः । पृष्टबन्धो इति पृष्ट—बन्धो । दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्रेति । पिन्वत । वृष्णः । अश्वस्य । धाराः । अर्वाङ् । एतेन । स्तनयित्नुना । एति । इहि । अपः । निषिञ्चन्निति नि—सिञ्चन् । असुरः । पिता । नः । पिन्वन्ति । अपः । मरुतः । सुदानव इति सु—दानवः । पयः । घृतवदिति घृत—वत् । विदथेषु । आभुव इत्या—भुवः । अत्यम् । न । मिहे ।

( कासांचित्पुरोनुवाक्यानामभिधानम् )

वीतिं। नयन्ति। वाजिनम्। उत्सम्। दुहन्ति। स्तनयन्तम्। अक्षितम्। उदप्रुत इत्युद-प्रुतः। मरुतः। तान्। इयर्त। वृष्टिम् (७)। ये। विश्वे। मरुतः। जुनन्ति। क्रोशाति। गर्दा। कन्या। इव। तुन्ना। पेरुम्। तुञ्जाना। पत्या। इव। जाया। घृतेन। द्यावापृथिवी इति द्यावा-पृथिवी। मधुना। समिति। उक्षत। पयस्वतीः। कृणुत। आपः। ओषधीः। ऊर्जम्। च। तत्र। सुमतिमिति सु-मतिम्। च। पिन्वथ। यत्र। नरः। मरुतः। सिञ्चथ। मधु। उदिति। उ। त्यम्। चित्रम्। और्वभृगुवदित्यौर्वभृगु-वत्। शुचिम्। अप्रवानवदित्यप्रवान-वत्। एति। हुवे। अग्निम्। समुद्रवाससमिति समुद्र-वाससम्। एति। सवम्। सवितुः। यथा। भगस्य। इव। भुजिम्। हुवे। अग्निम्। समुद्रवाससमिति समुद्र-वाससम्। हुवे। वातस्वनमिति वात-स्वनम्। कविम्। पर्जन्यक्रन्द्यमिति पर्जन्य-क्रन्द्यम्। सहः। अग्निम्। समुद्रवाससमिति समुद्र-वाससम् (८)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ तृतीयकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः )

---

ये बहिष्पवमानाङ्गमन्त्रास्ते दशमे श्रुताः ।

अथैकादशे काश्चित्पुरोनुवाक्या उच्यन्ते ।

चित्रया यजेत पशुकाम इत्यत्र सप्तैतानि हवीꣳषि भवन्तीति श्रुतम् । तत्र प्रथमस्य हविष आग्नेयस्य पुरोनुवाक्यामाह—

अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसं वीरवत्तमम् । , इति ।

अनेनाग्निना रयिं धनानि अश्नवत्सर्वो जनः प्राप्नोति । न केवलं धनस्य स्वरूपमात्रं किं तु दिवेदिवे तस्य धनस्य पुष्टिमेव प्राप्नोति न तु ह्रासम् । कीदृशं पोषं, यशसं कीर्तिकरं वीरवत्तमं वीरा अस्मदीयाः पुत्रा अस्येति वीरवत्, अतिशयेन तथाविधम् ॥

तत्रैव याज्यामाह—

गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः । इडावाꣳ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् । , इति ।

हेऽग्ने पुनरावर्तनाय प्रार्थ्यमानो यज्ञ एतैर्विशेषणैर्विशिष्टो भूयात् । बहवो गावोऽस्य सन्तीति गोमान् । एवमविमानश्वीति योज्यम् । नृवत्सखा नृभिर्मनुष्यैर्युक्ता देवाः सखायो यस्य यज्ञस्य तादृशः । सदमित्सदैवाप्रमृष्योऽनभिभवनीयः । इडावानन्नवान् । प्रजावान्बहुपत्यप्रदः । दीर्घः पुनः पुनरनुष्ठानादविच्छिन्नः । रयिर्बहुधनोपेतः । पृथुबुध्नो विस्तीर्णमूलो मन्त्रेष्वनुष्ठानेषु च मूलभूतेषु च वैकल्यरहितः । सभावानविकलं यज्ञं द्रष्टुं मिलन्त्या विद्वत्सभया युक्तः । असुः प्राणः सोऽस्यास्तीत्यसुरो हेऽसुर प्राणवन्नग्न एष पुनः पुनः प्रार्थ्यमानो यज्ञ उक्तविशेषणविशिष्टो भूयात् ॥

द्वितीयहविषः सौम्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति—

( कासांचित्पुरोनुवाक्यानामभिधानम् )

आ प्यायस्व सं ते । , इति ।

एतच्चोभयं चतुर्थकाण्डे मा नो हिꣳसीदित्यत्र व्याख्यास्यते ॥

तृतीयहविषस्त्वाष्ट्रस्य पुरोनुवाक्यामाह—

इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।
अस्माकमस्तु केवलः । , इति ।

इहास्मिन्कर्मणि त्वष्टारं देवमुपह्वय आह्वयामि । कीदृशमग्रियं मुख्यं विश्वरूपं विश्वानि रूपाणि गर्भे विकर्तुं[1] योग्यानि यस्यासौ विश्वरूपस्तम् । स च त्वष्टाऽस्माकं केवलोऽस्तु असाधारणत्वेन पालकोऽस्तु ॥

तत्रैव याज्यामाह—

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि
रराणः स्यस्व । यतो वीरः कर्मण्यः
सुदक्षो युक्तग्रावा जायते देवकामः । , इति ।

हे त्वष्टर्देव तद्धनं नोऽस्मभ्यं विशेषेण स्यस्व समर्पय । कीदृशं धनं, तुरीपं तूर्णं प्राप्नोतीति तुरीपम् । अथापि च पोषयित्नु पोषयितृ । त्वं च रराणो दानशीलः । यतो यस्माद्धनादस्माभिर्लब्धाद्वीरः शूरः पुत्रो जायते । कीदृशं तच्छूरत्वमिति तदुच्यते—कर्मण्यो लौकिके वैदिके च कर्माणि कुशलः । सुदक्षः सम्यगुत्साही शीघ्रकारीत्यर्थः । युक्ताः सोमाभिषवार्थं प्रयुक्ता ग्रावाणो यस्यासौ युक्तग्रावा सर्वदा सोमयागस्यानुष्ठातेत्यर्थः । देवकाम ईदृशः सेवकोऽस्माकं भूयादिति देवैः काम्यमानो देवान्वा सेवितुं स्वयं कामयते ॥

तत्रैव हविषि विकल्पितां पुरोनुवाक्यामाह—

शिवस्त्वष्टरिहाऽऽगहि विभुः पोष
उत त्मना । यज्ञेयज्ञे न उदव । , इति ।

हे त्वष्टस्त्वं शिवः सुखकरः सन्निहास्मिन्कर्मण्यागहि आगच्छ । उतापि च पोषेऽस्मदीये पोषविषये त्मना विभुः परनैरपेक्ष्येण[2] स्वयमेव समर्थः । तादृशस्त्वं तस्मिंस्तस्मिन्यज्ञे नोऽस्मानुदवोत्कर्षेण पालय ॥

तत्रैव विकल्पितां याज्यामाह—

पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो

---

१ ख. बिभर्तुं । २ ख. च. °षणवि° ।

जायते देवकामः । प्रजां त्वष्टा वि ष्यतु
नाभिमस्मे अथा देवानामप्येतु पाथः ।, इति।

यस्य त्वष्टुः प्रसादादस्माकं वीरः पुत्रो जायते । कीदृशः पिशङ्गरूपः, त्रिवर्गस्य सेवितेत्यर्थः । सुभरः सुष्ठु पोषकः । वयोधा दीर्घस्य वयसो धारकश्चिरंजीवीत्यर्थः । श्रुष्टी क्षिप्रकारी सत्यवादी वा। देवकाम इति पूर्ववत्। यस्य त्वष्टुः प्रसादादीदृशो वीरो जातस्तादृशस्त्वष्टा नाभिं चक्रस्य नाभिवत्प्रशस्तां प्रजां पुत्रपौत्रादिरूपामस्मे अस्मासु विष्यतु विशेषेण समर्पयतु । अथानन्तरं देवानामपि पाथोऽन्नमेतु * प्राप्नोतु ॥

अथ चतुर्थस्य हविषः सरस्वतीदेवताकस्य याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

प्र णो देव्या नो दिवः । , इति ।

प्र णो देवी सरस्वतीति पुरोनुवाक्या । आ नो दिवो बृहत इति याज्या । एतच्चोभयमग्नाविष्णू महीत्यत्र व्याख्यातम् ॥

पञ्चमस्य हविषः सरस्वद्देवताकस्य पुरोनुवाक्यामाह—

पीपिवाꣳसꣳ सरस्वतः स्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषम् । , इति ।

सरस्वतः सरस्वन्नामकस्य देवस्य यः स्तनो विश्वदर्शतो विश्वविषयकदर्शनोपेतः क्षुधितान्बालानिव पालयितुं जानातीत्यर्थः । तादृशं स्तनं यज्ञलक्षणं पीपिवांसमस्मान्वर्धितवन्तं प्रजां पुत्रादिरूपामिषमन्नं च धुक्षीमहि । यथा गां पयो दुहन्ति तद्वदेतद्देवताकं यागमनुष्ठाय प्रजादिकं प्राप्ताः स्मेत्यर्थः ॥

तत्रैव विकल्पितां पुरोनुवाक्यामाह—

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे । , इति।

हे सरस्वः सरस्वन्समुद्र त्वदीया य ऊर्मयो मधुमन्तो माधुर्ययुक्ता घृतश्चुतो घृतसमानमुदकं क्षारयन्तो वर्तन्ते ते त्वदीयानां तेषामूर्मीणां संबन्धिसुम्नं सुखमीमहे प्राप्नुमः ॥

तत्रैव याज्यामाह—

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुप-

---

* प्रापयतु इति ख. पुस्तके पाठान्तरम्।

(कासांचित्पुरोनुवाक्यानामभिधानम्)

तिष्ठन्त आपः। यस्य व्रते पुष्टिपति-
र्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम।, इति।

यस्य सरस्वतः संबन्धि व्रतं कर्म पशवो यन्ति द्विपादश्चतुष्पादश्च सर्वे पशवः प्राप्नुवन्ति। एतदीयेन कर्मणा पशवो लभ्यन्त इत्यर्थः। तथा वृष्टिरूपा आपो यस्य व्रतमुपतिष्ठन्ते सेवन्ते। अग्नौ प्रास्ताऽऽहुतिरिति न्यायेन वृष्टेरेतत्कर्मसाध्यत्वात्पुष्टिपतिर्धनपोषकस्य पालको यजमानो यस्य व्रते निविष्टस्तदीयेन व्रतेन धनपुष्टेः सुलभत्वात्तादृशं सरस्वन्तं देवमस्माकं रक्षणाय हुवेम ह्वयेम॥

तत्रैव विकल्पितां याज्यामाह—

दिव्यꣳ सुपर्णं वयसं बृहन्तमपां गर्भं
वृषभमोषधीनाम्। अभीपतो वृष्ट्या
तर्पयन्तं तꣳ सरस्वन्तमवसे हुवेम।, इति।

अत्र चतुर्थः पादः पूर्ववत्। कीदृशं सरस्वन्तम्। दिवमर्हतीति दिव्यं, सुपर्णं शोभनाभ्यां पक्षाभ्यामुपेतम्। यदा पक्षिरूपं धृत्वा दिवि गच्छति तदानीमेतौ पक्षौ द्रष्टव्यौ। वयसं पक्षिरूपिणं, बृहन्तं महान्तम्। अपां वृषभं जलानां वर्षितारम्। ओषधीनां गर्भं व्रीह्यादिमञ्जरीरूपम्। अभीपतो वृष्ट्या तर्पयन्तं वृष्टिरूपेणाभितः पतनात्सर्वेषां तृप्तिहेतुं वायुना नीयमानैर्जलबिन्दुभिः पक्षसदृशैः पक्षिवद्दिवि मेघेषु गत्वा जलबाहुल्यं प्राप्य स्वयमेवापां वर्षिता भूत्वौषधीषु व्रीह्यादिरूपेण गर्भो[1] भवति। पुनश्च वृष्टिरूपेण सर्वतः पतन्सर्वं जगत्तर्पयतीत्यर्थः। तादृशं सरस्वन्तमाह्वयामेत्यर्थः[2]॥

अथ षष्ठस्य हविषः सिनीवालीदेवताकस्य पुरोनुवाक्यामाह—

सिनीवालि पृथुष्टुके या देवानामसि
स्वसा। जुषस्व हव्यमाहुतं
प्रजां देवि दिदिड्ढि नः।, इति।

अमावास्या सिनीवालीति श्रुतत्वादमावास्यातिथ्यभिमानिनी देवता सिनीवाली। हे सिनीवालि या त्वं देवानां स्वसाऽसि भगिनीवद्धितकारिण्यसि दर्शेष्टिसाधनत्वात्। स्तुकं स्तोत्रं, पृथु स्तुकं स्तोत्रं यस्याः सा पृथुष्टुका। तस्याः संबोधनं हे पृथुष्टुके। अनेन सिनीवाली विशेष्यते। तादृशी त्वमा-

---

१ ख. च. गर्भो। २ ख. च. °त्यन्वयः। अ°।

हुतमस्माभिः समन्तात्समर्पितं हविर्जुषस्व। हे देवि नोऽस्मभ्यं प्रजां दिदिड्ढि उपचिनु प्रभूतां कुर्वित्यर्थः ॥

तत्रैव याज्यामाह—

या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्नियै हविः सिनीवाल्यै जुहोतन ।, इति ।

शोभनौ पाणी यस्याः सा सुपाणिः। शोभना अङ्गुलयो यस्याः सा स्वङ्गुरिः । सुषूमा सुष्ठु प्रसवित्री । बहुसूवरी बहूनां यज्ञानां सवित्री । ईदृशी या सिनीवाली तस्यै विश्पत्नियै विशां पालयित्र्यै सिनीवाल्यै हविर्जुहोतन हे ऋत्विग्यजमाना जुहुत ॥

ऐन्द्र उत्तमो भवतीति यदिदं सप्तमं हविः श्रुतं तत्र याज्यानुवाक्ययोः प्रतीके दर्शयति—

इन्द्रं वो विश्वतस्परीन्द्रं नरः। , इति ।

एतच्चोभयं प्रथमकाण्डस्य षष्ठप्रपाठके व्याख्यातम् ॥

इत्थं चित्रायागे याज्यानुवाक्या उक्ताः । अथ कारीरीष्ट्युपयुक्ता मन्त्रा उच्यन्ते ।

कल्पः—" अथाऽऽसां धूममनुमन्त्रयतेऽसितवर्णा हरयः सुपर्णा इति " इति । आसां करीरसक्तुपिण्डीनामग्नौ हुतानामित्यर्थः ॥

पाठस्तु—

असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्ति ।· त आऽववृत्रन्त्सदनानि कृत्वाऽऽदित्पृथिवी घृतैर्व्युद्यते ।, इति ।

अग्निना दह्यमानाभ्यः करीरसक्तुपिण्डीभ्यो ये निर्गता धूमास्ते दिवमुत्पतन्ति । कीदृशा धूमाः । असितवर्णाः कृष्णवर्णा हरयो मेघनिष्पादनाय रसहरणशीलाः सुपर्णाः प्रसारितपक्षसदृशा मेहनान्मिहो मेघास्तद्रूपा भूत्वा वसानाः सूर्यमण्डलादिकमाच्छादयन्तस्ते धूमनिष्पाद्याः स्वोदरेषु जलस्य च सदनानि स्थानानि कृत्वाऽऽववृत्रन्निह कर्षितुमावृत्ताः । आदिदनन्तरमेव पृथिवी घृतैर्घृतवत्क्षरद्भिरुदकैर्व्युद्यते विशेषेण क्लिद्यते ॥

कल्पः—" अथैनमाहवनीयेऽनुप्रहृत्याथास्य धूममनुमन्त्रयते हिरण्यकेशो रजसो विसार इति " इति । एनं पुनर्नवायाः स्तम्बम् ।

पाठस्तु—

( कासांचित्पुरोनुवाक्यानामभिधानम् )

हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् । शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ।, इति ।

हिरण्यवर्णा अग्निकेशस्थानीया ज्वाला येन धूमेन सहोत्पद्यन्ते सोऽयं पुनर्नवाजन्यो धूमो हिरण्यकेशः । रजसो मेघरूपस्य रञ्जनस्य विसारे प्रसारणे निमित्तभूते सति अंहति गच्छतीत्यहिर्मेघरूपमाकाशस्य रञ्जनं प्रसारयितुं गच्छतीत्यर्थः । वात इव धुनिर्ध्रजीमान् । यथा वायुः कम्पमानः शीघ्रगतियुक्तस्तद्वदयमित्यर्थः । मेघात्मा शुचिभ्राजा निर्मलदीप्तिर्मेघरूपेण परिणतोऽपि धूमो विद्युद्रूपया दीप्त्या युक्त इत्यर्थः। सोऽयमीदृशो धूमोऽस्मदर्थं वृष्टिमुत्पादयत्विति शेषः। उषसः प्रभातकालस्य नवेदा मेघैः प्रकाशस्याऽऽवृतत्वे न विद्यते न ज्ञायतेऽनेनेति नवेदाः। सूर्योदयो यथा न ज्ञायते तथा मेघसमृद्धिरस्त्वित्यर्थः। यास्तु सस्यनिष्पादिका भूमयस्ताः सस्यनिष्पादनेन यशस्वतीः कीर्तिमत्यो भवन्तु । अपस्युवो न, अप उदकान्यात्मन इच्छन्तीत्यपस्युवः । तथाविधा इव वर्तन्ते । ताश्च भूमयः सत्या अमोघारम्भाः सुक्षेत्रा इत्यर्थः । एतासामनुग्रहाय पुनर्नवाधूमो वृष्टिं जनयत्विति शेषः ॥

अस्मिन्नेव धूमाभिमन्त्रणे तिस्र ऋचो विकल्पन्ते । तत्र प्रथमा—

आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् । शिवाभिर्न स्मयमानाभिराऽगात्पतन्ति मिहः स्तनयन्त्यभ्रा । , इति ।

हे पुनर्नवे ते तव संबन्धिनो धूमाः सुपर्णाः पक्षिवदुत्पतनशीला एवैरामिनन्त पुनर्गमनैः समन्तादुदकं प्रक्षिप्तवन्तः । ततो मेघः कृष्णो नीलवर्णो वृषभो वर्षिता भूत्वा नोनाव पुनः पुनर्गर्जनमकरोत् । यदि यदा यस्मिन्काल इदं सर्वं प्रवर्तते तदा शिवाभिर्न सानुग्रहाभिरिव स्मयमानाभिर्हसन्तीभिरिव वृष्टिभिर्युक्तो मिहो मेघ आगादागच्छति । तत ऊर्ध्वं पतन्ति वृष्टिधारा इति शेषः । अभ्रा स्तनयन्ति अभ्राणि च गर्जन्ति । ईदृशमहिमोपेतः पुनर्नवाधूम इत्यर्थः ॥

अथ द्वितीया—

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ।, इति ।

उपरितनमन्त्रे मरुत इति पदं प्रयुज्यते, त एव मरुतोऽत्रेदंशब्देन परामृश्यन्ते । एषां मरुतां संबन्धिनी वृष्टिर्यदसर्जि यदा सृष्टा भवति तदा गर्जनसहिता विद्युन्मरुतः प्रति वाश्रेव वाश्यमानेव शब्दं कुर्वतीव मिमाति मीयते प्रतिभातीत्यर्थः । सिषक्ति सज्यते मरुद्भिः संबध्यत इत्यर्थः । तत्र दृष्टान्तः— वत्सं न मातेति । माता वत्समिव यथा प्रस्रवन्ती गौर्वत्सं प्रति हम्भारवं कुर्वाणा मनुष्यैरवलोक्यते तेन वत्सेन संबध्यते तद्वदियं विद्युदित्यर्थः ॥

अथ तृतीया—

पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु
रेजत स्वने वः । यत्क्रीडथ मरुत ऋष्टि-
मन्त आप इव सध्रियञ्चो धवध्वे ।, इति ।

हे मरुत ऋष्टिमन्तो वज्रायुधवन्तो यूयं यदा क्रीडां कुरुथ तदानीं वः स्वने युष्माकं गर्जने सति पर्वतश्चिद्बिभाय पर्वतोऽपि बिभेति । कीदृशः पर्वतः। महि वृद्धस्तिर्यक्प्रमाणेनात्यन्तं महानूर्ध्वप्रमाणेन वृद्धः । किंच दिवश्चित्, उन्नतत्वेन दिवोऽप्युपरि वर्तमानः । सानु रेजत भवतां गर्जने सति प्रौढोऽपि पर्वतसानुः कम्पते । किं च यूयमाप इव सध्रियञ्चो धवध्वे व्यापका इव सन्तः क्रीडन्तश्च धावध्वम् । ईदृशैर्मरुद्भिर्युक्तोऽयं पुनर्नवाधूमो वृष्टिमुत्पादयत्विति मन्त्रयोस्तात्पर्यार्थः ॥

कल्पः—"कृष्णोऽश्वः पुरस्तात्प्रत्यङ्मुखोऽवस्थितो भवति तमेतेन वाससाऽभिपिनष्ट्यभिक्रन्देति" इति ।

यथाऽयमश्व उपद्रवं सोढुमसहमानः क्रन्दति तथा कृष्णवस्त्रेण तस्य शरीरं घर्षयेत् ।

पाठस्तु—

अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि
दीया रथेन । दृतिꣳ सु कर्ष विषितं
न्यञ्चꣳ समा भवन्तूद्वता निपादाः ।, इति ।

हेऽश्वाभिक्रन्द सर्वतः शब्दं कुरु । स्तनय मेघगर्जितमिवोच्चध्वनिं कुरु । गर्भमाधा मेघस्योदरे जलरूपं गर्भमाधेहि । किं च, उदन्वतोदकवता रथेन रथसदृशेन मेघेन सह परिदीय सर्वतो गच्छ । विषितं विमुक्तद्वारं न्यञ्चमवाकृतं दृतिं चर्ममयजलाधारसदृशं मेघं सुकर्ष सुखेनाऽऽकृष्टं, कुरु । न्यग्भावेन

पद्यन्त इति निपादा निम्नदेशास्ते चोदकपूर्णाः सन्त उद्वतोन्नतेन स्थलेन समा भवन्तु ॥

अथाग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमित्येतेषां हविषां क्रमेण याज्यानुवाक्या उच्यन्ते। तथा च बौधायनः—"तस्या एते भवन्ति त्वं त्या चिदच्युताग्ने भूरीणि तव जातवेदो दिवो नो वृष्टिं मरुतो ररीध्वं पिन्वन्त्यपो मरुतः सुदानव उदु त्यं चित्रमिति"इति।

तत्राऽऽग्नेयस्य हविषः पुरोनुवाक्यामाह—

त्वं त्या चिदच्युताग्ने पशुर्न यवसे। धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः।, इति।

हेऽजर विनाशरहिताग्ने यद्वनानि यान्युदकानि ते धामा ह त्वदीयं स्थानं शिक्वसोऽर्चींषि च वृश्चन्ति विनाशयन्त्येव। त्वं तु त्याचित्तान्यप्युदकान्यच्युतानि विनाशरहितानि कुर्विति शेषः। तत्र दृष्टान्तः—पशुर्न यवसे तृणे भक्षिते सति पशुरिव। यथा गवादिकः पशुस्तृणं भक्षयित्वा क्षीरमच्युतं करोति तद्वदित्यर्थः ॥

तत्रैव याज्यामाह—

अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम। याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो।, इति।

हेऽग्नेऽमृतस्य मरणरहितस्य तव धाम भूरीणि स्थानानि बहूनि जातवेदो देव स्वधाव इति त्रीणि संबुद्ध्यन्तान्यग्निविशेषणानि। जातं जगद्वेत्तीति जातवेदाः। द्योतनशीलो देवः। स्वधाशब्दोऽन्नवाची तदस्यास्तीति स्वधावान्। किं च, मायिनां लोके मायायुक्तानामैन्द्रजालिकाशयानां या मायाः सन्ति ताः संदधुस्त्वे त्वयि सम्यक्स्थापितवन्तः। पूर्वीरिति मायाविशेषणम्। पुरातन्योऽनादिसंप्रदायपरम्परागता इत्यर्थः। विश्वमिन्व पृष्टबन्धो, इति द्वयं संबुद्ध्यन्तमग्निविशेषणम्। विश्वमिन्वति प्रीणयतीति विश्वमिन्वः। पृष्टश्चासौ बन्धुश्चेति पृष्टबन्धुः। तव महिमा कीदृश इति जिज्ञासया यः पृच्छति तस्य बन्धुरिव स्नेहं करोतीत्यर्थः। नवसस्यहेतूनामुपायानां त्वयि विद्यमानत्वादैन्द्रजालिकवदकस्मादेव प्रौढां वृष्टिं संपादयेति तात्पर्यार्थः ॥

द्वितीयस्य हविषः पुरोनुवाक्यामाह—

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः । , इति ।

हे मरुतो नोऽस्मदर्थं दिवः सकाशाद्वृष्टिं ररीध्वं स्रावयत । ततश्चाश्वस्याश्नुवानस्य व्याप्तिमतो वृष्णो वर्षयितुरिन्द्रस्य संबन्धिनीर्धाराः प्रपिन्वतोदकधाराः सिञ्चत । हे वृषंस्त( स्त्व )मेतेन स्तनयित्नुना गर्जनवता मेघेन सहार्वाङेहि अम्बरादभिमुखमागच्छ । किं कुर्वन् । अपो नितरां सिञ्चन् । कीदृशस्त्वम् । असून्प्राणान्राति ददातीत्यसुरः । नोऽस्माकं पिता पालकः ॥

तत्रैव याज्यामाह—

पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः । अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् ।, इति ।

सुदानवः सुष्ठु जलदानपरा मरुतोऽपः पिन्वन्ति सिञ्चन्ति । तत्र दृष्टान्तः— पयो घृतवद्विदथेष्वाभुव इति । पयोवदिति वतिप्रत्ययोऽध्याहर्तव्यः । आभवन्ति यज्ञभूमीरागच्छन्तीत्याभुव ऋत्विग्यजमानास्ते यथा विदथेषु यज्ञेषु पयो घृतं च सिञ्चन्ति तद्वत् । अत्यशब्दोऽश्ववाची । तथा चाश्वमेधकाण्डे मन्त्र आम्नायते—" अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसि " इति । निर्वचनं तद्ब्राह्मणे पठ्यते—" अत्योऽसीत्याह । तस्मादश्वः सर्वान्पशूनत्येति " इति । वाजिशब्दो वेगवन्तं मेघमाचष्टे । अत्यं नाश्वमिव मिहे सेचनार्थं वाजिनं विनयन्ति, यथाऽश्वशिक्षका अश्वं शिक्षयन्ति एवं मरुतो वर्षार्थं मेघं विधेयी कुर्वन्तीत्यर्थः । विधेयीकृत्य चाक्षितमुपक्षयरहितं स्तनयन्तं गर्जन्तं मेघमुत्सं दुहन्ति निरन्तरजलप्रस्रवणं यथा भवति तथा वर्षयन्ति ॥

तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह—

उदप्रुतो मरुतस्ताँ इयर्त वृष्टिं ये विश्वे मरुतो जुनन्ति । क्रोशाति गर्दा कन्येव तुन्ना पेरुं तुञ्जाना पत्येव जाया । , इति ।

उदप्रुत उदकदातॄंस्तान्मरुत इयर्त प्राप्नुत प्रार्थयत हे ऋत्विग्यजमानाः । तान्कान् । ये विश्वेऽपि मरुतो वृष्टिं जुनन्ति प्रयच्छन्ति । प्रार्थनायां दृष्टान्तः—

१ ख. 'श्वे मं' ।

गर्दा बुभुक्षिता कन्या तुन्ना पीडिता सती यथा क्रोशात्याक्रोशति। यथा मातापितरौ प्रत्याक्रोशति रोदिति तथैते यजमानादयो वृष्टिं वचसा प्रार्थयन्त इत्यर्थः। मरुतामनुग्रहे दृष्टान्तः—पेरुं तुञ्जाना पत्येव जायेति। पेरुं पानादिकामां कन्यां तुञ्जानाऽऽभाषमाणा माऽभिरोदीः किं तेऽभिलषितमिति वदन्ती पत्या सह जायेव। यथा मातापितरौ कन्यामनुगृह्णीतस्तथा मरुत ऋत्विग्यजमानाननुगृह्णन्तीत्यर्थः॥

तत्रैव विकल्पितामन्यां याज्यामाह—

घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः
कृणुताऽऽप ओषधीः। ऊर्जं च तत्र सुमतिं च
पिन्वथ यत्रा नरो मरुतः सिञ्चथा मधु।, इति।

हे मरुतो घृतेन घृतसदृशेन मधुना मधुरेण जलेन द्यावापृथिवी लोकद्वयं समुक्षत, या आपो भूमावुक्षितास्ताभिरोषधीः पयस्वतीः सारवतीः कृणुत कुरुत। हे नरो जलस्य नेतारो मरुतो यत्र देशे मधु मधुरमुदकं सिञ्चथ तत्र देश ऊर्जं सारोपेतमन्नं सुमतिं शोभनबुद्धियुक्तां प्रजां च पिन्वथ सिञ्चथ संपादयतेत्यर्थः॥

अथ तृतीयस्य हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

उदु त्यं चित्रम्।, इति।

उदु त्यं जातवेदसमिति पुरोनुवाक्या। चित्रं देवानामिति याज्या। एतच्चोभयं प्रथमकाण्डस्य चतुर्थप्रपाठके व्याख्यातम्॥

कल्पः—पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यौर्वभृगुवच्छुचिमप्नवानवदाहुव इति तिस्रः" इति।

तत्र प्रथमामाह—

और्वभृगुवच्छुचिमप्नवानवदा हुवे।
अग्निꣳ समुद्रवाससम्।, इति।

और्वादय ऋषयस्तद्वच्छुचिं समुद्रे वसन्तमग्निमुद्दिश्य जुहोमीत्यर्थः॥

द्वितीयामाह—

आ सवꣳ सवितुर्यथा भगस्येव भुजिꣳ
हुवे। अग्निꣳ समुद्रवाससम्।, इति।

सवितुः प्रसवमिव भगस्य भोगमिव । अग्निमित्यादि पूर्ववत् ।

तृतीयामाह—

हुवे वातस्वनं कविं पर्जन्यक्रन्द्यꣳ
सहः । अग्निꣳ समुद्रवाससम् ॥, इति ॥

वातवत्स्वनो ज्वालाध्वनिर्यस्य तं वातस्वनम् । कविं विद्वांसम् । सर्वैर्मनुष्यैः पर्जन्यवत्क्रन्दनीयमपेक्षणीयम् । सहो बलवन्तं समुद्रवाससमग्निमुद्दिश्य हुवे जुहोमि ॥

अत्र विनियोगसंग्रहः—

याज्यानुवाक्ये चित्रायां क्रमात्सप्तेष्टिषु स्थिते ।
अग्न्याग्नेयेऽथ सौम्ये स्यादा प्या सं त इति द्वयम् ॥ १ ॥
इह त्वाष्ट्रे चतस्रः स्युः प्र ण आ न इति द्वयम् ।
सरस्वत्याः स्त्रियः (याः) पीपि चतस्रः पुंसरस्वतः ॥ २ ॥
सिनीवा द्वे सिनीवाल्या इन्द्रमिन्द्रं तथैन्द्रके ।
कारीर्यामसितेत्युक्तं पिण्डीधूमस्य मन्त्रणम् ॥ ३ ॥
विकल्पाद्भिरचत्वारो वर्षाद्दा धूममन्त्रणे ।
अभ्यश्वं कृष्णवस्त्रेण पिनष्टि क्रन्दनाय हि ॥ ४ ॥
त्वं धामच्छदि याज्याः स्युर्दिवो मारुतयागके ।
वैकल्पिकं तत्र युग्ममुदु चित्रं च सौर्यके ।
औवंत्रयाच्चोपहोमाः पञ्चत्रिंशदिहोदिताः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ तृतीयाष्टके द्वितीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

यो वै पव॑मानाना॒मन्वा॒रो॒हान्वि॒द्वान्यज॑ते॒ऽनु॒ पव॑माना॒ना रो॑हति॒ न पव॑माने॒भ्योऽव॑ च्छिद्यते श्ये॒नो॑ऽसि गाय॒त्रछ॑न्दा॒ अनु॒ त्वाऽऽ र॑भे स्व॒स्ति मा॒ सं पा॑रय सु॒प॒र्णो॑ऽसि त्रि॒ष्टुप्छ॑न्दा॒ अनु॒ त्वाऽऽ र॑भे स्व॒स्ति मा॒ सं पा॑रय स॒घा॑ऽसि॒ जग॑तीछन्दा॒ अनु॒ त्वाऽऽ र॑भे स्व॒स्ति मा॒ सं पा॑रयेत्या॑है॒ते ( १ ) वै पव॑मानाना॒मन्वा॒रो॒हा॒स्ताान्य ए॒वं वि॒द्वान्यज॑ते॒ऽनु॒ पव॑माना॒ना रो॑हति॒ न पव॑माने॒भ्योऽव॑ च्छिद्यते॒ यो वै पव॑मानस्य॒ संत॑तिं॒ वेद॒ सर्व॒मायु॑रेति॒ न पु॒राऽऽयु॑षः॒ प्र मी॑यते पशु॒मान्भ॑वति वि॒न्दते॑ प्र॒जां पव॑मानस्य॒ ग्रहा॑ गृह्य॒न्तेऽथ॒ वा अ॑स्यै॒तेऽगृ॑हीता द्रोणक॒लश॒ आ॑धव॒नीयः॑ पूत॒भृत्तान्यद॑गृ॑हीत्वोपाकु॒र्यात्पव॑मानं॒ वि ( २ ) छि॑न्द्या॒त्तं वि॒च्छिद्य॑मानमध्व॒र्योः प्रा॒णोऽनु॒ वि च्छि॑द्येतोपया॒मगृ॑हीतोऽसि प्र॒जाप॑तये॒ त्वेति॑ द्रोणक॒लश॑म॒भि मृ॑शे॒दिन्द्रा॑य॒ त्वेत्या॑धव॒नीयं॒ विश्वे॑भ्यस्त्वा दे॒वेभ्य॒

इति पूतभृतं पवमानमेव तत्सं तनोति सर्वमायुरेति न पुराऽऽयुषः प्र मीयते पशुमान्भवति विन्दते प्रजाम् (३)

(एते वि द्विचत्वारिंशच्च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ तृतीयाष्टके द्वितीयः प्रपाठकः।)

(तत्र प्रथमोऽनुवाकः।)

---

हरिः ॐ।

यः। वै। पवमानानाम्। अन्वारोहानित्यनु—आरोहान्। विद्वान्। यजते। अन्विति। पवमानान्। एति। रोहति। न। पवमानेभ्यः। अवेति। छिद्यते। श्येनः। असि। गायत्रछन्दा इति गायत्र—छन्दाः। अन्विति। त्वा। एति। रभे। स्वस्ति। मा। समिति। पारय। सुपर्ण इति सु—पर्णः। असि। त्रिष्टुप्छन्दा इति त्रिष्टुप्—छन्दाः। अन्विति। त्वा। एति। रभे। स्वस्ति। मा। समिति। पारय। सघा। असि। जगतीछन्दा इति जगती—छन्दाः। अन्विति। त्वा। एति। रभे। स्वस्ति। मा। समिति। पारय। इति। आह। एते (१)। वै। पवमानानाम्। अन्वारोहा इत्यनु—आरोहाः। तान्।

यः। एवम्। विद्वान्। यजते। अन्विति। पवमानान्। एति। रोहति। न। पवमानेभ्यः। अवेति। छिद्यते। यः। वै। पवमानस्य। संततिमिति सं—ततिम्। वेद। सर्वम्। आयुः। एति। न। पुरा। आयुषः। प्रेति। मीयते। पशुमानिति पशु—मान्। भवति। विन्दते। प्रजामिति प्र—जाम्। पवमानस्य। ग्रहाः। गृह्यन्ते। अथ। वै। अस्य। एते। अगृहीताः। द्रोणकलश इति द्रोण—कलशः। आधवनीय इत्या—धवनीयः। पूतभृदिति पूत—भृत्। तान्। यत्। अगृहीत्वा। उपाकुर्यादित्युप—आकुर्यात्। पवमानम्। वीति (२)। छिन्द्यात्। तम्। विच्छिद्यमानमिति वि—छिद्यमानम्। अध्वर्योः। प्राण इति प्र—अनः। अनु। वीति। छिद्येत। उपयामगृहीत इत्युपयाम—गृहीतः। असि। प्रजापतय इति प्रजा—पतये। त्वा। इति। द्रोणकलशमिति द्रोण—कलशम्। अभीति। मृशेत्। इन्द्राय। त्वा। इति। आधवनीयमित्या—धवनीयम्। विश्वेभ्यः। त्वा। देवेभ्यः। इति। पूतभृतमिति पूत—भृतम्। पवमानम्। एव। तत्। समिति। तनोति। सर्वम्। आयुः। एति। न। पुरा। आयुषः। प्रेति।

मीयते । पशुमानिति पशु—मान् । भवति । विन्दते ।
प्रजामिति प्र—जाम् ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ तृतीयकाण्डे द्वितीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आद्यप्रपाठके दीक्षां प्रारभ्य प्रकृतौ पुरा ।
यद्बहिष्पवमानान्तं न्यूनं तत्सर्वमीरितम् ॥ २ ॥
प्रतिनिग्राह्यपर्यन्तं पवमानग्रहादिकम् ।
यन्न्यूनं प्रकृतौ तत्तु वर्ण्यतेऽस्मिन्प्रपाठके ॥ ३ ॥

यदुक्तं सूत्रकारेण—"वरव्यै हिं कुरु तस्यै प्रस्तुहि[1] तस्यै स्तुहि[2] तस्यै मेऽवरुद्ध्या इति पुरस्ताद्बहिष्पवमानाद्यजमानो जपति दशहोतारं व्याचष्टे स्तूयमाने च दशहोतारं जपति श्येनोऽसि गायत्रछन्दा इति मध्यमायां च स्तोत्रीयायामन्वारोहं द्वितीये पवमाने द्वितीयेन मन्त्रेण तृतीये तृतीयेन" इति, तमिममन्वारोहजपं विधत्ते—

यो वै पवमानानामन्वारोहान्विद्वान्यजतेऽनु पवमानाना रोहति न पवमानेभ्योऽव च्छिद्यते श्येनोऽसि गायत्रछन्दा अनु त्वाऽऽ रभे स्वस्ति मा सं पारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वाऽऽ रभे स्वस्ति मा सं पारय सघाऽसि जगतीछन्दा अनु त्वाऽऽ रभे स्वस्ति मा सं पारयेत्याहैते वै पवमानानामन्वारोहास्तान्य

१ घ. 'हि मे'। २ ङ. च. 'हि मे'।

( पवमानग्रहत्रयविधिः )

एवं विद्वान्यजतेऽनु पवमानाना रोहति न पवमानेभ्योऽव च्छिद्यते, इति।

बहिष्पवमानो माध्यंदिनः पवमान आर्भवः पवमान इत्येतन्नामकाः पवमानत्रयगताः स्तोत्रविशेषाः सामवेदे समाम्नाताः पवमानास्तान्यो यजमानो मन्त्रैरारोहति न कदाचिदयं पवमानेभ्यो विच्छिन्नो भवति। श्येन इत्यादयो मन्त्राः। हे बहिष्पवमान त्वं श्येनोऽसि श्येनवच्छीघ्रगतिरसि। गायत्रछन्दा गायत्रीछन्दस्कोऽप्यसि। अतस्त्वामन्वारभेऽनुक्रमेणाऽऽरोहामि प्राप्नोमि निर्विघ्नेन मां संपारय सम्यक्पारं नय। तमिमं मन्त्रमुपास्मै गायतेत्यादिषु नवसु स्तोत्रीयासु मध्यमायां पञ्चम्यां स्तोत्रीयायां गीयमानायां जपेत्। सुपर्ण इत्यादिर्द्वितीयो मन्त्रः। हे माध्यंदिन पवमान त्वं सुपर्णोऽसि सुपर्णवदुत्पतितुं समर्थोऽसि। शेषं पूर्ववत्। तमिमं मन्त्रमुच्चा ते जातमन्धस इत्यादिकमाध्यंदिनपवमानस्तोत्रे मध्यमायामृचि गीयमानायां जपेत्। सघेत्यादिस्तृतीयो मन्त्रः। हे आर्भव पवमान त्वं सघाऽसि भासनामकपक्षिवत्पतितुं समर्थोऽसि। शेषं पूर्ववत्। तमिमं मन्त्रं स्वादिष्ठयेत्येतस्मिन्नार्भवपवमानाख्ये स्तोत्रे मध्यमायामृचि गीयमानायां पठे(जपे)त्॥

अथ द्रोणकलशादीनामभिमर्शनं विधातुं प्रस्तौति—

यो वै पवमानस्य संततिं वेद सर्वमायुरेति न पुराऽऽयुषः प्र मीयते पशुमान्भवति विन्दते प्रजां पवमानस्य ग्रहा गृह्यन्तेऽथ वा अस्यैतेऽगृहीता द्रोणकलश आधवनीयः पूतभृत्तान्यदगृहीत्वोपाकुर्यात्पवमानं वि च्छिन्द्यात्तं विच्छिद्यमानमध्वर्योः प्राणोऽनु वि च्छिद्येत, इति।

योऽयं बहिष्पवमानादिशब्दैरभिधीयमानः स्तोत्रविशेषत्रयरूपः पवमानोऽस्ति तस्य संततिमविच्छेदप्रकारं यो यजमानो वेद स यजमानः संपूर्णमायुः प्राप्नोति। जन्मकाले कर्मणा देवैश्च परिकल्पितात्संपूर्णादायुषः पुरा केनाप्यपमृत्युनाऽसौ न म्रियेत प्रजापशुसमृद्धश्चायं भवति। द्रोणकलशादिनामकास्त्रयो ग्रहा इम ऐन्द्रवायवादिग्रहवन्मन्त्रैर्गृह्यन्तामिति। तत्र तावत्पवमानस्य संबन्धिन एते ग्रहाः संततिसिद्ध्यर्थं गृह्यन्तामिति प्राप्तं सोऽयं पक्षो न

---

१ क. 'षरू'।

संभवति। मन्त्रकाण्डे ध्रुवग्रहर्तुग्रहयोर्मध्ये पवमानग्रहार्थानां मन्त्राणामनाम्नातत्वात्षष्ठकाण्डे तद्विध्यभावाच्च। तदेतदुच्यते—अथवा अस्यैतेऽगृहीता द्रोणकलश इत्यादिना। यद्यपि पवमानस्य संबन्धिन एते द्रोणकलशाधवनीयपूतभृतस्तूष्णीं गृहीता एव तथाऽपि मन्त्राभावादगृहीतप्रायास्तेषु चागृहीतेषूपाकरणे पवमानविच्छेदस्तस्मिन्विच्छिन्नेऽध्वर्युप्राणविच्छेदः स्यादिति मन्त्रैस्तानभिमृशेत्। ततश्च नोक्तविच्छेद इत्यर्थः॥

मन्त्रैस्तदभिमर्शनं विधत्ते—

उपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभि मृशेदिन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं पवमानमेव तत्सं तनोति सर्वमायुरेति न पुराऽऽयुषः प्र मीयते पशुमान्भवति विन्दते प्रजाम्॥, इति॥

मन्त्रार्थस्तु हे सोमरस त्वमुपयामेन पार्थिवपात्रेण कलशेन गृहीतोऽसि। इयं वा उपयाम इति श्रुतेः पार्थिवपात्रमुपयामशब्दस्यार्थः। तेन गृहीतं त्वां प्रजापत्यर्थमभिमृशामि। अनेन मन्त्रेण द्रोणकलशमभिमृशेत्। उत्तरयोरपि मन्त्रयोरुपयामगृहीतोऽसीत्यनुषज्यते। तत्राऽऽधवनीयः कलशः पूतभृत्कलशश्चोपयामशब्दस्यार्थः। हे सोमरसोपयामेन मृन्मयेन भाण्डेनाऽऽधवनीयकलशेन त्वं गृहीतोऽसि। अतस्त्वामिन्द्रार्थमभिमृशामि। अनेन मन्त्रेणाऽऽधवनीयमभिमृशेत्। हे सोमरसोपयामेन मृन्मयभाण्डेन पूतभृत्कलशेन गृहीतोऽस्यतस्त्वां विश्वेभ्यो देवेभ्योऽभिमृशामि। अनेन मन्त्रेण पूतभृतमभिमृशेत्। तेन पात्रत्रयाभिमर्शनेन पवमानस्तोत्रं संततं करोति। यद्यप्येषु पात्रेष्वैन्द्रवायवादिवत्समन्त्रकं ग्रहणं नास्ति तथाऽपि रसस्तेष्वस्ति। अत एव सूत्रकार आह—"अभिषुतमध्वर्युरञ्जलिना संसिञ्चति तमुन्नेताऽन्तरेषे णो(चो)द्धृत्योत्तरत आधवनीयेऽवनयति" इति, "उद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनदशं पवित्रं वितन्वन्ति, पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन्होतृचमसेन धारां स्रावयति" इति च, "पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य य आधवनीये राजा तमसर्वं पूतभृत्यवनीय" इति च। तदेवं त्रिषु पात्रेषु सोमरसस्यावस्थितत्वादभिमर्शनमन्त्रेण संस्कृतत्वाच्च केनापि प्रकारेण गृहीता एव पवमानग्रहा भवन्ति। तेन पवमानस्य संततत्वाद्यजमानोऽ-

( सवननिरूपणम् )

प्यायुरादिकं प्राप्नोति । त एते पूर्वोक्ता अन्वारोहमन्त्रा अभिमर्शनमन्त्राश्च मूर्धानं मधुश्चेत्यनयोरनुवाकयोरन्तराले द्रष्टव्याः ॥

अथ विनियोगसंग्रहः—

श्येनस्त्रीन्पवमानेषु त्रिषु मन्त्रान्क्रमाज्जपेत् ।
प्रजेन्द्रा विश्वे मन्त्राः स्युरुपयामादिकास्त्रयः ॥
तैर्द्रोणकलशादीनां स्पर्शो मन्त्रास्तु षण्मताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमव लुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशुꣳ हुत्वोपाꣳशुपात्रेऽꣳशुमवास्य तं तृतीयसवनेऽपिसृज्याभि षुणुयाद्यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषि सर्वाण्येव तत्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोति द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः । तयोः पश्यन्तो अति यन्त्यन्यमपश्यन्तः ( १ ) सेतुनाऽति यन्त्यन्यम् । द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान् । तिरोधायैत्यसितं वसानः शुक्रमा दत्ते अनुहाय जार्यै । देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत

ते देवा एतं महायज्ञमंपश्यन्तमंतन्वताग्निहोत्रं व्रतमंकुर्वत तस्माद्द्विव्रंतः स्याद्द्विर्ह्यग्निहोत्रं जुह्वंति पौर्णमासं यज्ञमंग्नीषोमीयंम् (२) पशुमंकुर्वत दार्शं यज्ञमांग्नेयं पशुमंकुर्वत वैश्वदेवं प्रांतःसवनमंकुर्वत वरुणप्रघासान्माध्यंदिनꣳ सवंनꣳ साकमेधान्पिंतृयज्ञं त्र्यंम्बकाꣳस्तृतीयसवनमंकुर्वत तमेंषामसुंरा यज्ञमन्ववांजिगाꣳसन्तं नान्ववांयन्तेंऽब्रुवन्नध्वर्तव्या वा इमे देवा अंभूवन्निति तदंध्वरस्यांध्वरत्वं ततों देवा अभंवन्पराऽसुंरा य एवं विद्वान्त्सोमेंन यजंते भवंत्यात्मना परांऽस्य भ्रातृंव्यो भवति (३) ॥

(अपंश्यन्तोऽग्नीषोमीयंमात्मना परा त्रीणिं च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ तृतीयाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ।)

---

त्रीणिं । वाव । सवंनानि । अथं । तृतीयंम् । सवंनम् । अवेतिं । लुम्पन्ति । अनꣳशु । कुर्वन्तंः । उपाꣳशुमित्युंप—अꣳशुम् । हुत्वा । उपाꣳशुपात्र इत्युंपाꣳशु—पात्रे । अꣳशुम् । अवास्येत्यंव—अस्यं । तम् । तृतीयसवन इतिं तृतीय—सवने । अपिसृज्ये-

त्यंपि—सृज्यं । अभीतिं । सुनुयात् । यत् । आप्यायय़तीत्यां—प्यायंयति । तेनं । अꣳशुमदित्यंꣳशु—मत् । यत् । अभिषुणोतीत्यंभि—सुनोति । तेनं । ऋजीषि । सर्वाणि । एव । तत् । सवनानि । अꣳशुमन्तीत्यंꣳशु—मन्तिं । शुक्रवन्तीतिं शुक्र—वन्ति । समावंद्वीर्याणीतिं समावंत्—वीर्याणि । करोति । द्वौ । समुद्रौ । वितंताविति वि—ततौ । अजूर्यौ । पर्यावंर्तेते इतिं परि—आवंर्तेते । जठरां । इव । पादाः । तयोः । पश्यंन्तः । अतीतिं । यन्ति । अन्यम् । अपंश्यन्तः ( १ ) । सेतुंना । अतीतिं । यन्ति । अन्यम् । द्वे इतिं । द्रधंसी इतिं । सतती इतिं स—ततीं । वस्ते । एकः । केशी । विश्वां । भुवंनानि । विद्वान् । तिरोधायेतिं तिरः—धायं । एति । असिंतम् । वसानः । शुक्रम् । एतिं । दत्ते । अनुहायेत्यंनु—हायं । जर्यि । देवाः । वै । यत् । यज्ञे । अकुंर्वत । तत् । असुंराः । अकुर्वत । ते । देवाः । एतम् । महायज्ञमितिं महा—यज्ञम् । अपश्यन् । तम् । अतन्वत । अग्निहोत्रमित्यंग्नि—होत्रम् । व्रतम् । अकुर्वत । तस्मात् । द्विव्रंत इति द्वि—व्रतः । स्यात् । द्विः । हि । अग्निहोत्रमित्यंग्नि—होत्रम् ।

जुह्वति । पौर्णमासमिति पौर्ण—मासम् । यज्ञम् । अग्नीषोमीयमित्यग्नी—सोमीयम् ( २ ) । पशुम् । अकुर्वत । दार्श्यम् । यज्ञम् । आग्नेयम् । पशुम् । अकुर्वत । वैश्वदेवमिति वैश्व—देवम् । प्रातःसवनमिति प्रातः—सवनम् । अकुर्वत । वरुणप्रघासानिति वरुण—प्रघासान् । माध्यंदिनम् । सवनम् । साकमेधानिति साक—मेधान् । पितृयज्ञमिति पितृ—यज्ञम् । त्र्यम्बकानिति त्रि—अम्बकान् । तृतीयसवनमिति तृतीय—सवनम् । अकुर्वत । तम् । एषाम् । असुराः । यज्ञम् । अन्ववाजिगांसन्नित्यनु—अवाजिगांसन् । तम् । न । अन्ववायन्नित्यनु—अवायन् । ते । अब्रुवन् । अध्वर्तव्याः । वै । इमे । देवाः । अभूवन् । इति । तत् । अध्वरस्य । अध्वरत्वमित्यध्वर—त्वम् । ततः । देवाः । अभवन् । परेति । असुराः । यः । एवम् । विद्वान् । सोमेन । यजते । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

(सवननिरूपणम्)

( अथ तृतीयकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः । )

---

आद्यानुवाके विहिताः पवमानग्रहास्त्रयः ॥

अथ द्वितीये सवनानि निरूप्यन्ते । ततः प्रातःसवनगत उपांशुग्रहपात्रे सोमांशुप्रक्षेपं तस्य चांशोस्तृतीयसवनगताभिषवसंसर्गं विधत्ते—

त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमव लुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशुꣳ हुत्वोपाꣳशुपात्रेऽꣳशुमवास्य तं तृतीयसवनेऽपिसृज्याभि षुणुयाद्यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषि सर्वाण्येव तत्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोति, इति ।

प्रातःसवनं माध्यंदिनं सवनं तृतीयसवनं चेत्येवं सवनानि त्रीण्यवश्यं भवन्ति । सूयते सोम एव प्रातःसवने माध्यंदिने च न तृतीयसवने । ऋजीषमेव तत्राभिषूयते । अत एव षष्ठकाण्डे गायत्र्याः सोमाहरणप्रस्तावे समाम्नायते—" पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते " इति । अथैवं सति सोमांशुरहितं तृतीयं सवनं कुर्वन्तो यजमानास्तत्सवनमवलुम्पन्ति विनाशयन्ति । सूयते सोमोऽत्रेत्यस्य सवनशब्दार्थस्यासंभवात्तस्य सवनत्वं कथं सिध्यतीति तदुच्यते—उपांशुग्रहं हुत्वा तस्मिन्नुपांशुपात्रे कंचिदनभिषुतं सोमांशुं प्रक्षिप्य तृतीयसवनपर्यन्तं प्रज्ञातं निधाय तृतीयसवने तमंशुमृजीषे संसृज्याभिषुणुयात् । तस्मिन्नभिषवे तमंशुं वसतीवरीभिरद्भिराप्याययति । तेनाऽऽप्यायनेनेतरसवनवदिदमाप्यायितसोमांशुयुक्तं भवति । अंशुना सहाभिषवं कृत्वा निष्पीडनादृजीषयुक्तमपि भवति । एवं च सति तत्तथा सति तृतीयसवनेन सह सर्वाण्यपि सवनानि सोतव्यसोमांशुयुक्तानि शुक्रवन्ति सूयमानसोमांशुगतरसवन्ति कृत्वा तुल्यवीर्याणि कृतानि भवन्ति ॥

अथानन्तरभाविनोर्मन्त्रयोर्विनियोगमापस्तम्ब आह—" प्रसर्प्स्यन्तो ग्रहानवेक्षन्ते द्वौ समुद्राविति पूतभृदाधवनीयौ द्वे द्रधसी इति द्रोणकलशम् " इति ।

पाठस्तु—

द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव

पादाः । तयोः पश्यन्तो अति यन्त्यन्यमपश्यन्तः सेतुनाऽति यन्त्यन्यम् । द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान् । तिरोधायैत्यसितं वसानः शुक्रमा दत्ते अनुहाय जार्यै । , इति ।

तत्र प्रथममन्त्रेण समुद्रद्वयरूपत्वमहोरात्रद्वयरूपत्वं चाऽऽरोप्य पूतभृदाधवनीयौ स्तूयेते। द्वौ समुद्रौ विततौ विस्तीर्णावजूर्यावजीर्णौ कदाचिदप्यशुष्यन्तौ। तादृशावेतौ पर्यायेणाऽऽवर्तेते। तत्र दृष्टान्तः—जठरा समुद्रस्योदरे पादा इव यथा पादसदृशा ऊर्मयः समुद्रमध्ये पर्यायेणाऽऽवर्तन्ते प्रथममेक आगच्छति पश्चादपर इति तथा पूतभृत्कदाचिदुपयुज्यते कदाचिदाधवनीय इति पर्यायः। तौ समुद्रात्मकौ पूतभृदाधवनीयौ पुनरहोरात्ररूपौ वर्तेते । तयोर्मध्येऽन्यमहरात्मकं जनाः पश्यन्तोऽतियन्ति उत्तरन्ति। अथान्यं रात्रिरूपमपश्यन्तो जनाः सेतुसदृशेन नौरूपेण साधनेनातियन्ति । उत्तरस्य हविर्धानस्योपरिष्टान्नीडे परिश्रितेऽवस्थितस्याऽऽधवनीयस्य तिरोहितत्वादपश्यन्त इत्युच्यते । तस्यैव हविर्धानस्य प्रधुरे तिरोधानरहिते पूतभृतोऽवस्थितत्वात्पश्यन्त इत्युच्यते। चमसगणे पयसां धारकत्वादुभयोः समुद्रत्वम् । अथ द्रोणकलश आदित्यात्मना स्तूयते—एक आदित्यो द्वे द्रधसी अहोरात्रे उभे वाससी वस्तेऽहस्कार्याच्छादयति । कीदृशे द्रधसी, सतती सातत्येनाविच्छेदेन वर्तेते। न ह्यह्नो रात्रेश्च मध्ये कश्चिद्विच्छेदोऽस्ति । कीदृश एक आदित्यः, केशी केशसमानरश्मियुक्तो विश्वा भुवनानि विद्वान्सर्वाँल्लोकान्स्वरश्मिभिः प्रकाशयमानः। उक्तयोर्वस्त्रयोर्मध्ये रात्रिरूपं वस्त्रं मलिनमहोरूपं तु शुक्रम् । यदा रात्रिरूपमसितं वस्त्रं वसानो वर्तते तदा स्वात्मरूपं तिरोधाय गच्छति । अथ जार्यै जीर्णाया रात्रेः पश्चादनुहाय तदसितं वस्त्रं परित्यज्य शुक्रमहोरूपं श्वेतं वस्त्रमादत्ते। यथाऽयमादित्यः कदाचित्तिरोहितो भवति कदाचिदाविर्भवत्येवमयं द्रोणकलशोऽपि हविर्धानस्याधस्तात्तिरोभूतो वर्तते । हारियोजनग्रहणाय तस्मात्प्रदेशाद्बहिरानीत आविर्भवति। तस्मादयमादित्यसदृश इत्यर्थः ॥

अथ यस्य सोमयागस्य प्रकरणोक्तेभ्यो मन्त्रेभ्यो विधिभ्यश्चान्यान्परिशिष्टान्मन्त्रान्विधींश्च दर्शयितुमिदमौपानुवाक्यकाण्डमारब्धं तमिमं सोमयागं विधातुं प्रस्तौति—

( सवननिरूपणम् )

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं महायज्ञमपश्यन्तमतन्वताग्निहोत्रं व्रतमकुर्वत तस्माद्द्विव्रतः स्याद्द्विर्ह्यग्निहोत्रं जुह्वति पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत दार्श्यं यज्ञमाग्नेयं पशुमकुर्वत वैश्वदेवं प्रातःसवनमकुर्वत वरुणप्रघासान्माध्यंदिनꣳ सवनꣳ साकमेधान्पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसवनमकुर्वत तमेषामसुरा यज्ञमन्ववाजिगाꣳसन्तं नान्ववायन्तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति तदध्वरस्याध्वरत्वं ततो देवा अभवन्पराऽसुराः, इति ।

देवाः पूर्वमसुरविजयार्थं यज्ञे यद्यदङ्गमकुर्वत तत्सर्वमसुरा अपि ज्ञात्वा तथैवाकुर्वत । ततो देवानां जयाभावे सति पुनरपि विचार्य जयोपायमेतं सोमाख्यं महायज्ञं निश्चितवन्तः । तं च महायज्ञमसुरा यथा न जानन्ति तथा प्रच्छन्नमनुष्ठितवन्तः[1] । तंचा( ते चा )[2]ग्निहोत्रं जुहुम इति बहिः प्रसिद्धं कृत्वा रहसि दीक्षाव्रतमकुर्वत । यस्मादग्निहोत्रं सायं प्रातर्द्विर्बहिर्जुह्वति तस्मादभ्यन्तरे क्षीरपानरूपं व्रतं सायं प्रातश्चेति द्विरनुष्ठेयम् । तथा बहिः पौर्णमासं यज्ञं प्रसार्याभ्यन्तरेऽ[3]ग्नीषोमीयं पशुमकुर्वत । तथा बहिर्दर्शसंबन्धियोग्यं यज्ञं प्रसार्याभ्यन्तर आग्नेयं सवनीयं पशुमकुर्वत । ततश्चातुर्मास्यरूपं वैश्वदेवं पर्व बहिः प्रसार्यान्तः प्रातःसवनमकुर्वत । तथा वरुणप्रघासान्बहिः प्रसार्यान्तर्माध्यंदिनं सवनमकुर्वत । तथा साकमेधान्पितृयज्ञं त्र्यम्बकांश्च बहिः प्रसार्यान्तस्तृतीयसवनमकुर्वत । तदानीमसुरा देवैः क्रियमाणं यज्ञमनुक्रमेणावगन्तुमैच्छंस्तदानीं बहिः प्रसारितैरग्निहोत्रादिभिर्हविर्यज्ञैर्भ्रान्ता अन्तस्तं गोप्यं सोमयागमनुक्रमेणानवगतवन्तः । ततोऽवगन्तुमशक्ताः परस्परमिदमब्रुवन्— इमे देवा अध्वर्तव्या अस्माभिर्ध्वरितुं हिंसितुमशक्या अभूवन्निति । तत्तस्मात्कारणान्न ध्वर्यन्तेऽनेन सोमयागेनेत्यध्वरत्वं तस्य संपन्नम् । ततोऽध्वरानुष्ठानाद्देवा विजयिनोऽभवन्नसुराश्च पराभूताः ॥

इदानीं सोमयागं विधत्ते—

---

१ ङ. च. प्रच्छिन्नम॑ । २ ख. घ. ङ. तच्च नाम्नि॑ । ३ ख. घ. ङ. च. 'मेयस' ।

य एवं विद्वान्त्सोमेन यजते भवत्या-
त्मना पराऽस्य भ्रातृव्यो भवति॥, इति ॥

अत्र विनियोगसंग्रहः—

द्वावित्यवेक्षते पूतभृतं चाऽऽधवनीयकम् ।
द्वे द्रोणकलशं पश्येन्मन्त्रौ द्वाविह वर्णितौ ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ तृतीयाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ।)

---

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान्देवान्प-
रिभूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं
जनाय शमर्वते शꣳ राजन्नोषधीभ्योऽच्छिन्नस्य
ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः
स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य
त इदमुन्मृजे प्राणाय मे वर्चोदा वर्चसे पव-
स्वापानाय व्यानाय वाचे (१) दक्षक्रतुभ्यां
चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाꣳ श्रोत्रा-
याऽऽत्मनेऽङ्गेभ्य आयुषे वीर्याय विष्णोरि-
न्द्रस्य विश्वेषां देवानां जठरमसि वर्चोदा मे
वर्चसे पवस्व कोऽसि को नाम कस्मै त्वा काय
त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामी-

मदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदाः ( २ ) वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे। बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो भूत्याऽभि पवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो ब्रह्मवर्चसेनाभि पवत आमयावी ( ३ ) अवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्त आयुषाऽभि पवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक्प्र धन्वति ( ४ ) ॥

( वाचे रूपेभ्यो वर्चोदा आमयावी पञ्चचत्वारिꣳशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( अथ तृतीयाष्टके द्वितीयप्रपाठके तृतीयोऽनुवाकः । )

---

परिभूरिति परि—भूः । अग्निम् । परिभूरिति परि—भूः । इन्द्रम् । परिभूरिति परि—भूः । विश्वान् । देवान् । परिभूरिति परि—भूः । माम् । सह । ब्रह्मवर्चसेनेति ब्रह्म—वर्चसेन । सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते । शम् । राजन् । ओषधीभ्य इत्योषधि—भ्यः । अच्छिन्नस्य । ते । रयिपत इति रयि—पते । सुवीर्यस्येति सु—वीर्यस्य । रायः । पोषस्य । ददितारः । स्याम । तस्य । मे । रास्व । तस्य । ते । भक्षीय । तस्य । ते । इदम् । उदिति । मृजे । प्राणायेति प्र—अनाय । मे । वर्चोदा इति वर्चः—दाः । वर्चसे । पवस्व । अपानायेत्यप—अनाय । व्यानायेति वि—अनाय । वाचे ( १ ) । दक्षक्रतुभ्यामिति दक्षक्रतु—भ्याम् । चक्षुर्भ्यामिति चक्षुः—भ्याम् । मे । वर्चोदाविति वर्चः—दौ । वर्चसे । पवेथाम् । श्रोत्राय । आत्मने । अङ्गेभ्यः । आयुषे । वीर्याय । विष्णोः । इन्द्रस्य । विश्वेषाम् । देवानाम् । जठरम् । असि । वर्चोदा इति वर्चः—दाः । मे । वर्चसे । पवस्व । कः । असि । कः । नाम । कस्मै । त्वा । काय । त्वा ।

यम्। त्वा। सोमेन। अतीतृपम्। यम्। त्वा। सोमेन। अमीमदम्। सुप्रजा इति सु—प्रजाः। प्रजयेति प्र—जया। भूयासम्। सुवीर इति सु—वीरः। वीरैः। सुवर्चा इति सु—वर्चाः। वर्चसा। सुपोष इति सु—पोषः। पोषैः। विश्वेभ्यः। मे। रूपेभ्यः। वर्चोदा इति वर्चः—दाः ( २ )। वर्चसे। पवस्व। तस्य। मे। रास्व। तस्य। ते। भक्षीय। तस्य। ते। इदम्। उदिति। मृजे। बुभूषन्। अवेति। ईक्षेत। एषः। वै। पात्रियः। प्रजापतिरिति प्रजा—पतिः। यज्ञः। प्रजापतिरिति प्रजा—पतिः। तम्। एव। तर्पयति। सः। एनम्। तृप्तः। भूत्या। अभीति। पवते। ब्रह्मवर्चसकाम इति ब्रह्मवर्चस—कामः। अवेति। ईक्षेत। एषः। वै। पात्रियः। प्रजापतिरिति प्रजा—पतिः। यज्ञः। प्रजापतिरिति प्रजा—पतिः। तम्। एव। तर्पयति। सः। एनम्। तृप्तः। ब्रह्मवर्चसेनेति ब्रह्म—वर्चसेन। अभीति। पवते। आमयावी ( ३ )। अवेति। ईक्षेत। एषः। वै। पात्रियः। प्रजापतिरिति प्रजा—पतिः। यज्ञः। प्रजापतिरिति प्रजा—पतिः। तम्। एव। तर्पयति। सः। एनम्। तृप्तः। आयुषा। अभीति। पवते।

अभिचरन्नित्यंभि—चरन् । अवेतिं । ईक्षेत । एषः । वै । पात्रिंयः । प्रजापंतिरितिं प्रजा—पतिः । यज्ञः । प्रजापंतिरितिं प्रजा—पतिः । तम् । एव । तर्पयति । सः । एनम् । तृप्तः । प्राणापानाभ्यामितिं प्राण—अपानाभ्याम् । वाचः । दक्षक्रतुभ्यामितिं दक्षक्रतु—भ्याम् । चक्षुंर्भ्यामिति चक्षुः—भ्याम् । श्रोत्राभ्याम् । आत्मनंः । अङ्गेभ्यः । आयुंषः । अन्तः । एति । ताजक् । प्रेतिं । धन्वति ( ४ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः )

---

अनुवाके द्वितीये तु सोमयागविधिः स्मृतः ॥

अथ तृतीयानुवाके सोमावेक्षणमुच्यते ।

कल्पः—"परिभूरग्निमिति सर्वं राजानं प्राणाय म इत्युपांशुमपानाय म इत्यन्तर्यामं व्यानाय म इत्युपांशुसवनं वाचे म इत्यैन्द्रवायवं दक्षक्रतुभ्यां म इति मैत्रावरुणं चक्षुर्भ्यां म इति शुक्रामन्थिनौ श्रोत्राय म इत्याश्विनमात्मने म इत्याग्रयणमङ्गेभ्यो म इत्युक्थ्यमायुषे म इति ध्रुवम्" इति, "तेजसे म ओजसे मे वर्चसे मे वीर्याय मे वर्चोदा वर्चसे पवस्वेत्येतैः प्रतिमन्त्रमतिग्राह्यान्षोडशिनम्" इति, "विष्णोर्जठरमसीति द्रोणकलशमिन्द्रस्येत्याधवनीयं विश्वेषां देवानामिति पूतभृतं कोऽसि को नामेत्याहवनीयम्" इति, "विश्वेभ्यो मे रूपेभ्य इति सर्वं राजानम्" इति च ।

तत्र प्रथममन्त्रपाठस्तु—

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान्देवान्परि-

(सोमावेक्षणाभिधानम्)

भूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते शꣳ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम। तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे , इति।

हे सोम त्वमग्निं परिभूः परितो व्याप्तवानसि। एवमिन्द्रं विश्वान्देवांश्च व्याप्तवानसि। मां तु ब्रह्मवर्चसेन सह तिष्ठन्तं व्याप्तवानसि। स त्वं नोऽस्मान्पवस्व शोधय। हे राजन्नस्मदीयाभ्यो गोजनाश्वौषधीभ्यः शं सुखं प्रयच्छ। हे रयिपते धनपते त्वत्प्रसादाद्वयमच्छिन्नस्यानुपध्वस्तस्य सुवीर्यस्य शोभनपुत्रोपेतस्य धनपोषस्य दातारो भवाम। तस्य दानार्थिनो मम रास्व धनं देहि। तस्य तादृशस्य ते तव रसं भक्षीय काले प्राप्ते पिबानि[1]। तस्य[2] पीतस्य ते तव प्रसादादिदमपेक्षितं फलमुन्मृज उत्कर्षेणात्युज्ज्वलं करोमि। अनेन मन्त्रेण सर्वं राजानं सामान्याकारेणावेक्षते। उपरितनैस्तु मन्त्रैस्तत्तत्पात्रगतं सोमं विशेषाकारेणावेक्षते॥

तेषां मन्त्राणां पाठस्तु—

प्राणाय मे वर्चोदा वर्चसे पवस्वापानाय व्यानाय वाचे दक्षक्रतुभ्यां चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाꣳ श्रोत्रायाऽऽत्मनेऽङ्गेभ्य आयुषे वीर्याय विष्णोरिन्द्रस्य विश्वेषां देवानां जठरमसि वर्चोदा मे वर्चसे पवस्व कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे।, इति।

---

१ ख. च. पिबामि। २ ख. च. °स्य ते।

हे उपांशुपात्र त्वं वर्चोदा बलप्रदोऽसि। ततो मे प्राणायोच्छ्वासाय वर्चसे बलाय पवस्व मां शोधय। अपानायेत्यादिषु मन्त्रेषु मे वर्चोदा वर्चसे पवस्वेति शेषोऽनुषज्यते। सूत्रोक्तान्यन्तर्यामपात्रादीनि संबोध्य शेषं पूरयित्वाऽपानायेत्यादयो मन्त्रा योजनीयाः। अपानो निःश्वासोऽधोवृत्तिः। व्यानो विष्वग्वृत्तिः। वाक्प्रसिद्धा। दक्षक्रतू प्राणापानौ "प्राणो वै दक्षोऽपानः क्रतुः" इति श्रुतेः। चक्षुषी प्रसिद्धे। अत्र शुक्रामन्थिनोर्द्वित्वाद्वर्चोदाविति द्विवचनान्तत्वं द्योतयितुमनुषज्जमानस्य पुनः पाठः। श्रोत्रं प्रसिद्धम्। आत्मा जीवः। अङ्गानि हस्तपादादीनि। आयुः प्रसिद्धम्। वीर्यं सामर्थ्यम्। विष्णोरिन्द्रस्येत्यनयोर्मन्त्रयोर्जठरमसीत्याद्यनुषज्यते। हे द्रोणकलश त्वं विष्णोर्जठरमसि। अतो वर्चोदास्त्वं वर्चसे मां पवस्व। एवमाधवनीयपूतभृतोर्मन्त्राविन्द्रस्य विश्वेषां देवानामित्येतौ योज्यौ। हे आहवनीय त्वं कोऽसि प्रजापतिरूपोऽसि, को ह वै नाम प्रजापतिरिति श्रुत्यन्तरात्। तथा को नाम कः शब्दस्तव नाम यागसाधकत्वेन सुखहेतुत्वात्। अतः कस्मै प्रजापतितुष्ट्यै त्वामवेक्षे काय सुखार्थं त्वामवेक्षे। हे आहवनीय यमेवंविधं त्वां सोमेनातीतृपं तर्पितवानस्मि। तथा यं त्वां सोमेनामीमदं हर्षितवानस्मि। अतस्त्वत्प्रसादात्प्रजया भृत्यरूपया सुप्रजाः शोभनभृत्ययुक्तो भूयासम्। वीरैः पुत्रपौत्रादिभिः सुवीरः शोभनपुत्रपौत्रादियुक्तो भूयासम्। वर्चसा बलेन सुवर्चाः शोभनबलयुक्तो भूयासम्। पोषैर्धनादिपुष्टिभिः सुपोषः शोभनतत्पुष्टियुक्तो भूयासम्। हे सर्वसमष्टिरूप सोम मे विश्वेभ्यो रूपेभ्यो मम पूर्वोक्तप्राणापानादिसर्वफलसिद्ध्यर्थं वर्चोदास्त्वं वर्चसे मां शोधयस्वेत्यादि पूर्ववत् ॥

इदानीमेतैर्मन्त्रैर्भूतिब्रह्मवर्चसायुरभिचारार्थिनां सोमावेक्षणं क्रमेण विधत्ते—

बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो भूत्याऽभि पवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो ब्रह्मवर्चसेनाभि पवत आमयाव्यवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्त आयुषाऽभि पवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः

प्रजापतिस्तमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याᳪं श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक्प्र धन्वति ॥ , इति ॥

बुभूषन्भवितुमिच्छन्नैश्वर्यकाम इत्यर्थः । पात्रियः पात्रेऽवस्थित एष सोमः प्रजापतिस्वरूपः । अनेन साध्यो यज्ञोऽपि प्रजापतिस्वरूपः । अतोऽनेनावेक्षणेन तमेव प्रजापतिं तर्पयति । स च तृप्त एनं यजमानमैश्वर्यार्थमभितः शोधयति । एवमुत्तरेष्वपि योज्यम् । चतुर्थपर्याये त्वेनमभिचारविषयं वैरिणं यज्ञात्मा प्रजापतिः प्राणादिभ्योऽन्तरेति वैरिणं वियोजयतीत्यर्थः । स च वैरी तदानीमेव प्रधन्वति म्रियते । अत्र प्राणापानाभ्यामित्यनेन सह पौनरुक्त्यं निवारयितुं दक्षक्रतुभ्यामित्यस्य योगक्षेमाभ्यामित्यर्थो व्याख्यातव्यः ॥

अथ विनियोगसंग्रहः—

आदौ समष्टिरूपेण परिभूः सोममीक्षते ।
प्राणेत्युपांशुमन्येषु मे वर्चेत्यनुषज्यते ॥ १ ॥
अपाऽऽन्तर्यामिकं व्यान शिलां वाचैन्द्रवायवे ।
दक्षेति मैत्रावरुणं चक्षुः शुक्रं च मन्थिनम् ॥ २ ॥
श्रोत्रेत्याश्विनमात्माऽऽग्रयणमङ्गेभ्य उक्थ्यकम् ।
आ ध्रुवं वी षोडशिनं विष्णोस्तु द्रोणकुम्भकम् ॥ ३ ॥
इन्द्रेत्याधवनीयाख्यं जठशेषस्तयोर्द्वयोः ।
विश्वे पूतभृतं कोऽसि वीक्षेताऽऽहवनीयकम् ॥
विश्वे पश्येत्सर्वसोमान्मन्त्राः सप्तदशेरिताः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृतः स्थ ते

माऽस्मिन्यज्ञ उप ह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपाऽऽस्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तां नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्या-हवनीयमुप तिष्ठते यज्ञो वै मखः ( १ ) यज्ञं वाव स तद्हन्तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै नमो रुद्राय मखघ्ने नम-स्कृत्या मा पाहीत्याग्नीध्रं तस्मा एव नम-स्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्री-यमाशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्या-निर्घाताय या वै ( २ ) देवताः सदस्यार्ति-मार्पयन्ति यस्ता विद्वान्प्रसर्पति न सदस्या-र्तिमार्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमाऽर्पयन्ति ता य एवं विद्वा-न्प्रसर्पति न सदस्यार्तिमार्छति दृढे स्थः शिथिरे समीची माऽंहसस्पातꣳ सूर्यो मा देवो दिव्या-दꣳहसस्पातु वायुरन्तरिक्षात् ( ३ ) अग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यो देवी द्वारौ मा मा सं तांप्तं नमः सदसे नमः

( स्फ्याद्युपस्थानमन्त्राभिधानम् )

सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या अहें दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर उन्निवत उदुद्वतश्च गेषं पातं मा द्यावापृथिवी अद्याह्नः सदो वै प्रसर्पन्तम् ( ४ ) पितरोऽनु प्र सर्पन्ति त एनमीश्वरा हिंसितोः सदः प्रसृप्य दक्षिणार्धं परेक्षेताऽगन्त पितरः पितृमानहं युष्माभिर्भूयासं सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै ( ५ ) ॥

( मखो वा अन्तरिक्षात्प्रसर्पन्तं त्रयस्त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ तृतीयाष्टके द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

स्फ्यः । स्वस्तिः । विघन इति वि—घनः । स्वस्तिः । पर्शुः । वेदिः । परशुः । नः । स्वस्तिः । यज्ञियाः । यज्ञकृत इति यज्ञ—कृतः । स्थ । ते । मा । अस्मिन् । यज्ञे । उपेति । ह्वयध्वम् । उपेति । मा । द्यावापृथिवी इति द्यावा—पृथिवी । ह्वयेताम् । उपेति । आस्ताव इत्या—स्तावः । कलशः । सोमः ।

अग्निः । उपेति । देवाः । उपेति । यज्ञः । उपेति । मा । होत्राः । उपहव इत्युप—हवे । ह्वयन्ताम् । नमः । अग्नये । मखघ्न इति मख—घ्ने । मखस्य । मा । यशः । अर्यात् । इति । आहवनीयमित्या—हवनीयम् । उपेति । तिष्ठते । यज्ञः । वै । मखः (१) । यज्ञम् । वाव । सः । तत् । अहन् । तस्मै । एव । नमस्कृत्येति नमः—कृत्य । सदः । प्रेति । सर्पति । आत्मनः । अनार्त्यै । नमः । रुद्राय । मखघ्न इति मख—घ्ने । नमस्कृत्येति नमः—कृत्या । मा । पाहि । इति । आग्नीध्रमित्याग्नि—इध्रम् । तस्मै । एव । नमस्कृत्येति नमः—कृत्य । सदः । प्रेति । सर्पति । आत्मनः । अनार्त्यै । नमः । इन्द्राय । मखघ्न इति मख—घ्ने । इन्द्रियम् । मे । वीर्यम् । मा । निरिति । वधीः । इति । होत्रीयम् । आशिषमित्या—शिषम् । एव । एताम् । एति । शास्ते । इन्द्रियस्य । वीर्यस्य । अनिर्घाताये त्यनिः—घाताय । याः । वै (२) । देवताः । सदांसि । आर्तिम् । आर्पयन्तीत्या—अर्पयन्ति । यः । ताः । विद्वान् । प्रसर्पतीति प्र—सर्पति । न । सदांसि । आर्तिम् । एति । ऋच्छति । नमः । अग्नये ।

मखघ्न इति मख—घ्ने । इति । आह । एताः । वै । देवताः । सदसि । आर्तिम् । एति । अर्पयन्ति । ताः । यः । एवम् । विद्वान् । प्रसर्पतीति प्र—सर्पति । न । सदसि । आर्तिम् । एति । ऋच्छति । दृढे इति । स्थः । शिथिरे इति । समीची इति । मा । अंहसः । पातम् । सूर्यः । मा । देवः । दिव्यात् । अंहसः । पातु । वायुः । अन्तरिक्षात् ( ३ ) । अग्निः । पृथिव्याः । यमः । पितृभ्य इति पितृभ्यः । सरस्वती । मनुष्येभ्यः । देवी इति । द्वारौ । मा । मा । समिति । ताप्तम् । नमः । सदसे । नमः । सदसः । पतये । नमः । सखीनाम् । पुरोगाणामिति पुरः—गानाम् । चक्षुषे । नमः । दिवे । नमः । पृथिव्यै । अहे । दैधिषव्य । उदिति । अतः । तिष्ठ । अन्यस्य । सदने । सीद । यः । अस्मत् । पाकतर इति पाक—तरः । उदिति । निवत इति नि—वतः । उदिति । उद्वत इत्युत्—वतः । च । गेषम् । पातम् । मा । द्यावापृथिवी इति द्यावा—पृथिवी । अद्य । अह्नः । सदः । वै । प्रसर्पन्तमिति प्र—सर्पन्तम् ( ४ ) । पितरः । अनु । प्रेति । सर्पन्ति । ते । एनम् । ईश्वराः । हिंसितोः । सदः । प्रसृप्येति प्र—

स्फ्यं । दक्षिणार्धमिति दक्षिण—अर्धम् । परेति ।
ईक्षत । एति । अगन्त । पितरः । पितृमानिति
पितृ—मान् । अहम् । युष्माभिः । भूयासम् । सुप्र-
जस इति सु—प्रजसः । मया । यूयम् । भूयास्त ।
इति । तेभ्यः । एव । नमस्कृत्येति नमः—कृत्य ।
सदः । प्रेति । सर्पति । आत्मनः । अनार्त्यै ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः । )

---

कल्पः—" स्फ्यः स्वस्तिरित्युत्करे वेदिकरणानि परास्योपतिष्ठते " इति ।
पाठस्तु—

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः
परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृतः
स्थ ते माऽस्मिन्यज्ञ उप ह्वयध्वम् , इति ।

स्फ्यः खननहेतुः । विघनो भूमिघट्टनहेतुः । पर्शुस्तृणादिच्छेदनहेतुः । परशुर्वृक्षादिच्छेदनहेतुः । तत्रायं स्फ्यः स्वस्तिरविनाशहेतुरस्तु । एवमितरेष्वपि योज्यम् । एतैः स्फ्यादिभिर्निष्पन्ना वेदिरपि नोऽस्माकं स्वस्तिरस्तु । हे स्फ्यादयो यूयं याज्ञिया यज्ञार्हा अतोऽत्र यज्ञकृतः स्थ यज्ञसंपादका भवत । ते यूयं मामस्मिन्यज्ञ उपह्वयध्वमनुजानीत ॥

कल्पः—" उप मा द्यावापृथिवी इति द्यावापृथिवी उपाऽऽस्ताव इति बहिष्पवमानास्तावं कलश इति कलशं सोम इति सोममग्निरित्यग्निमुप देवा इति देवानुप यज्ञ इति यज्ञमुप मा होत्रा इति होत्रकान्ह्वयेतां ह्वयन्तां ह्वयतामिति यथालिङ्गं सर्वत्रानुषजति " इति ।

एतेषां पाठस्तु—

उप मा द्यावापृथिवी ह्वयेतामुपाऽऽ-

( स्फ्याद्युपस्थानमन्त्राभिधानम् )

स्तावः कलशः सोमो अग्निरुप देवा उप
यज्ञ उप मा होत्रा उपहवे ह्वयन्ताम्, इति।

इमे द्यावापृथिव्यौ मामुपह्वयेतां मामनुजानीताम् । अयमास्तावो बहिष्पवमानदेशः । अत्र यथायोगमनुषङ्गद्योतनायोपशब्दः प्रयुक्तः । एवं द्रोणकलशादिषु योज्यम् । तत्र तत्रोपशब्दश्चानुषङ्गद्योतनाय प्रयुक्तः । उपह्वयतेऽस्मिन्नित्युपहवो यज्ञस्तस्मिन्यज्ञे प्रशास्तृब्राह्मणाच्छंस्यादयो होत्रका मामुपह्वयन्ताम् । एतैर्मन्त्रैर्यथावद्यज्ञाङ्गमुपस्थातव्यम् ॥

आहवनीयस्योपस्थानं विधत्ते—

नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादि-
त्याहवनीयमुप तिष्ठते यज्ञो वै मखो
यज्ञं वाव स तदहन्तस्मा एव नमस्कृत्य
सदः प्र सर्पत्यात्मनोऽनार्त्यै , इति।

नमस्काराभावे मखं यज्ञं हन्तीति मखहा तस्मै मखघ्नेऽग्नये नमोऽस्तु । तस्य प्रसादान्मखस्य यशो यज्ञानुष्ठानकीर्तिर्मामर्यात्प्राप्नोतु । अस्मिन्मन्त्रे मखशब्देन यज्ञ उच्यते । यज्ञमेव सोऽग्निस्तदा हन्ति यदा नमस्कारो न क्रियते । अतस्तस्मा एव नमस्कृत्य सदःप्राप्तौ सत्यां यजमानशरीरस्याऽऽर्तिर्न भवति ॥

यदुक्तं सूत्रकारेण—" नमोऽग्नये मखघ्न इत्याहवनीयं नमो रुद्राय मखघ्न इत्याग्नीध्रं नम इन्द्राय मखघ्न इति होत्रीयम् " इति । उपतिष्ठत इत्यनुवर्तते ।

तत्राऽऽहवनीयोपस्थानं विधायाऽऽग्नीध्रस्योपस्थानं विधत्ते—

नमो रुद्राय मखघ्ने नमस्कृत्या मा पा-
हीत्याग्नीध्रं तस्मा एव नमस्कृत्य सदः
प्र सर्पत्यात्मनोऽनार्त्यै , इति।

आग्नीध्रीये धिष्णियेऽवस्थितोऽग्निर्मखहा रुद्रस्तस्मै रुद्राय नमोऽस्तु । अनया नमस्कृत्या हे रुद्र मां पाहीत्यनेन मन्त्रेणाऽऽग्नीध्रमग्निमुपतिष्ठेत । तस्मा इत्यादि पूर्ववत् ॥

अथ होत्रीयस्य धिष्णियस्योपस्थानं विधत्ते—

नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा
निर्वधीरिति होत्रीयमाशिषमेवैतामा शास्त
इन्द्रियस्य वीर्यस्यानिर्घाताय , इति।

परमैश्वर्ययोगाद्धोत्रीयो धिष्णियोऽग्निरिन्द्रो यज्ञघाती तस्मै नमोऽस्तु। हे इन्द्र मदीयमिन्द्रियं वीर्यं च मा विनाशय । अनेन मन्त्रेण होत्रीयस्योपस्थाने सत्याशिषमेव प्रार्थितवान्भवति । सा चाऽऽशीरिन्द्रियस्य वीर्यस्याविनाशाय संपद्यते ॥

उक्तमन्त्रत्रयोपस्थानं प्रशंसति—

या वै देवताः सदस्यार्तिमार्पयन्ति यस्ता विद्वान्प्रसर्पति न सदस्यार्तिमार्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमाऽर्पयन्ति ता य एवं विद्वान्प्रसर्पति न सदस्यार्तिमार्छति, इति।

अग्निरुद्रेन्द्ररूपा या देवताः सदस्यवस्थितयजमानादीनार्तिं प्रापयन्ति यो यजमानस्तत्कृतं विद्वांस्ता देवताः प्रसर्पति नमस्कारेण भजतेऽसौ सदसि प्रविष्टोऽप्यार्तिं न प्राप्नोति। तस्मान्नमोऽग्नय इत्यादीन्पूर्वोक्तान्मन्त्रान्पठेत् ॥

कल्पः—" दृढे स्थः शिथिरे समीची इति द्यावापृथिवी उपतिष्ठते सूर्यं वायुमग्निं यमं सरस्वतीं सदसो द्वाराविति पातं पात्विति यथालिङ्गं सर्वत्रानुषजति " इति।

ततः(त्र) प्रथममन्त्रपाठस्तु—

दृढे स्थः शिथिरे समीची माऽꣳहसस्पातम्, इति।

हे द्यावापृथिवी उपस्थानरहितं प्रति शिथिले अपि युवामुपस्थातारं प्रति समीची अनुकूले सत्यौ दृढे स्थः। अत उपस्थातारं मां प्रतिबन्धकादंहसः पातम्॥

द्वितीयमन्त्रपाठस्तु—

सूर्यो मा देवो दिव्यादꣳहसस्पातु, इति।

द्युलोकविषयान्मया कृतादंहसो मां सूर्यो देवः पातु ॥

उत्तरमन्त्रपाठस्तु—

वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यो देवी द्वारौ मा मा सं ताप्तम् , इति।

वाय्वग्नियमसरस्वतीमन्त्रेषु पात्वित्यनुषञ्जनीयम्। हे द्वाररूपे देव्यावुपस्थातारं मां युवां मा संताप्तमिति संतापयुक्तं मा कुरुतम् ॥

नमः सदसे नमः सदसस्पतये
नमः सखीनां पुरोगाणां चक्षुषे
नमो दिवे नमः पृथिव्यै, इति।

कल्पः—“ नमः सदस इति सदो नमः सदसस्पतय इति ब्रह्माणं नमः सखीनां पुरोगाणामित्यृत्विजो नमो दिवे नमः पृथिव्या इति द्यावापृथिवी उपस्थाय ” इति।

तृतीयमन्त्रान्ते चक्षुष इतीदमाम्नातम्। ऋत्विजो यजमानस्य सखायस्तदीयकार्यनिष्पादकत्वात्। ते च स्वस्वव्यापारे पुरतो गच्छन्तीति पुरोगास्तेषां चक्षुषे चक्षुःस्थानीयाय स्वस्वप्रयोगाभिज्ञाय नमः॥

कल्पः—“ अहे दैधिषव्येत्यायतनात्तृणं निरस्य ” इति।

औदुम्बर्या दक्षिणभागो यजमानस्याऽऽयतनम्। अत एव सूत्रकार आह—“ अपरेण ब्रह्मसदनं यजमानायतनम् ” इति।

पाठस्तु—

अहे दैधिषव्योदतस्तिष्ठान्यस्य
सदने सीद योऽस्मत्पाकतरः, इति।

धारणसमर्थं स्थानं दिधिषुस्तत्रोत्पन्नत्वाद्दैधिषव्यत्वम्। अहिशब्दस्तृणलक्षकः सर्पवदुपद्रवकारित्वात्। यजमानायतने समुत्पन्न हे तृण त्वमतोऽस्मात्स्थानादुत्तिष्ठ। योऽन्यः पुरुषोऽस्मत्पाकतरो बालतरोऽप्रबुद्धस्तस्यान्यस्य सदने स्थाने तिष्ठ॥

उन्निवत उदुद्वतश्च गेषम्, इति।

कल्पः—“ उन्निवत उदुद्वतश्च गेषमित्युपविशति ” इति।

ये पुरुषा मत्तो न्यग्भूतास्ते निवन्तो न्यग्भूतेषु निशब्दस्य विद्यमानत्वात्। तान्पुरुषानहमुद्गेषमुद्गतोऽस्मि। येऽपि मत्त उद्गतास्ते पुरुषा उद्वन्त उच्छ्रितेषूच्छब्दस्य विद्यमानत्वात्। तानप्यहमुद्गेषमुल्लङ्घ्योपरि गम्यासम्॥

पातं मा द्यावापृथिवी अद्याह्नः, इति।

कल्पः—“ पातं मा द्यावापृथिवी अद्याह्न इत्युपविश्य जपति ” इति।

अद्यास्मिन्दिवसे यदिदमहःशब्दवाच्यमग्निष्टोमानुष्ठानं तस्मान्मां हे द्यावापृथिव्यौ पातं तस्मिन्नहनि वैकल्यं यथा न भवति तथा रक्षतमित्यर्थः॥

यदुक्तं सूत्रकारेण—" आगन्त पितरः पितृमानिति दक्षिणार्धं परेक्षते[1] " इति, तदेतद्विधत्ते—

सदो वै प्रसर्पन्तं पितरोऽनु प्र सर्पन्ति त एनमीश्वरा हिꣳसितोः सदः प्रसृप्य दक्षिणार्धं परेक्षेताऽगन्त पितरः पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै ॥, इति ॥

सदः प्रसर्पन्तं यजमानमनु पितरः प्रसर्पन्ति तं यजमानमनमस्कृताः पितरो हिंसितुं प्रभवन्ति । अतः सदसो दक्षिणभागमवेक्षमाण आगन्तेत्यादिमन्त्रं पठेत् । हे पितर आगन्त नः सदसः स्थानमागच्छत । आगतैर्युष्माभिरहं पितृमान्भूयासं यूयं च मया सुप्रजसः शोभनापत्ययुक्ता भूयास्त । अनेन मन्त्रेण पितॄणां नमस्कृतत्वाद्यजमानस्याऽऽर्तिर्न भवति ॥

अथ विनियोगसंग्रहः—

स्फ्य उत्करे परिक्षिप्तं स्फ्यं तत्रैवोपतिष्ठते ।
उप द्युभूमी अन्येषूप मा इत्यनुषज्यते ॥ १ ॥
आस्ता चेति स्तोत्रदेशं कलेति द्रोणकुम्भकम् ।
सोमः सोमं चाग्निरग्निमुप देवेति देवताः ॥ २ ॥
उप यज्ञेति यज्ञं तमुप मेति तु होत्रकान् ।
नमस्त्रयविधिः स्पष्टो दृढे स्थो द्युभुवौ भजेत् ॥ ३ ॥
सूर्यः सूर्यं वायुर्वायुं पात्वित्येषोऽनुषज्यते ।
अग्निर्यमः सरेत्येतान्दे द्वारौ सदसो भजेत् ॥ ४ ॥
सदो ब्रह्मा चर्त्विजो द्यौर्भूर्न्नमःपञ्चभिः क्रमात् ।
अहे तृणं निरस्योन्नीत्युपविश्यात्र पा जपेत् ॥
आगन्त दक्षिणं पश्येन्मन्त्रा विंशतिरीरिताः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ ख. °रेक्षत ' इ° ।

( भक्षमन्त्राभिधानम् )

( अथ तृतीयाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः। )

भक्षेहि माऽऽविंश दीर्घायुत्वायं शंतनुत्वायं रायस्पोषांय वर्चसे सुप्रजास्त्वायेहिं वसो पुरोवसो प्रियो में हृदोंऽस्यश्विनोंस्त्वा बाहुभ्याꣳ सघ्यासं नृचक्षसं त्वा देव सोम सुचक्षा अवं ख्येषं मन्द्राऽभिभूंतिः केतुर्यज्ञानां वाग्जुंषाणा सोमंस्य तृप्यतु मन्द्रा स्वंर्वाच्यदिंतिरनांहतशीर्ष्णी वाग्जुंषाणा सोमंस्य तृप्यत्वेहिं विश्वचर्षणे ( १ ) शंभूर्मयोभूः स्वस्ति मा हरिवर्ण प्र चंर क्रत्वे दक्षाय रायस्पोषांय सुवीरतांयै मा मा राजन्वि बींभिषो मा मे हार्दि त्विषा वंधीः। वृषंणे शुष्मायाऽऽयुंषे वर्चसे। वसुंमद्गणस्य सोम देव ते मतिविदंः प्रातःसवनस्यं गायत्रछंन्दस इन्द्रंपीतस्य नराशꣳसंपीतस्य पितृपींतस्य मधुंमत उपंहूतस्योपंहूतो भक्षयामि. रुद्रवंद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवंनस्य त्रिष्टुप्छंन्दस इन्द्रंपीतस्य नराशꣳसंपीतस्य ( २ ) पितृपींतस्य मधुंमत उपंहूतस्योपंहूतो भक्षयाम्यादित्यवंद्गणस्य सोम देव ते मतिविदंस्तृती-

यस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य संगथे । हिन्वं मे गात्रा हरिवो गणान्मे मा वि तीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति ( ३ ) गाः । अपाम सोममममृता अभूमादर्श्म ज्योतिरविदाम देवान् । किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य । यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराऽहार्जातवेदा विचर्षणिः । पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः । पुनर्मे अश्विना युवं चक्षुरा धत्तमक्ष्योः । इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य ( ४ ) शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आपूर्याः स्थाऽऽ मा पूरयत प्रजया च धनेन च । एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्दध्वं नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय

नमो॑ वः पितरः ( ५ ) स्व॒धायै॒ नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरो घो॒राय॒ पित॑रो॒ नमो॑ वो॒ य ए॒तस्मि॑ँल्लो॒के स्थ यु॒ष्मा२ँस्तेऽनु॒ येऽस्मि॑ँल्लो॒के मां तेऽनु॒ य ए॒तस्मि॑ँल्लो॒के स्थ यू॒यं तेषां॒ वसि॑ष्ठा भूयास्त॒ येऽस्मि॑ँल्लो॒केऽहं तेषां॒ वसि॑ष्ठो भूयासं॒ प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ( ६ ) यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒य२ँ स्या॑म॒ पत॑यो रयी॒णाम्। दे॒वकृ॑त॒स्यैन॑सोऽवयज॑नमसि मनु॒ष्य॑कृत॒स्यैन॑सोऽवयज॑नमसि पि॒तृकृ॑त॒स्यैन॑सोऽवयज॑नमस्य॒प्सु धौ॒तस्य॑ सोम दे॒व ते॒ नृभि॑ः सु॒तस्ये॒ष्टय॑जुषः स्तु॒तस्तो॑मस्य श॒स्तोक्थ॑स्य॒ यो भ॒क्षो अ॑श्वस॒नि॒र्यो गो॒सनि॒स्तस्य॑ ते पि॒तृभि॑र्भ॒क्षंकृ॑त॒स्योप॑हूत॒स्योप॑हूतो भक्षयामि ( ७ )॥

( वि॒श्वच॑र्षणे त्रि॒ष्टुप्छ॑न्दस इ॒न्द्र॑पीतस्य॒ नराशं॒२ँस॑पीतस्याति॑ स्तु॒तस्तो॑मस्य जी॒वाय॒ नमो॑ वः पितरो ब॒भूव॒ चतु॑श्चत्वारि२ँ शच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः। )

---

भ॒क्ष। एति॑। इ॒हि॒। मा॒। एति॑। वि॒श॒। दी॒र्घा॒-

युत्वायेति दीर्घायु—त्वाय । शंतनुत्वायेति शंतनु—त्वाय । रायः । पोषाय । वर्चसे । सुप्रजास्त्वायेति सुप्रजाः—त्वाय । एति । इहि । वसो इति । पुरोवसो इति पुरः—वसो । प्रियः । मे । हृदः । असि । अश्विनोः । त्वा । बाहुभ्यामिति बाहु—भ्याम् । सध्यासम् । नृचक्षसमिति नृ—चक्षसम् । त्वा । देव । सोम । सुचक्षा इति सु—चक्षाः । अवेति । रव्येषम् । मन्द्रा । अभिभूतिरित्यभि—भूतिः । केतुः । यज्ञानाम् । वाक् । जुषाणा । सोमस्य । तृप्यतु । मन्द्रा । स्वर्वाचीति सु—अर्वाची । अदितिः । अनाहतशीर्ष्णीत्यनाहत—शीर्ष्णी । वाक् । जुषाणा । सोमस्य । तृप्यतु । एति । इहि । विश्वचर्षण इति विश्व—चर्षणे ( १ ) । शंभूरिति शं—भूः । मयोभूरिति मयः—भूः । स्वस्ति । मा । हरिवर्णेति हरि—वर्ण । प्रेति । चर । क्रत्वे । दक्षाय । रायः । पोषाय । सुवीरताया इति सु—वीरतायै । मा । मा । राजन् । वीति । बीभिषः । मा । मे । हार्दि । त्विषा । वधीः । वृषणे । शुष्माय । आयुषे । वर्चसे । वसुमद्गणस्येति वसुमत्—गणस्य । सोम । देव । ते । मतिविद इति मति—विदः । प्रातःसवनस्येति

प्रातः—सवनस्यं। गायत्रछंन्दस इतिं गायत्र—छन्दसः। इन्द्रंपीतस्येतीन्द्रं—पीतस्य। नराशंसंपीतस्येति नराशंसं—पीतस्य। पितृपींतस्येतिं पितृ—पीतस्य। मधुंमत इति मधुं—मतः। उपंहूतस्येत्युपं—हूतस्य। उपंहूत इत्युपं—हूतः। भक्षयामि। रुद्रवंद्गणस्येतिं रुद्रवंत्—गणस्य। सोम। देव। ते। मतिविद इतिं मति—विदंः। माध्यंदिनस्य। सवंनस्य। त्रिष्टुप्छंन्दस इतिं त्रिष्टुप्—छन्दसः। इन्द्रंपीतस्येतीन्द्रं—पीतस्य। नराशंसंपीतस्येति नराशंसं—पीतस्य (२)। पितृपींतस्येतिं पितृ—पीतस्य। मधुंमत इति मधुं—मतः। उपंहूतस्येत्युपं—हूतस्य। उपंहूत इत्युपं—हूतः। भक्षयामि। आदित्यवंद्गणस्येत्यांदित्यवंत्—गणस्य। सोम। देव। ते। मतिविद इतिं मति—विदंः। तृतीयंस्य। सवंनस्य। जगंतीछन्दस इति जगंती—छन्दसः। इन्द्रंपीतस्येतीन्द्रं—पीतस्य। नराशंसंपीतस्येति नराशंसं—पीतस्य। पितृपींतस्येतिं पितृ—पीतस्य। मधुंमत इति मधुं—मतः। उपंहूतस्येत्युपं—हूतस्य। उपंहूत इत्युपं—हूतः। भक्षयामि। एतिं। प्यायस्व। समितिं। एतु। ते। विश्वतंः। सोम। वृष्णिंयम्। भवं।

वाजस्य । संगथ इति सं—गथे । हिन्वं । मे ।
गात्रा । हरिव इति हरि—वः । गणान् । मे । मा ।
वीति । तीतृषः । शिवः । मे । सप्तर्षीनिति
सप्त—ऋषीन् । उपेति । तिष्ठस्व । मा । मे ।
अवाङ् । नाभिम् । अतीति ( ३ ) । गाः । अपाम ।
सोमम् । अमृताः । अभूम । अदर्श्म । ज्योतिः ।
अविदाम । देवान् । किम् । अस्मान् । कृणवत् ।
अरातिः । किम् । उ । धूर्तिः । अमृत । मर्त्यस्य ।
यत् । मे । आत्मनः । मिन्दा । अभूत् । अग्निः ।
तत् । पुनः । एति । अहाः । जातवेदा इति जात—
वेदाः । विचर्षणिरिति वि—चर्षणिः । पुनः । अग्निः ।
चक्षुः । अदात् । पुनः । इन्द्रः । बृहस्पतिः । पुनः ।
मे । अश्विना । युवम् । चक्षुः । एति । धत्तम् ।
अक्ष्योः । इष्टयजुष इतीष्ट—यजुषः । ते । देव ।
सोम । स्तुतस्तोमस्येति स्तुत—स्तोमस्य ( ४ ) ।
शस्तोक्थस्येति शस्त—उक्थस्य । हरिवत इति
हरि—वतः । इन्द्रपीतस्येतीन्द्र—पीतस्य । मधुमत
इति मधु—मतः । उपहूतस्येत्युप—हूतस्य । उपहूत
इत्युप—हूतः । भक्षयामि । आपूर्या इत्या—पूर्याः ।
स्थ । एति । मा । पूरयत । प्रजयेति प्र—जया ।

(भक्षमन्त्राभिधानम्)

च। धनेन। च। एतत्। ते। तत। ये। च। त्वाम्। अन्विति। एतत्। ते। पितामह। प्रपितामहेति प्र—पितामह। ये। च। त्वाम्। अन्विति। अत्र। पितरः। यथाभागमिति यथा—भागम्। मन्दध्वम्। नमः। वः। पितरः। रसाय। नमः। वः। पितरः। शुष्माय। नमः। वः। पितरः। जीवाय। नमः। वः। पितरः (५)। स्वधाया इति स्व—धायै। नमः। वः। पितरः। मन्यवे। नमः। वः। पितरः। घोराय। पितरः। नमः। वः। ये। एतस्मिन्। लोके। स्थ। युष्मान्। ते। अन्विति। ये। अस्मिन्। लोके। माम्। ते। अन्विति। ये। एतस्मिन्। लोके। स्थ। यूयम्। तेषाम्। वसिष्ठाः। भूयास्त। ये। अस्मिन्। लोके। अहम्। तेषाम्। वसिष्ठः। भूयासम्। प्रजापत इति प्रजा—पते। न। त्वत्। एतानि। अन्यः। विश्वा। जातानि। परीति। ता। बभूव (६)। यत्कामा इति यत्—कामाः। ते। जुहुमः। तत्। नः। अस्तु। वयम्। स्याम। पतयः। रयीणाम्। देवकृतस्येति देव—कृतस्य। एनसः। अवयजनमित्यव—यजनम्। असि। मनुष्यकृतस्येति मनुष्य—

कृतस्य । एनसः । अवयजनमित्यव—यजनम् । असि । पितृकृतस्येति पितृ—कृतस्य । एनसः । अवयजनमित्यव—यजनम् । असि । अप्स्वित्यप्—सु । धौतस्य । सोम । देव । ते । नृभिरिति नृ—भिः । सुतस्य । इष्टयजुष इतीष्ट—यजुषः । स्तुतस्तोमस्येति स्तुत—स्तोमस्य । शस्तोक्थस्येति शस्त—उक्थस्य । यः । भक्षः । अश्वसनिरित्यश्व—सनिः । यः । गो—सनिरिति गो—सनिः । तस्य । ते । पितृभिरिति पितृ—भिः । भक्षकृतस्येति भक्ष—कृतस्य । उपहूतस्येत्युप—हूतस्य । उपहूत इत्युप—हूतः । भक्षयामि ( ७ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः । )

---

स्फ्याद्युपस्थानमन्त्रा ये ते चतुर्थे समीरिताः ॥
अथ पञ्चमे भक्षमन्त्रा उच्यन्ते ।
कल्पः—" भक्षेहीति भक्षमाह्रियमाणं प्रतीक्ष्य " इति ।
पाठस्तु—

भक्षेहि माऽऽविश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽसि , इति ।

( भक्षमन्त्राभिधानम् )

हे भक्षयोग्य सोमरस त्वं दीर्घायुत्वादिसिद्ध्यर्थमागच्छ मां प्रविश । सुखकारित्वं देहे शंतनुत्वम् । हे वसो निवासहेतोऽस्मान्वासयितुमागच्छ । हे पुरोवसो वासयितॄणां धनादीनां मध्ये प्रथमं वासयितृत्वान्मे हृदो मम चित्तस्य प्रियोऽसि ॥

अश्विनोस्त्वा बाहुभ्याꣳ सघ्यासम्—

कल्पः—" अश्विनोस्त्वा बाहुभ्याꣳ सघ्यासमिति प्रतिगृह्य " इति ।

हे भक्षाश्विनोर्देवानां भिषजोर्बाहुभ्यां त्वा सघ्यासं गृह्णामि ॥

कल्पः—" नृचक्षसं त्वा देव सोमेत्यवेक्ष्य " इति ।

पाठस्तु—

नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषम्, इति ।

हे सोम नृचक्षसं नृश्रेष्ठे पश्यति तादृशं त्वां सुचक्षाः सुष्ठु द्रष्टाऽहमवख्येषमवेक्षे ॥

कल्पः—" मन्द्राऽभिभूतिरिति प्रातःसवने सर्वानैन्द्रान्भक्षयति नराशꣳसपीतस्येति नाराशꣳसान्रुद्रवद्गणस्येति माध्यंदिने सवने सर्वानैन्द्रान्भक्षयति नराशꣳसपीतस्येति नाराशꣳसानादित्यवद्गणस्येति तृतीयसवने सर्वानैन्द्रान्भक्षयति नराशꣳसपीतस्येति नाराशꣳसान्यदन्यत्प्राग्वसुमद्गणात्तत्सर्वत्रानुषंजत्यप्यन्यदे ( दै )वतानिन्द्रपीतस्येति यथादेवतं वा " इति ।

अत्र नाराशंसनामकानां चमसानां लक्षणं सूत्रकारेणैव दर्शितम्—" भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति ते नाराशंसाः " इति ।

पाठस्तु—

मन्द्राऽभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे शंभूर्मयोभूः स्वस्ति मा हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्वि बीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायाऽऽयुषे वर्चसे । वसुमद्गणस्य

१ ख. घ. ङ. च. देहशं ।

सोम देव ते मतिविदः प्रातःसवनस्य गायत्र-
छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृ-
पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि
रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यं-
दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य
नराशꣳसपीतस्य पितृपीतस्य मधुमत उप-
हूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोम
देव ते मतिविदस्तृतीयस्य सवनस्य जगती-
छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपी-
तस्य मधुमत उपहूतस्योपहूतो भक्षयामि।, इति।

मुखस्थिता वाग्देवता सोमस्य जुषाणा सोमं सेवमाना तृप्यतु । कीदृशी वाक्। मन्द्रा हर्षहेतुः। अभिभूतिर्विघ्नानामभिभवित्री। यज्ञानां केतुः कारणभूता। आदरार्थं पुनरपि मन्द्रेत्यादिना प्रार्थ्यते। मन्द्रा हर्षहेतुः । स्ववाची सुष्ठु आभिमुख्येन वर्तमाना। अदितिरखण्डनीया । अनाहतशीर्ष्णी। शिरःशब्देन प्राधान्यात्प्रारम्भो लक्ष्यते। अप्रतिबद्धप्रारम्भेत्यर्थः । वागित्यादि पूर्ववत्। चर्षणयो मनुष्याः। विश्वे चर्षणयः स्वभूता यस्यासौ विश्वचर्षणिः। तथाविध हे सोमेह्यागच्छ । कीदृशः सोमः शंभूः शान्तेर्भावयिता । मयोभूः सुखस्य भावयिता। तादृशः सन्नित्यन्वयः । हे हरिवर्ण हरिद्वर्ण स्वस्ति मा प्रचर यथा वान्तिरूपो विनाशो न भवति तथा मां प्रविश। किमर्थं क्रत्वादिसिद्ध्यर्थम्। दक्ष उत्साहः। हे राजन्मां वान्त्युपद्रवेण मा विबीभिषो विशेषेण मा भीषय। हृदयपुण्डरीकेऽवस्थितं मनो हार्दि । तच्च मनस्त्विषा त्वदीयया दीप्त्या मा वधीर्हिंसां मां कुरु।-मनसि हिंसारहिते सति वृषादयः सिध्यन्ति। वृषेन्द्रियम्। शुष्मो बलम्। आयुर्दीर्घायुः। वर्चः कान्तिः। हे सोम देव ते तव संबन्धि यत्प्रातःसवनं तस्य संबन्धी यो मधुमान्स इतरैरुपहूतोऽनुज्ञातः, तस्योपहूतस्याहमप्युपहूतो भक्षयामि। कीदृशस्य ते वसुमद्गणस्याष्टसंख्याका वसवो यस्मिन्गणे सोऽयं वसुमान्। तथाविधो गणो यस्य तव स त्वं वसुमद्गणस्तथाविधस्य। मतिविदः श्रद्धायुक्तानां यजमानानां मतिं वेत्तीति मतिवित्तस्य। कीदृशस्य प्रातःसवनस्य, गायत्रछन्दसो बहिष्पवमानादिषु मन्त्रेषु गायत्र्याख्यं छन्दो यस्य तद्गायत्रछन्दस्तस्य। इन्द्रपीतस्येन्द्रेण पीतः सोमो यस्मिन्सवने

( भक्षमन्त्राभिधानम् )

तदिन्द्रपीतं तस्य । नराशंस्सपीतस्य पितृपीतस्येति पदद्वयं नराशंसचमसभक्षण एव प्रयोक्तव्यं नान्यत्रेत्येकः पक्षः । सर्वत्र पठितव्यमित्यपरः पक्षः । नरैः शस्यन्त इति नराशंसाः पितृविशेषास्तैः पीतः सोमो यस्मिन्सवने तन्नराशंसपीतं तस्य । अयमेवार्थः पितृपीतस्येत्यनेन स्पष्टीकृतः । रुद्रवद्गणस्याऽऽदित्यवद्गणस्येत्येतावपि मन्त्रौ पूर्ववद्व्याख्येयौ । तत्रोभयत्र मन्द्रादिरनुषज्यते ॥

कल्पः—"भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति ते नाराशंसाः" इति ।

पाठस्तु—

आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य संगथे ।, इति ।

हे सोम त्वमाप्यायस्व सर्वतो वर्धस्व । ते तव वृष्णियं वीर्यं विश्वतः समेतु सर्वतः संगच्छताम् । त्वमपि वाजस्यान्नस्य संगथे संगमने निमित्तं भव ॥

कल्पः—"हिन्व मे गात्रा हरिव इति भक्षयित्वा नाभिदेशानभिमृशन्ते" इति ।

पाठस्तु—

हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति गाः ।, इति ।

हे हरिवो हरितवर्ण सोम मे गात्रा ममाङ्गानि हिन्व प्रीणय । मदीयान्गणान्पुत्रादिसमूहान्मा वितीतृषः सोमपाने तृष्णारहितान्मा कुरु । किंतु सर्वदा तदिच्छान्कुरु । किं च त्वं शिवो भूत्वा सप्तर्षीन्मूर्धच्छिद्रसप्तकावस्थितान्मदीयान्प्राणानुपतिष्ठस्व तर्पयेत्यर्थः । किंच मे मदीयां नाभिमतीत्य मा गा अधोद्वारेण मा निर्गच्छेत्यर्थः ॥

कल्पः—"समित्पाणय उन्नेतारं पुरस्कृत्याप्रतीक्षमायन्त्यपाम सोममिति मह्यीयां वदन्तः" इति ।

अतः पूर्वोक्ताः सर्वे मन्त्रा ऋतुग्रहानुवाकात्पूर्वं द्रष्टव्याः । अपाम सोमेत्ययं तु मन्त्रोऽवभृथाङ्गत्वादुरुं हि राजेत्यनुवाके प्रत्यस्तो वरुणस्य पाश इत्यस्मादुपरिष्टाद्द्रष्टव्यः ।

पाठस्तु—

अपाम सोममृता अभूमादर्श ज्यो-

तिरविदाम देवान् । किमस्मान्कृणव-
दरातिः किमु धूर्तिरमृत मर्त्यस्य ।, इति ।

वयं सर्वे सोममपाम तेन पीतेनामृता देवा अभूम । आशंसाद्योतनाय भूतार्थनिर्देशः । ज्योतिरादित्यस्वरूपमदर्श्म दृष्टवन्तो देवानिन्द्रादीनविदाम लब्धवन्तः । ईदृशानस्मानरातिः पापरूपः शत्रुः किं कृणवत्किं करिष्यति । मर्त्यस्य मनुष्यशरीरधारिणो या धूर्तिर्हिंसा सेयममृत किमु अमृतानस्मान्किं नाम करिष्यति । अथवा धूर्तिरमृत, अस्मद्विषया हिंसा स्वयमेव नष्टा । सा तादृशी नोऽस्मान्बाधत इति किमु वक्तव्यम् ॥

कल्पः—" यन्म आत्मनो मिन्दाऽभूदिति मिन्दयाऽऽहवनीयमुपतिष्ठन्ते " इति ।

पाठस्तु—

यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पु-
नराऽहार्जातवेदा विचर्षणिः ।, इति ।

मे मम ऋत्विजो यदङ्गमात्मनो मिन्दाऽभूत्स्वरूपान्मिन्दितं हिंसितमभूत्, अग्निस्तदङ्गं पुनराहाराहरतु । कीदृशोऽग्निर्जातवेदा जातमुत्पन्नं यज्ञच्छिद्रं वेत्तीति जातवेदाः । विचर्षणिस्तत्पुनः समाधातुं विचक्षणः ॥

तत्रैव विकल्पितं मन्त्रान्तरमाह—

पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः । पुनर्मे
अश्विना युवं चक्षुरा धत्तमक्ष्योः ।, इति ।

यज्ञे यदङ्गं न्यूनं भवति तेन यजमानस्यैव चक्षुर्हीयते । " यज्ञं पराभवन्तं यजमानोऽनु पराभवति " इति श्रुत्यन्तरात् । अस्मादयमग्निर्यज्ञाङ्गसमाधानेन यजमानाय मह्यमेव चक्षुः पुनर्दत्तवान् । तथैवेन्द्रो बृहस्पतिश्च यज्ञाङ्गं समाधाय मदीयं चक्षुः पुनर्दत्तवन्तौ । अश्विनौ युवामप्यक्ष्योर्मदीयाक्ष्णोश्चक्षुर्दर्शनसामर्थ्यमाधत्तम् ॥

कल्पः—" सर्वे हारियोजनं भक्षयन्तीष्टयजुषस्ते देव सोम " इति ।

पाठस्तु—

इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य

---

१ ख. °वन्तः । अतो दे° । २ ख. च. °ष्टते' इ° ।

**शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधु-
मत उपहूतस्योपहूतो भक्षयामि ।, इति ।**

हे सोम देव ते तव संबन्धिरसमुपहूतैरनुज्ञातैरनुज्ञातोऽहं भक्षयामि । कीदृशस्य ते, इष्टयजुष इष्टसाधनानि यागसाधनानि यजूंषि यस्य सोऽयमिष्टयजुस्तस्य । स्तुताः स्तोमाः सामावृत्तिलक्षणानि स्तोत्राणि यस्य सोऽयं स्तुतस्तोमस्तस्य । शस्तानि शंसितान्युक्थानि शस्त्राणि यस्य सोऽयं शस्तोक्थस्तस्य । हरिर्हरितवर्णः । सोऽस्यास्तीति हरिवांस्तस्य । इन्द्रेण पीतस्तस्य । मधु माधुर्यमस्यास्तीति मधुमांस्तस्य । अन्यैरनुज्ञात उपहूतस्तस्य ॥

कल्पः—“ आपूर्याः स्थाऽऽ मा पूरयतेत्युत्तरवेद्याः शेषान्युप्य ” इति ।

शेषानवशिष्टान्धानासोमभागान् ।

पाठस्तु—

**आपूर्याः स्थाऽऽ मा पूरयत प्रजया च धनेन च ।, इति ।**

हे धानाः सोमशेषा यूयमापूर्याः स्थ सर्वतः पूर्णाः स्थिताः[1] । अतो मां प्रजया च धनेन च सर्वतः पूरयत । यन्म आत्मन इत्यादयो मन्त्रा हरिरसि हारियोजन इत्यनुवाकान्ते द्रष्टव्याः ॥

कल्पः—“ सर्वे स्वं स्वं चमसमनून्यन्ते त्रींस्त्रीन्पुरोडाशशकलानुपवपन्त एतत्ते तत ये च त्वामन्वित्येतैः प्रतिमन्त्रम् ” इति ।

चमसमनून्यन्ते चमससमीपे ।

पाठस्तु—

**एतत्ते तत ये च त्वामन्वेतत्ते पिता-
मह प्रपितामह ये च त्वामन्वत्र
पितरो यथाभागं मन्दध्वम्, इति ।**

हे तताऽस्मत्पितरेतत्पुरोडाशशकलरूपं ते तवान्नं, ये चान्ये त्वामनुगतास्तेषामप्येतदन्नम् । पितामहेतिमन्त्रे ये च त्वामन्वित्युत्तरानुषङ्गः । प्रपितामहेति मन्त्र एतत्त इति पूर्वानुषङ्गः । हे पितरः सर्वेऽपि यूयमत्रास्मिन्कर्मणि यथाभागं स्वस्वभागानुसारेण मन्दध्वं हृष्टा भवत ॥

कल्पः—“ नमो वः पितरो रसायेति नमस्काराञ्जपति ” इति ।

पाठस्तु—

---

1 ख. स्थिता भवत । अ° ।

नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम्, इति।

हे पितरो युष्माकं यो रसः सारस्तस्मै नमः । एवमुत्तरत्र । शुष्माय बलाय । जीवाय जीवात्मने । स्वधायै भवदीयहविर्दात्र्यै । मन्यवे क्रोधाय । घोराय शिक्षारूपोग्रकार्याय । हे पितरो युष्मभ्यमपि नमोऽस्तु । ये यूयमन्यैः सहैतस्मिन्पितृलोके स्थ ते युष्माननुवर्तन्ताम् । ये यूयमस्मिँल्लोके स्थ ते यूयं मामनुवर्तध्वम् । अन्यैर्बहुभिः सह ये यूयमेतस्मिन्पितृलोके स्थ तेषामन्येषां वासिष्ठा वासयितृतमा यूयं भूयास्त । ये च मनुष्या अस्मिँल्लोके मया सह स्थितास्तेषां मनुष्याणां वासयितृतमो भूयासम् ॥

कल्पः—" प्रजापते न त्वदेतानीति प्राजापत्ययर्चा वितिष्ठन्ते " इति ।
वियुज्य गच्छेयुरित्यर्थः ।

पाठस्तु—

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ।, इति ।

हे प्रजापते त्वदन्यः कोऽपि पुरुष उत्पन्नानि तान्येतानि विश्वानि न परिबभूव परिभवितुं समर्थो नाभूत् । परिभवः सृष्टेरप्युपलक्षणम् । सृष्टिसंहारयोः शक्त इत्यर्थः । अतस्ते तव वयं यत्कामा जुहुमस्तत्फलमस्माकमस्तु । वयं धनानां पतयः स्याम । एतच्चे ततेत्याद्या मन्त्रा वाममद्य सवितरित्यस्मादनुवाकात्पूर्वं द्रष्टव्याः ॥

देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमसि—

---

१ ख. घ. ङ. च. शिलारू° ।

( भक्षमन्त्राभिधानम् )

कल्पः—“ देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्याऽऽत्मकृतस्यैनसोऽवयजनमस्यन्यकृतस्यैनसोऽवयजनमस्येनस एनसोऽवयजनमसि स्वाहेत्याहवनीये षट्शकलान्यभ्याधाय” इति।

अत्र शकलानामभ्याधातारः सर्वेऽपि हारियोजनभक्षिणः। आत्मकृतस्येत्यादिमन्त्रत्रयं[1] शाखान्तरगतम्। हे शकल देवविषये यदस्माभिः कृतमेनस्तस्यावयजनं विनाशकमसि। एवं मनुष्यपितृमन्त्रयोर्योज्यम्॥

कल्पः—“ अपरेण चात्वालमास्तावे वा प्रत्यञ्चश्चमसिनः स्वं स्वं चमसरसमवघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव त इति ” इति।

पाठस्तु—

अप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसानिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि॥, इति॥

हे सोम देव प्रक्षालनाभिषवादिविशेषणोपेतस्य ते संबन्धी यो भक्षणभागोऽश्वसनिरश्वप्रदो यश्च गोसनिर्गोप्रदस्त्वदीयस्य तस्य भक्षभागस्य पितृभिरपि स्वभक्षत्वेन स्वीकृतस्येतरैरनुज्ञातस्यांशमन्यैरनुज्ञातोऽहमाघ्राणेन भक्षयामि। देवकृतस्याप्सु धौतस्येत्येते मन्त्रा हरिरसीत्येतस्मादनुवाकादूर्ध्वं द्रष्टव्याः॥

अथ विनियोगसंग्रहः—

भक्ष भक्ष्यं(क्षं) प्रतीक्ष्याभ्वि गृहीत्वा नृ च वीक्षते।
मन्द्रेति भक्षयेत्त्रेधा वसुरुद्रादिभेदतः॥ १॥
आप्या भक्षितमाप्याय्य हिन्व नाभ्यभिमर्शनम्।
अपाम कृत्वाऽवभृथं संमायात्यप्रतीक्षणम्॥ २॥
यन्मे पुनर्भजेदग्निमिष्टायाद्धारियोजनम्।
आपू वेद्यां शेषवाप एतत्ते त्रिभिरावपेत्॥ ३॥
पुरोडाशांशकान्भूमौ नमश्चमसिनां जपः।
प्रजा चमसिनो यान्ति देववद्धौ समित्त्रयम्॥
अप्सु जिघ्रन्ति तच्छेषं द्वाविंशतिरिहोदिताः॥ ४॥

---

१ ख. घ. ङ. च. 'थं ग'।

अथ मीमांसा ।

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणयोग्युत ।
ग्रहणादौ यथालिङ्गं विभज्य व्यवतिष्ठते ॥
अविधेर्ग्रहणादीनां भक्षणे निखिलस्तु सः ।
अर्थाक्षिप्तेषु तेष्वेत्र यथालिङ्गं विभज्यते ॥

ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितम्—" अभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति " इति । तस्मिन्भक्षणे ग्रहणावेक्षणनिगरणसम्यग्जरणरूपाश्चत्वारो व्यापाराः सन्ति । मन्त्राश्च भक्षेहीत्याद्यनुवाके समाम्नाताः । तत्र भक्षणं यथा साक्षाचोदितं न तथा ग्रहणावेक्षणनिगरणजरणानि चोदितानि । न चाविहितेषु मन्त्रा विनियोगमर्हन्ति । समाख्या तु भक्षानुवाक इत्येवंरूपा भक्षणमात्रविषया । तस्मात्कृत्स्नस्याप्यनुवाकस्य भक्षण एव विनियोग इति प्राप्ते ब्रूमः—अविहितान्यपि ग्रहणादीन्यर्थाक्षिप्तानि तद्व्यतिरेकेण भक्षणासंभवात् । अतस्तेष्वप्यनुवाको यथालिङ्गं विभज्य विनियोक्तव्यः । तत्र भक्षेहीत्यारभ्याश्विनोस्त्वा बाहुभ्यां सघ्यासमित्यन्तो ग्रहणं प्रकाशयति । एहीत्याह्वानस्य बाहुभ्यां स्वी करवाणीत्येतस्य च दर्शनात् । नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषमित्ययं भागोऽवेक्षणं प्रकाशयति । शोभनचक्षुरहं मनुष्येषु प्रख्यातं त्वामवेक्षिषीयेत्यभिधानात् । हिन्व मे गात्रा इत्यादिर्मा मेऽवाङ्नाभिमति गा इत्यन्तः सम्यग्जरणं प्रकाशयति । गात्रप्रीणनेनाधोभागे नाभेरतिक्रमनिषेधेन च तदवगमात् । जरणं नार्थाक्षिप्तं तेन विनाऽपि भक्षणसिद्धेरिति चेत् । न, जरणपर्यन्तस्यैव सार्थकभक्षणत्वात् । न च जरणे पुरुषव्यापाराभावः सम्यगुपवेशनादेर्भक्ष ( जेर )णार्थत्वात् । मन्द्राऽभिभूतिरित्यादिर्भक्षयामीत्यन्तो भक्षणं प्रकाशयति । तस्माल्लिङ्गेन समाख्यां बाधित्वा विभज्य विनियोगः कर्तव्यः ॥

तत्रैवान्यच्चिन्तितम्—

" मन्द्रेति वसुमद्गेति द्वयं तर्पणभक्षयोः ।
विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे ॥
लिङ्गाद्विभागो नैवं नो तृप्तिर्भक्षणतोऽन्यतः ।
लिङ्गस्यासंभवे वाक्यशेषात्सर्वोऽस्तु भक्षणे ॥ "

---

१ क. घ. ङ. च. अर्थात्तेष्व' । २ ख. घ. ङ. च. 'त्याह्यातस्य । ३ ख. घ. ङ. च. 'वेक्ष इत्य' ।

( भक्षमन्त्राभिधानम् )

मन्द्राऽभिभूतिरित्यादिर्जुषाणा सोमस्य तृप्यन्त्वित्यन्तो भागो हृष्टाया अरुचिमभिभवन्त्याः सोमं सेवमानाया जिह्वायास्तृप्तिं प्रकाशयति। वसुमद्गणस्येत्यादिर्भक्षयामीत्यन्तो भागो भक्षणप्रकाशकः। तत्र पूर्ववल्लिङ्गेन विभज्य विनियोग इति चेन्मैवम्। न खलु तृप्तिर्भक्षणादन्येन व्यापारेण जायते। किं तर्हि भक्षणानुनिष्पादिनी हि सा। तथा सति कस्मिन्व्यापारे तृप्तिप्रकाशको भागो विनियुज्येत। ततो लिङ्गेन विनियोगासंभवाद्भक्षणमन्त्रवाक्यस्य शेषस्तृप्तिप्रकाशकभागो भविष्यति। उपयुक्तश्च तत्रायं भागस्तृप्तिसहितभक्षप्रकाशेन पुरुषोत्साहजनकत्वात्। तस्मान्मन्द्रादिः सर्वो भक्षणे विनियुज्यते॥

तत्रैवान्यच्चिन्तितम्—

“ इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके।
केवलेऽन्यत्र चोहाद्वा सर्वत्रोत यथाश्रुतम्॥
ऐन्द्र एव समर्थत्वात्तूष्णीमेवान्यभक्षणम्।
ऊहो वाऽन्येषु कर्मैक्येऽप्यस्त्यूहो भक्षभेदतः॥
इन्द्रेण यस्मिन्सवने सोमः पीत इतीरणात्।
सवनस्थेषु सर्वेषु मन्त्रोऽनूहेन पठ्यते॥ ”

भक्षमन्त्रे कश्चिदंश इन्द्रपीतस्येत्येवंविधः श्रूयते। तत्रेन्द्रेण पीतस्य सोमस्य शेषं भक्षयामीत्यर्थो भवति। तथा सत्यस्य मन्त्रस्येन्द्रप्रदानशेषभक्षण एव समर्थत्वात्तत्रैवायं मन्त्रो विनियुज्यते न तु मैत्रावरुणादिशेषभक्षणे। तस्मादमन्त्रकमेव तद्भक्षणमित्येकः पूर्वपक्षः। इन्द्रपीतस्येतिपदस्यासमर्थत्वेऽपि मित्रावरुणपीतस्येत्येवमूहे सति सामर्थ्यं भविष्यति। नन्वाग्नेययागस्य प्रकृतित्वात्तद्गतस्याग्नये जुष्टमिति मन्त्रस्य विकृतौ सौर्यचरौ सूर्याय जुष्टमित्यूहः क्रियते। इह तु कर्मैक्यान्नोह इति चेत्। न, कर्मभेद इव भक्षभेदेऽप्यूहितुं शक्यत्वादिति द्वितीयः पूर्वपक्षः। इन्द्रपीतस्येत्यत्र बहुव्रीहिर्द्रष्टव्यः। तत्पुरुषत्वे समासस्येति सूत्रेणान्तोदात्तत्वप्रसङ्गात्। आद्युदात्तं चैतत्पदमाम्नातम्। इन्द्रप्रातिपदिकं तु स्वत आद्युदात्तम्। तथा सति बहुव्रीहौ प्रकृत्या पूर्वपदमिति सूत्रेण पूर्वपदप्रकृतिस्वरविधानात्समस्तं पदमप्याद्युदात्तमेव संपद्यते। इन्द्रेण पीतः सोमो यस्मिन्सवन इति विग्रहात्सवनपरत्वे सत्यैन्द्रभक्षण एवेति नियन्तुमसमर्थत्वात्सर्वभक्षणेष्वनूहेनायं मन्त्रः प्रयोक्तव्यः। विशेष्यं च सवनं तस्मिन्वाक्य एवमाम्नातम्—प्रातःसवनस्य गायत्रछन्दस इन्द्रपीतस्येति। तस्मादन्त्यः पक्षो राद्धान्तः।

---

१ क. घ. ङ. च 'मनभि'। २ ख. घ. ङ. 'प्यस्तूहो। ३ क. घ. ङ. 'कृतत्वा'।

तत्रैवान्यच्चिन्तितम्—

" ऊहपक्षे यदूह्यं तच्चिन्त्यते न्यायपञ्चके ।
इन्द्रे हुतेऽथ तच्छेषे होत्रकैश्चमसस्थिते ॥
सोमोऽभ्युन्नीय देवेभ्यो हुत्वा संभक्ष्यते तदा ।
इन्द्रो न लक्ष्यो लक्ष्यो वा न शेषेऽन्यार्थता यतः ॥
उन्नीत एव संबद्धो न पूर्वो देवतान्तरैः ।
अत इन्द्रस्य सिद्ध्यर्थं लक्ष्योऽसावितरैः सह ॥ "

पूर्वाधिकरणे योऽयमूहरूपो द्वितीयः पूर्वः पक्षः, तत्प्रसङ्गात्कृत्वाचिन्तारूपेण न्यायपञ्चकेनोहविषयश्चिन्त्यते । मैत्रावरुणब्राह्मणाच्छंसिपोत्रादय ऋत्विजो होत्रकाः, तेषां सन्ति चमसाः । पात्रविशेषस्थिताः सोमरसाश्चमसाः, तैर्वषट्कारानुवषट्कारयोर्होतव्यम् । तेषां चमसानामैन्द्रत्वाद्धोतुर्वषट्कारे प्रथममिन्द्रो हुतः । अनन्तरं चमसस्थे हुतशेषे पुनः सोमान्तरमभ्युन्नीय तेन देवतान्तरेभ्यो होत्रका जुह्वति । तत्र मैत्रावरुणो मित्रं वयं हवामह इति मन्त्रेण मित्रावरुणौ यजति । ब्राह्मणाच्छंसी—इन्द्र त्वा वृषभं वयमिति मन्त्रेणेन्द्रं यजति । पोता मरुतो यस्य हि क्षय इति मन्त्रेण मरुतो यजति । एवं हुत्वा पश्चात्सोमो भक्ष्यते । तस्मिन्भक्ष्यमाणे मित्रावरुणपीतस्येति मन्त्र ऊहनीयः । तदानीमिन्द्रमित्रावरुणपीतस्येत्येवं मित्रावरुणाभ्यां सह नेन्द्र उपलक्षणीयः । कुतः । शेषस्यान्यार्थत्वात् । इन्द्रशेषे पुनरभ्युन्नीतस्य तेन शेषेण सह मित्रावरुणाद्यर्थत्वे सति तस्येन्द्रसंबन्धराहित्यात्पुनरुन्नीतस्यैवान्यार्थत्वं न पूर्वशेषस्येति चेन्न । उन्नयनकाले मित्रावरुणाद्यर्थोऽयमितिसंकल्पाभावात् । प्रदानकाले तु पूर्वशेषेण सहैव मित्रावरुणादिभ्यः प्रदीयते । तस्मादिन्द्रसंबन्धराहित्यान्नेन्द्रो लक्षणीय इति प्राप्ते ब्रूमः—मा भूत्संकल्पः । तथाऽप्युन्नयनं करिष्यमाणं मैत्रावरुणादियागार्थमेव न तु तस्य पूर्वानुष्ठितेन्द्रयागार्थत्वं संभवति । तस्मादुन्नीते मैत्रावरुणादिसंबन्धः शेष इन्द्रसंबन्ध एवेत्युभयभक्षणे मित्रावरुणादिभिः सहेन्द्रोऽप्युपलक्षणीयः ।

तत्रैवान्यच्चिन्तितम्—

" द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम् ।
स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति ॥

१ ख. च. ऐन्द्रे । २ ख. च. °य दे° । ३ ख. °का अनुवषट्कारे जु° । ४ ख. च. °तः । इ° । ५ ख. च. तस्य शेषस्ये° । ६ ख. च. °बन्धशे° ।

(भक्षमन्त्राभिधानम्)

तद्भक्षणे द्विदेवाः किं सार्धं पात्नीवतेन ते।
उपलक्ष्या न वा पूर्वन्यायेनास्तूपलक्षणम्॥
अन्य आग्रयणात्पात्नीवतो नैतस्य विद्यते।
आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते॥"

ऐन्द्रवायवादयो द्विदेवत्याः। तेषां शेष आदित्यस्थालीमागच्छति। पुनरपि तस्याः स्थाल्या आग्रयणस्थालीमागच्छति। तस्या आग्रयणस्थाल्याः पात्नीवतो गृह्यते। तस्य पात्नीवतस्य भक्षण इन्द्रवाय्वादय उपलक्षणीयाः। पूर्वाधिकरणे यथा मित्रावरुणादिभिः सहेन्द्र उपलक्षितस्तद्वदिति प्राप्ते ब्रूमः— यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णातीत्याग्रयणपात्रस्यापादानत्वश्रवणात्ततो निःसृतस्य सोमरसस्य तत्संबन्धे ज्ञाते सति पश्चात्पात्नीवद्देवतायै ग्रहणं भवति। तथा सत्यत्यन्तभिन्नस्य पात्नीवतस्य पूर्वदेवेष्वाकाङ्क्षा नास्ति। पुनरभ्युन्नीतस्तु सोम ऐन्द्रशेषेण संसृष्टः। तस्य संसृष्टस्य भक्षणे[2] मित्रावरुणादीनामिवेन्द्रस्यापि संबन्धो नापैतीति वैषम्यम्। तस्मात्पात्नीवतभक्षण इन्द्रवाय्वादयो नोपलक्षणीयाः।

तत्रैवान्यच्चिन्तितम्—

"सह पत्नीवता त्वष्टा तद्ग्रहे[3] लक्ष्यते न वा।
सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात्सोऽपि लक्ष्यते॥
सहत्वमात्रं[4] त्वष्टुः स्यान्न पातृत्वमशब्दनात्।
चोदनायामभानाच्च[5] न देवोऽतो न लक्ष्यते॥"

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रेण पत्नीवता सह त्वष्टाऽप्युपलक्षणीयः। कुतः। त्वष्टुरपि तद्देवत्वात्। तच्च होममन्त्रादवगतम्। अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्यस्मिन्मन्त्रे[6] पत्नीवन्तमग्निं प्लुतान्तेन पदेन संबोध्य तस्य त्वष्ट्रा देवेन सह पिबेत्यभिधानात्पातृत्वेन पत्नीवत इव त्वष्टुस्तद्देवत्वम्। ततः पत्नीवत्त्वष्ट्रपीतस्येत्युपलक्षणमिति प्राप्ते ब्रूमः—पानकाले सहावस्थानमात्रं त्वष्टुः सजूरित्यनेन पदेन प्रतीयते न तु पातृत्वमसंबोधितस्य त्वष्टुः पिबेत्यनेन सामानाधिकरण्याभावात्। न च पातृसहभावमात्रेण पातृत्वं सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र पुत्राणां वोढृत्वादर्शनात्। आस्तां मन्त्रविधिबलात्त्वष्टुर्देवतात्वमिति चेन्न। पात्नीवतमाग्रयणाद्गृह्णातीत्यत्र त्वष्टुरप्रतीतेः। तस्माददेवता त्वष्टा नोपलक्षणीयः।

---

१ ख. घ. ङ. च. गृह्यते। २ ख. च. °णे मैत्रा°। ३ ख. घ. ङ. च. तद्गुणे लक्षणेन च। स°। ४ क. घ. ङ. °त्वभावं त्व°। ५ ख. च. °भावाच्च। ६ ख. घ. ङ. च. °न्त्रे पात्नी°।

तत्रैवान्यच्चिन्तितम्—

" पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी ।
लक्ष्या न वा याज्ययोक्तेर्देवत्वादुपलक्षणम् ॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना ।
अतोऽग्नेरेव देवत्वान्नान्येषामुपलक्षणम् ॥ "

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं संबोध्य पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान्मादयेत्यभिधीयते—" पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व " इति । अनुष्वधमनुप्रदानम् । अत्र हूयमानेन सोमरसेन मादनीयत्वात्त्रयस्त्रिंशतां तद्देवत्वम् । अतस्तेऽपि भक्षणे लक्षणीया इति चेन्न । यजमानेन मादनीयस्याग्नेरेव देवतात्वात् । त्रयस्त्रिंशद्देवतास्तु वह्निना माद्यन्त इति न तेषामत्र देवत्वम् । तस्मान्नोपलक्षणम् ।

तत्रैवान्यच्चिन्तितम्—

" सोमस्याग्न इति प्रोक्ताऽनुवषट्कारदेवता ।
लक्ष्या न वा देवतात्वाल्लक्ष्या त्रिंशद्विलक्षणा ॥
प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः ।
उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तथा ॥ "

सोमस्याग्ने वीहीत्यनुयजतीति श्रूयते । तत्रानुवषट्कारस्य मान्त्रवर्णिकोऽग्निर्देवता । न च त्रयस्त्रिंशतामिव वह्नेरदेवतात्वं मन्त्रे वह्निं संबोध्य सोमपातृत्वाभिधानात् । तस्मादग्निर्लक्षणीय इति चेन्न । प्रकृतावलक्षितत्वात् । ऐन्द्रचमसः प्रकृतिरितरे विकृतिरूपाः । तथा हि । ऐन्द्रः सोमो गृह्यते मीयते च । तेनैन्द्रेष्वेव सोमः । अनैन्द्रेषु सोम एव नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव । अनैन्द्रा अधर्मकाः । धर्माकाङ्क्षायां चोदकेन सधर्मका इति विकृतित्वम् । गृह्यमाणस्य मीयमानस्य च सोमस्यैन्द्रत्वमिन्द्राय त्वा वसुमत इत्यादेर्ग्रहणमन्त्रादवगम्यते । तस्य प्रकृतिभूतस्येन्द्रचमसस्य भक्षणेऽग्निरनुवषट्कारदेवो नोपलक्षितः । कुतः । ग्रहणे तदुद्देशाभावात् । इन्द्रस्तूद्देश्यत्वादुपलक्षितः । एवं विकृतावप्युद्देश्यदेवानामेवोपलक्षणं न्याय्यम् । तस्मादग्निर्नोपलक्ष्यः ।

तत्रैवान्यच्चिन्तितम्—

" अमन्त्रप(भ)क्षमाश्रित्य कृत्वाचिन्तान्तरत्रेयम् ।
ऊहोऽस्ति नो वा सोऽस्त्यत्र विकृतौ तस्य संभवात् ॥

१ घ. ङ. 'क्ष्या तथा या' । २ क. घ. ङ. च. 'तो च देव' । ३ ख. ऐन्द्रस्थः सो' । ४ ख. घ. ङ. च. 'णेन त' । ५ ख. च. 'त्रये । ऊ' । ६ क. घ. ङ. जुहोति ।

( भक्षमन्त्राभिधानम् )

सोमेनेति विधेः[1] सर्वप्रदानेषु समत्वतः।
अविकारेष्वनूहोऽतो नैन्द्रे निर्मन्त्रभक्षणम् ॥"

उक्ताभ्यः पञ्चभ्यः कृत्वाचिन्ताभ्यः पूर्वस्मिन्नधिकरणे[2] योऽयमनैन्द्रेष्वमन्त्रभक्षणमिति प्रथमः पूर्वः पक्षस्तमेव मनसि निधाय पुनः कृत्वाचिन्तानां त्रयमभिधीयते। अनैन्द्रेषूक्तरीत्या विकृतित्वेनोहसंभवादस्त्यूह इति चेन्न। अनैन्द्राणां विकृतित्वासंभवात्। सोमेन यजेतेत्युत्पत्तिश्रुतः सोमः कर्मणोऽङ्गं न तु प्रदानविशेषस्य कस्यचिदङ्गम्। स एव च सोमः सर्वप्रदानेष्वभ्यस्यत[3] इति सर्वाणि समप्रधानानि। अत ऐन्द्राणामनैन्द्राणां च प्रकृतिविकृतिभावासंभवान्नास्त्यत्रोहः। इन्द्राय त्वा वसुमत इत्यादिमन्त्रो लिङ्गादैन्द्रविषयोऽस्तु। नैतावता प्रकृतिविकृतिभावः सिध्यति। तस्माद्भक्षमन्त्रस्य लिङ्गादैन्द्रमात्रविषयत्वादनैन्द्रेष्वमन्त्रभक्षः।

तत्रैवान्यच्चिन्तितम्—

"समन्त्रकममन्त्रं वा स्यादैन्द्राग्नादिभक्षणम्।
ऐन्द्राग्नेऽपीन्द्रपीतत्वसंभवात्तत्समन्त्रकम् ॥
न पानमशरीरस्य युक्तं दानं तु मिश्रितम्[4]।
मन्त्रोऽयं तु न मिश्रार्हस्तस्मादेतदमन्त्रकम्[5] ॥"

यदेतदैन्द्राग्नं गृह्णातीति विहितं[6] शेषभक्षणं तत्रेन्द्राग्निभ्यां पीतः सोम इन्द्रेणापि पीतो भवतीति लिङ्गेनैव विनियोगात्समन्त्रकं भक्षणमिति चेन्नैवम्। नवमाध्याये वक्ष्यमाणदेवताधिकरणन्यायेनाशरीरस्येन्द्रस्य पानासंभवात्। अथ पीतशब्देन दानं विवक्ष्येत तदानीमिन्द्राय दत्तः सोम इति मन्त्रार्थो भवति। न चात्र यजमान इन्द्रमुद्दिश्य ददौ किं त्विन्द्राग्नी उद्दिश्य। तस्माद्दानं मिश्रविषयं मन्त्रस्तु न मिश्रविषय इत्यमन्त्रकमत्र भक्षणम्।

अत्रैवान्यच्चिन्तितम्—

"ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽथवेतरैः।
छन्दोभिरपि युक्ते स्यादाद्यो मन्त्रे तथोक्तितः ॥
द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न क्वचित्।
नानाछन्दस्यैन्द्र एव कृत्वाचिन्तेत्थमीरिता ॥
सवनार्थेन्द्रपीतोक्तिरित्युद्घाटनमीरितम्।
तेन सर्वप्रदानेषु मन्त्रपाठो यथास्थितः ॥"

१ ख. घ. ङ. च. विधिः। २ ख. च. अधिकारेऽप्यनू°। ३ ख. घ. ङ. च. °ष्वध्यस्य°। ४ ख. च. मिश्रगम्। ५ ख. घ. ङ. च. °श्रार्थस्त°। ६ क. ख. घ. ङ. च. विहिते।

तस्मिन्नेव भक्षमन्त्रे गायत्रछन्दस इन्द्रपीतस्येति श्रूयते। गायत्रमेव च्छन्दो यस्येति मन्त्रपदे समासाभिधानादेकच्छन्दोयुक्त ऐन्द्रे सोमे भक्षणमन्त्र इति चेन्मैवम्। बहुच्छन्दोयुक्तेऽपि बहुव्रीहेः समानत्वादेवकारं परित्यज्य गायत्रं छन्दो यस्येतिविग्रहसंभवात्। एकच्छन्दस्कस्तु सोमो न क्वाप्यस्ति। तस्मान्नानाछन्दस्के सोम ऐन्द्रप्रदान एव मन्त्रो नान्यत्र। तदेवं क्त्वाचिन्तात्रयं समापितम्। द्विविधा क्त्वाचिन्तोद्घाटना तु प्रागेव सिद्धान्तिना दर्शिता॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके
पञ्चमोऽनुवाकः॥ ५॥

( अथ तृतीयाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः। )

महीनां पयोऽसि विश्वेषां देवानां तनूर्ऋध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि विष्णोर्हृदयमस्येकमिष विष्णुस्त्वाऽनु वि चक्रमे भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमा गम्याज्ज्योतिरसि वैश्वानरं पृश्निये दुग्धं यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः। तावन्तमिन्द्र ते (१) ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतम्। यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत्स्कन्देद्यजमानः प्रमायुकः स्यात्पशवो वै

१ क. ख. घ. ङ. च. °मे न भ°।

( पृषदाज्याभिधानम् )

पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति प्राणो वै पृषदाज्यं प्राणो वै (२) एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यश्वमवं घ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः प्राणं निर्मिमीते वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोति ( ३ ) ॥

( ते पृषदाज्यं प्राणो वै योनेः प्राणं द्वाविंꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः । )

---

महीनाम् । पयः । असि । विश्वेषाम् । देवा-

नाम् । तनूः । ऋध्यासम् । अद्य । पृषतीनाम् । ग्रहम् । पृषतीनाम् । ग्रहः । असि । विष्णोः । हृदयम् । असि । एकम् । इष । विष्णुः । त्वा । अनु । वीति । चक्रमे । भूतिः । दध्ना । घृतेन । वर्धताम् । तस्य । मा । इष्टस्य । वीतस्य । द्रविणम् । एति । गम्यात् । ज्योतिः । असि । वैश्वानरम् । पृश्नियै । दुग्धम् । यावती इति । द्यावापृथिवी इति द्यावा—पृथिवी । महित्वेति महि—त्वा । यावत् । च । सप्त । सिन्धवः । वितस्थुरिति वि—तस्थुः । तावन्तम् । इन्द्र । ते ( १ ) । ग्रहम् । सह । ऊर्जा । गृह्णामि । अस्तृतम् । यत् । कृष्णशकुन इति कृष्ण—शकुनः । पृषदाज्यमिति पृषत्—आज्यम् । अवमृशेदित्यव—मृशेत् । शूद्राः । अस्य । प्रमायुका इति प्र—मायुकाः । स्युः । यत् । श्वा । अवमृशेदित्यव—मृशेत् । चतुष्पाद इति चतुः—पादः । अस्य । पशवः । प्रमायुका इति प्र—मायुकाः । स्युः । यत् । स्कन्देत् । यजमानः । प्रमायुक इति प्र—मायुकः । स्यात् । पशवः । वै । पृषदाज्यमिति पृषत्—आज्यम् । पशवः । वै । एतस्य । स्कन्दन्ति । यस्य । पृषदाज्यमिति पृषत्—आज्यम् । स्कन्दति । यत् । पृष-

दाज्यमिति पृषत्—आज्यम् । पुनः । गृह्णाति । पशून् । एव । अस्मै । पुनः । गृह्णाति । प्राण इति प्र—अनः । वै । पृषदाज्यमिति पृषत्—आज्यम् । प्राण इति प्र—अनः । वै (२) । एतस्य । स्कन्दति । यस्य । पृषदाज्यमिति पृषत्—आज्यम् । स्कन्दति । यत् । पृषदाज्यमिति पृषत्—आज्यम् । पुनः । गृह्णाति । प्राणमिति प्र—अनम् । एव । अस्मै । पुनः । गृह्णाति । हिरण्यम् । अवधायेत्यव—धाय । गृह्णाति । अमृतम् । वै । हिरण्यम् । प्राण इति प्र—अनः । पृषदाज्यमिति पृषत्—आज्यम् । अमृतम् । एव । अस्य । प्राण इति प्र—अने । दधाति । शत-मानमिति शत—मानम् । भवति । शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अश्वम् । अवेति । घ्रापयति । प्राजापत्य इति प्राजा—पत्यः । वै । अश्वः । प्राजापत्य इति प्राजा—पत्यः । प्राण इति प्र—अनः । स्वात् । एव । अस्मै । योनेः । प्राणमिति प्र—अनम् । निरिति । मिमीते । वीति । वै । एतस्य । यज्ञः । छिद्यते । यस्य । पृषदाज्यमिति पृषत्—आज्यम् । स्कन्दति ।

वैष्णव्या । ऋचा । पुनः । गृह्णाति । यज्ञः । वै । विष्णुः । यज्ञेन । एव । यज्ञम् । समिति । तनोति(३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः )

---

अनुवाके पञ्चमे तु भक्षमन्त्रा उदीरिताः ॥

अथ षष्ठे पृषदाज्यमुच्यते ।

कल्पः—" आज्यग्रहणकाले चतुर्जुह्वां गृह्णाति चतुरुपभृति दधन्याज्यमानीय महीनां पयोऽसीति पृषदाज्यधान्यां पञ्चगृहीतं पृषदाज्यम् " इति ।

पाठस्तु—

महीनां पयोऽसि विश्वेषां देवानां तनूर्ऋध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि विष्णोर्हृदयमस्येकमिष विष्णुस्त्वाऽनु वि चक्रमे भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमा गम्याज्ज्योतिरसि वैश्वानरं पृश्निये दुग्धम्, इति ।

हे पृषदाज्य त्वं महीनां गवां पयोऽसि । विश्वेषां सर्वेषां देवानां तनूरसि शरीरस्थितिहेतुत्वात् । पृषत्यो मरुतामश्वाः । अद्यास्मिन्दिने पृषतीनां ग्रहस्थानीयं त्वामृध्यासं वर्धयामि । त्वं पृषतीनां ग्रहोऽसि ग्रहस्थानीयमसि । विष्णोर्यज्ञस्य हृदयं प्रियमसि । हे इष सर्वैर्देवैरिष्यमाण विष्णुर्यज्ञस्त्वामेकं मुख्यं विचक्रमे विशेषेण स्वीकृतवान् । अत्रत्येन घृतेन दध्ना च तव भूतिर्माहात्म्यं वर्धताम् । तस्य तादृशस्येष्टस्य देवेभ्यो हुतस्य वीतस्य देवैर्भक्षितस्य च यद्द्रविणं फलमस्ति तन्मां प्रत्यागम्यादागच्छतु । त्वं वैश्वानरं ज्योतिरसि विश्वेषां नराणां हितस्य भासकमसि । पृश्नियै दुग्धमसि श्वेतवर्णाया गोः क्षीरमसि । अस्य च पृषदाज्यस्य पश्वनूयाजार्थत्वादग्नीषोमीयपशुप्रपाठके पृथिव्यै त्वाऽन्तरिक्षाय त्वेत्येतस्मादनुवाकात्पूर्वमयं मन्त्रो द्रष्टव्यः ॥

( पृषदाज्याभिधानम् )

कल्पः—“ आग्नीध्रे प्रतिप्रस्थाता दधिघर्मं गृह्णात्यौदुम्बर्या॰ स्रुच्युपस्तीर्य यावती द्यावापृथिवी इति दधि गृहीत्वाऽभिघार्य ” इति।

पाठस्तु—

यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः। तावन्तमिन्द्र ते ग्रह॰ सहोर्जा गृह्णाम्यस्तृतम्।, इति।

सप्त सिन्धवः समुद्राः। ते च भागवतस्य पञ्चमस्कन्धे स्मर्यन्ते—क्षारोदेक्षुरसोदसुरोदघृतोददधिमण्डोदक्षीरोदशुद्धोदाः सप्त जलधयः। हे इन्द्र द्यावापृथिवी द्यावापृथिव्यौ महित्वा स्वकीयेन महिम्ना यावती यावत्यौ यत्परिमाणे वर्तेते। किं च सप्त सिन्धवो वा यावद्वितस्थुर्यावन्तं कालं स्थितास्तावन्तं ग्रहं गृह्णामि सर्वस्मिन्देशे सर्वस्मिन्काले त्वदीयं ग्रहमूर्जा सारेण सहास्तृतमविनाशितं यथा भवति तथा गृह्णामि। सोऽयं मन्त्रो ग्रहप्रपाठक इन्द्र मरुत्व इत्यस्मादनुवाकादूर्ध्वं द्रष्टव्यः॥

यदुक्तं सूत्रकारेण—“ पृषदाज्यं स्कन्नमभिमन्त्र्यापोऽभ्यवहृत्य निर्णिज्य स्रुच॰ शतमानं हिरण्यं स्रुच्यवधायेदं विष्णुर्विचक्रम इत्यन्यत्पृषदाज्यं गृहीत्वाऽश्वेनावघ्राप्याऽऽयतने सादयेत् ” इति।

तत्र पुनर्ग्रहणं विधत्ते—

यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत्स्कन्देद्यजमानः प्रमायुकः स्यात्पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्य॰ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति, इति।

पृषद्भिर्दधिबिन्दुभिर्मिश्रमाज्यं पृषदाज्यं तस्य पक्षिस्पर्शे श्वस्पर्शे भूमिपतनेन विनाशे च पुनर्ग्रहणं प्रायश्चित्तं तेन पशुविनाशो न भवति॥

तदेतत्पुनर्ग्रहणं पशुविनाशदोषपरिहारेण प्रशस्य प्राणविनाशदोषपरिहारेणापि प्रशंसति—

प्राणो वै पृषदाज्यं प्राणो वा एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति, इति ॥

ग्रहणपात्रे हिरण्यस्य प्रक्षेपं तत्परिमाणं च क्रमेण विधत्ते—

हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति, इति ॥

गृहीतस्य पृषदाज्यस्याश्वमुखस्पर्शनं विधत्ते—

अश्वमव घ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः प्राणं निर्मिमीते, इति ।

अश्वस्य प्रजापत्यक्षिजन्यत्वात्प्राणस्य च स प्राणमसृजतेत्यादिश्रुतौ प्रजापतिसृष्टत्वाभिधानाच्च तयोरेककार्यत्वे सति प्राणस्य स्वकीययोनिरूपादश्वान्निर्माणं सिध्यति ॥

पृषदाज्यस्य पुनर्ग्रहणे विष्णो त्वं नो अन्तम इति मन्त्रं विधत्ते—

वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोति॥, इति ॥

विष्णो त्वं न इति मन्त्रो जुष्टो वाच इत्यनुवाके व्याख्यातः । आपस्तम्बस्य मते त्विदं विष्णुरिति वैष्णवी । सा च युञ्जते मन इत्यत्र व्याख्याता ॥

अत्र विनियोगसंग्रहः—

महीति पृषदाज्ये स्याद्ग्रावतीति दधिग्रहे ।
इदं विष्णुर्वैष्णवी स्यादिह मन्त्रास्त्रयो मताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

( स्तुतशस्त्राभिधानम् )

( अथ तृतीयाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

देवं सवितरेतत्ते प्राऽऽह तत्प्र चं सुव प्र चं यज बृहस्पतिंर्ब्रह्माऽऽयुष्मत्या ऋचो मा गांत तनूपात्साम्नंः सत्या वं आशिषंः सन्तु सत्या आकूंतय ऋतं चं सत्यं चं वदत स्तुत देवस्यं सवितुः प्रंसवे स्तुतस्यं स्तुतमस्यूर्जं मह्यं स्तुतं दुंहामा मां स्तुतस्यं स्तुतं गंम्याच्छस्त्रस्यं शस्त्रम् ( १ ) अस्यूर्जं मह्यं शस्त्रं दुंहामा मां शस्त्रस्यं शस्त्रं गंम्यादिन्द्रियावंन्तो वनामहे धुक्षीमहिं प्रजामिषंम् । सा में सत्याऽऽशीर्देवेषुं भूयाद्ब्रह्मवर्चसं माऽऽ गंम्यात्। यज्ञो बंभूव स आ बंभूव स प्र जंज्ञे स वांवृधे । स देवानामधिंपतिर्बभूव सो अस्माꣳ अधिंपतीन्करोतु वयꣳ स्यांम पतंयो रयीणाम् । यज्ञो वा वै ( २ ) यज्ञपंतिं दुहे यज्ञपंतिर्वा यज्ञं दुंहे स यः स्तुंतशस्त्रयोर्दोहमविंद्वान्यजंते तं यज्ञो दुंहे स इष्ट्वा पापींयान्भवति य एंनयोर्दोहं विद्वान्यजंते स यज्ञं दुंहे स इष्ट्वा वसींयान्भवति स्तुतस्यं स्तुतमस्यूर्जं मह्यं स्तुतं दुंहामा मां स्तुतस्यं स्तुतं गंम्याच्छस्त्रस्यं शस्त्रमस्यूर्जं

मह्यं॑ शस्त्रं दुहामा मां शस्त्रस्यं शस्त्रं गंम्या-
दित्यांहैष वै स्तुंतशस्त्रयोर्दोहस्तं य एवं विद्वा-
न्यजंते दुह एव यज्ञमिष्ट्वा वसींयान्भवति (३)॥

( शस्त्रं वै शस्त्रं दुहां द्वाविं॑शतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

देवं । सवितः । एतत् । ते । प्रेतिं । आह । तत् ।
प्रेतिं । च । सुव । प्रेतिं । च । यज । बृहस्पतिः ।
ब्रह्मा । आयुंष्मत्याः । ऋचः । मा । गात । तनू-
पादितिं तनू—पात् । साम्नः । सत्याः । वः । आ-
शिष इत्यां—शिषः । सन्तु । सत्याः । आकूंतय
इत्या—कूतयः । ऋतम् । च । सत्यम् । च । वदत ।
स्तुत । देवस्यं । सवितुः । प्रसव इतिं प्र—सवे ।
स्तुतस्यं । स्तुतम् । असि । ऊर्जम् । मह्यम् ।
स्तुतम् । दुहाम् । एतिं । मा । स्तुतस्यं । स्तुतम् ।
गम्यात् । शस्त्रस्यं । शस्त्रम् ( १ ) । असि । ऊर्जम् ।
मह्यम् । शस्त्रम् । दुहाम् । एतिं । मा । शस्त्रस्यं ।
शस्त्रम् । गम्यात् । इन्द्रियावन्त इतीन्द्रिय—वन्तः ।

( स्तुतशस्त्राभिधानम् )

वनामहे। धुक्षीमहिं। प्रजामितिं प्र—जाम्। इषंम्।
सा। मे। सत्या। आशीरित्या—शीः। देवेषुं।
भूयात्। ब्रह्मवर्चसमितिं ब्रह्म—वर्चसम्। मा। एतिं।
गम्यात्। यज्ञः। बभूव। सः। एतिं। बभूव।
सः। प्रेतिं। जज्ञे। सः। वावृधे। सः। देवानाम्।
अधिंपतिरित्यधिं—पतिः। बभूव। सः। अस्मान्।
अधिंपतीनित्यधिं—पतीन्। करोतु। वयम्।
स्याम। पतंयः। रयीणाम्। यज्ञः। वा। वै (२)।
यज्ञपंतिमितिं यज्ञ—पतिम्। दुहे। यज्ञपंतिरितिं
यज्ञ—पतिः। वा। यज्ञम्। दुहे। सः। यः।
स्तुतशस्त्रयोरितिं स्तुत—शस्त्रयोः। दोहंम्। अविं-
द्वान्। यजंते। तम्। यज्ञः। दुहे। सः। इष्ट्वा।
पापीयान्। भवति। यः। एनयोः। दोहंम्।
विद्वान्। यजंते। सः। यज्ञम्। दुहे। सः। इष्ट्वा।
वसीयान्। भवति। स्तुतस्यं। स्तुतम्। असि।
ऊर्जंम्। मह्यंम्। स्तुतम्। दुहाम्। एतिं। मा।
स्तुतस्यं। स्तुतम्। गम्यात्। शस्त्रस्यं। शस्त्रम्।
असि। ऊर्जंम्। मह्यंम्। शस्त्रम्। दुहाम्। एतिं।
मा। शस्त्रस्यं। शस्त्रम्। गम्यात्। इतिं। आह।
एषः। वै। स्तुतशस्त्रयोरितिं स्तुत—शस्त्रयोः। दोहंः।

तम् । यः । एवम् । विद्वान् । यजते । दुहे । एवं । यज्ञम् । इष्ट्वा । वसीयान् । भवति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः । )

---

पृषदाज्यं भवेत्षष्ठे मन्त्रश्च दधिघर्मगः ।

अथ सप्तमे स्तुतशस्त्रे अभिधीयेते ।

कल्पः—"ब्रह्मन्स्तोष्यामः प्रशास्तरित्युच्यमाने देव सवितरेतत्ते प्राहेत्यनुद्रुत्य रश्मिरासि क्षयाय त्वा क्षयं जिन्वेत्युक्त्वों स्तुतेति प्रसौति" इति ।

पाठस्तु—

देव सवितरेतत्ते प्राऽऽह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे, इति ।

हे सवितर्देवायमुद्गाता स्तोष्याम इत्येतद्वाक्यं ते तुभ्यं प्राह तत्स्तोत्रं त्वं प्रसुव प्रकर्षेणानुज्ञां च देहि । प्रयज च प्रकर्षेण च यागं निष्पादय । हे उद्गातारो बृहस्पतिरेवाहं ब्रह्मा न तु मनुष्यमात्रः । सोऽहं वो ब्रवीमीति शेषः । आयुष्मत्या ऋचो मा गात । आयुःस्थानीयो निर्वाहोऽस्यामृच्यस्तीति आयुष्मती । तस्या ऋचः सकाशान्माऽपगच्छत ऋगक्षरोच्चारणे सावधाना भवतेत्यर्थः । तथा तनूपात्साम्नो मा गच्छत । स्तोत्रस्य तनूः शरीरमेव ऋक्तां तनूं पातीति तनूपं साम । ऋगक्षराभिव्यक्तिर्हि साम्ना क्रियते । ततस्तस्मिन्यूयमप्रमत्ता भवतेति । गीयमाने स्तोत्रे वो युष्माकं संबन्धिन्यो यजमानविषया आशिषो याः सन्ति ताः सर्वाः सत्याः सन्तु । याश्च भवतामाकूतयः संकल्परूपास्ता अपि सत्याः सन्तु । यूयं मनसर्तं यथार्थं

( स्तुतशस्त्राभिधानम् )

स्मरत । वाचा च सत्यं वदत । सवितुर्देवस्य प्रसवेऽनुज्ञायां सत्यां स्तुत स्तोत्रं पठत ॥

कल्पः—"स्तुतस्य स्तुतमसीति स्तोत्रमनुमन्त्रयते शस्त्रस्य शस्त्रमसीति शस्त्रमिन्द्रियावन्तो वनामह इत्युभयत्रानुषजति" इति।

पाठस्तु—

स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं माऽऽ गम्यात् । यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणाम् ।, इति।

सोऽयं मन्त्रो याजमानः । उद्गातृभिर्गीयमान हे स्तोत्र त्वं स्तुतस्य स्तुतमसि स्तोत्रस्यापि स्तोत्रमसि स्तोत्रजातावुत्तममसीत्यर्थः । तादृशं स्तुतं स्तोत्ररूपं त्वां मह्यं मदर्थमूर्जं दुहां सारं दुहे । ततः स्तुतस्य स्तुतमुत्तमं स्तोत्रं मां प्रत्यागम्यादागच्छतु । एवं होतृभिः शस्यमान हे शस्त्र त्वं शस्त्रस्य शस्त्रमसि शस्त्रजातावुत्तममसि । शेषं पूर्ववत् । युवयोः स्तुतशस्त्रयोः प्रसादादिन्द्रियावन्त इन्द्रियैरविकलैर्युक्ताः सन्तो वनामहे स्वापेक्षितफलं भजामहे । प्रजां पुत्रादिरूपामिषमन्नं च धुक्षीमहि संपादयामः । किंच देवेषु विषयभूतेषु मे मदीया यजामीत्याशीर्योऽस्ति सा सत्या भूयात् । ब्रह्मवर्चसं यज्ञानुष्ठानरूपं मां प्रत्यागम्यादागच्छतु । उत्तरोत्तरमभिवर्धतामित्यर्थः । इदानीमनुष्ठीयमानो यज्ञः संपूर्णो भवति । स यज्ञ आबभूव पुनरप्यावृत्तो भवतु । स यज्ञः प्रजज्ञेऽस्माननालस्येनानुष्ठातॄन्प्रति प्रजातवान्[1] । अत एवास्मद्गृहे स यज्ञो वावृधे पुनः पुनरनुष्ठानेन वर्धताम् । स यज्ञोऽस्माभिरिज्यमानानां देवानामधिकं पालयिता भवतु । स यज्ञोऽस्मानप्यधिपतीनधिकमनुष्ठानस्य पालकान्करोतु । वयमपि तस्य यज्ञपुरुषस्य प्रसादाद्रयीणां यज्ञसाधनानां धनानां पतयो भूयास्म ॥

१ क. प्रज्ञात°।

तदिदमनुमन्त्रणं स्तुतशस्त्रयोर्दोह इति वैदिकैः परिभाष्यते, तमिमं दोहं विधत्ते—

यज्ञो वा वै यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे स यः स्तुतशस्त्रयोर्दोहमविद्वान्यजते तं यज्ञो दुहे स इष्ट्वा पापीयान्भवति य एनयो-र्दोहं विद्वान्यजते स यज्ञं दुहे स इष्ट्वा वसी-यान्भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रम-स्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्या-दित्याहैष वै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान्य-जते दुह एव यज्ञमिष्ट्वा वसीयान्भवति ॥, इति॥

अत्र दोहनं नाम रिक्तीकरणं गा दोग्धीत्यत्र तद्दर्शनात् । तथा सत्येत-द्विचार्यते—किं यज्ञो यजमानं रिक्ती करोति किंवा यजमानो यज्ञमिति । तत्र यतो दोहमविद्वान्यः कोऽपि दोहनामकमभिमन्त्रणमज्ञात्वा यजेत तमेवं पुरुषं यज्ञो रिक्ती करोति । स चेष्ट्वा दरिद्रो भवति । विद्वांस्तु यज्ञं दुग्ध्वा वसीया-न्भवतीति । यद्यप्येतदभिमन्त्रणं सर्वत्र संचारि तथाऽपि बहिष्पवमानस्तो-त्रस्याऽऽज्यशस्त्रस्य प्रथमभावित्वात्तदर्थस्तोत्रमन्त्र ऋतुग्रहानुवाकात्प्राक्पठ-नीयः । शस्त्रमन्त्रस्त्वैन्द्राग्नग्रहानुवाकादूर्ध्वं पठनीयः ॥

अत्र विनियोगसंग्रहः—

देव ब्रह्मा सौति गातॄन्स्तुतस्य यजमानकः ।
स्तोत्रं संमन्त्र्य शस्त्रस्य मन्त्रयेच्छस्त्रमेतयोः ॥
इन्द्रः शेषः स णामन्तो मन्त्रा अत्र त्रयो मताः ॥ १ ॥

अत्र प्रथममन्त्र ऋचो मा गात तनूपात्साम्न इत्यत्राक्षराभिव्यञ्जकतया सामानि ऋचः शरीरं रक्षन्तीत्युक्तम् । सोऽयमर्थो नवमाध्यायस्य द्वितीयपादे मीमांसितः—

“सामर्चं प्रति मुख्यं स्याद्गुणो वा बाह्यपाठतः ।
मुख्यमभ्यसितुं पाठो गुणो गीताक्षरैः स्तुतेः ॥ ”

---

१ ख. समन्त्रं । २ क. घ. ङ. °तादिरस्त्वतः । र° ।

( स्तुतशस्त्राभिधानम् )

रथंतरं गायतीत्यादौ यद्गानं विहितं तदेतत्सामशब्दार्थ इति प्रतिपादितं स्मारितं च। तदेतद्गानमृचं प्रति प्रधानकर्म स्यात्। कुतः, यागप्रयोगाद्बहि-रध्ययनकालेऽपि पठ्यमानत्वात्। गुणकर्म चेद्व्रीहिप्रोक्षणादिवद्यागप्रयोगमध्य एव गानमनुष्ठीयेत। ततो यागाद्बहिर्गानस्य विश्वजिदादिवत्फलं कल्पनीयम्। मध्यकालीनं गानं तु प्रयाजादिवदुपकारकम्। तस्मान्मुख्यमेतन्न गुणकर्मेति प्राप्ते ब्रूमः—न तावद्बहिः पाठः प्रधानकर्मत्वं कल्पयितुं शक्नोति। भूमि-रथिकशुष्केष्टिन्यायेन प्रयोगपाटवाय गानाध्ययनोपपत्तेः। यथा भूमिरथिको भूमौ रथमालिख्याभ्यासं करोति यथा वा छात्रः शुष्केष्ट्या प्रयोगपाटवं संपा-दयति तद्वत्। नापि गुणकर्मत्वे प्रयोजनाभावात्प्रधानकर्मत्वमिति वाच्यं, गानेन संस्कृतैर्ऋगक्षरैः स्तुतिसंभवात्। आज्यैः स्तुवते पृष्ठैः स्तुवत इति स्तुति-विधानात्। तस्मादृगक्षराणां स्वरविशिष्टत्वादक्षराभिव्यक्तिर्दृष्टं प्रयोजनमिति अदृष्टस्याकल्पनीयत्वाद्गानं संस्कारकर्म॥

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

"प्रउगं शंसतीत्यादौ गुणतोत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥
स्मृत्यर्थत्वे स्तौतिशस्योर्धात्वोः श्रौतार्थबाधनम्।
तेनादृष्टमुपेत्यापि प्राधान्यं *स्तुतये मतम्॥

ज्योतिष्टोमे श्रूयते—"प्रउगं शंसति निष्केवल्यं शंसति आज्यैः स्तुवते पृष्ठैः स्तुवते" इति। प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी। आज्यपृष्ठ-शब्दौ तु स्तोत्रवाचित्वेन चित्राधिकरणे व्याख्यातौ। अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रं, प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रं, तयोः स्तुतशस्त्रयोर्गुणकर्मत्वं युक्तम्। तुषविमोकवद्दृष्टार्थत्वलाभात्। पठ्यमानेषु मन्त्रेष्वनुस्मरणेन देवता संस्क्रियत इति प्राप्ते ब्रूमः—स्तोतव्याया देवतायाः स्तावकैर्गुणैः संबन्धः स्तौतिशंसतिधात्वोर्वाच्योऽर्थः। यदि मन्त्रवाक्यानि(णि) गुणसंबन्धाभिधान-पराणि तदा धात्वोर्मुख्यार्थलाभाच्छ्रुतिरनुगृहीता भविष्यति। यदा तु गुण-द्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि(णि) स्युस्तदा धा-त्वोर्मुख्यार्थो न स्यात्। लोके हि देवदत्तश्चतुर्वेदाभिज्ञ इत्युक्तेः स्तुतिः प्रती-

* न्यायमालाविस्तरे तु "श्रुतये" इति पाठः।

१ ख. °र्मत्वे तु प्रीहि°।

यते तस्य वाक्यस्य गुणसंबन्धपरत्वात् । (*यश्चतुर्वेदाभिज्ञो देवदत्तस्तमाकारयेत्युक्तौ स्तुतिर्न भवत्याकारणपरत्वेन वाक्यस्य गुणसंबन्धपरत्वाभावात् । तथाऽत्रापि पठ्यमानगुणविशिष्टो यः स देव इत्येव मन्त्रवाक्यानां(णां) देवताप्रकाशनपरत्वं तावच्चेत्स्यात् ) । ततश्चाऽऽज्यैर्देवं प्रकाशयेत्पृष्ठैर्देवं प्रकाशयेदित्येवं विध्यर्थपर्यवसानाद्धात्वोर्मुख्यार्थो बाध्येत । ततो धातुस्तुतिमबाधितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपेतव्यम् । तत्र दृष्टं प्रयोजनं नास्तीति चेत् । तर्ह्यपूर्वमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

श्येनाय पत्वने स्वाहा वट्स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट्स्वयमभिगूर्ताय नमः परिधये जनप्रथनाय स्वाहा वट्स्वयमभिगूर्ताय नम ऊर्जे होत्राणाꣳ स्वाहा वट्स्वयमभिगूर्ताय नमः पयसे होत्राणाꣳ स्वाहा वट्स्वयमभिगूर्ताय नमः प्रजापतये मनवे स्वाहा वट्स्वयमभिगूर्ताय नम ऋतमृतपाः सुवर्वाट्स्वाहा वट्स्वयमभिगूर्ताय नमस्तृम्पन्ताꣳ होत्रा मधोर्घृतस्य यज्ञपतिमृ-

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख. च. पुस्तकयोः 'यदा तु देवदत्तस्वरूपपरता यश्चतुर्वेदी तमानयेत्यादौ तत्र न स्तुतिप्रतीतिः, तस्य चतुर्वेदसंबन्धद्वारेण देवदत्तस्वरूपोपलक्षणपरत्वेन गुणसंबन्धपरत्वाभावात् । ' इति पाठो वर्तते ।

---

१ ख. च. 'स्य गुणद्वारेण देवदत्तस्वरूपोपलक्षणपरत्वेन गु' । २ ख. 'तुश्रुति' ।

षंय एनसा ( १ ) आहुः । प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तोकावप तौ रराध । सं नस्ताभ्याꣳ सृजतु विश्वकर्मा घोरा ऋषयो नमो अस्त्वेभ्यः । चक्षुष एषां मनसश्च संधौ बृहस्पतये महि षद्द्युमन्नमः । नमो विश्वकर्मणे स उं पात्वस्मानन्यान्त्सोमपान्मन्यमानः । प्राणस्य विद्वान्त्समरे न धीर एनश्चकृवान्महि बद्ध एषाम् । तं विश्वकर्मन् ( २ ) प्र मुञ्चा स्वस्तये ये भक्षयन्तो न वसून्यानृहुः । यानग्नयोऽन्वतप्यन्त धिष्णिया इयं तेषामवया दुरिष्ट्यै स्विष्टिं नस्तां कृणोतु विश्वकर्मा । नमः पितृभ्यो अभि ये नो अख्यन्यज्ञकृतो यज्ञकामाः सुदेवा अकामा वो दक्षिणां न नीनिम मा नस्तस्मादेनसः पापयिष्ट । यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न ( ३ ) नयेदैभ्यो वृश्च्येत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत्प्रीणात्यस्मे देवासो वपुषे चिकित्सत यमाशिरा दंपती वाममश्नुतः । पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः । आशीर्दाया दंपती वाममश्नुता-

मरिंष्टो रयिः सचताꣳ समोकसा । य आऽसिं-
चत्संदुंग्धं कुम्भ्या सहेष्टेन यामन्नमंतिं जहातु
सः । सर्पिर्ग्रीवी (४) पीवंर्यस्य जाया
पीवांनः पुत्रा अकृंशासो अस्य । सहजांनिर्यः
सुंमखस्यमांन इन्द्रांयाऽऽशिरꣳ सह कुम्भ्याऽ-
दांत् । आशीर्म ऊर्जमुत सुंप्रजास्त्वमिषं
दधातु द्रविंणꣳ सवंर्चसम् । संजयन्क्षेत्रांणि
सहंसाऽहमिंन्द्र कृण्वानो अन्याꣳ अधंरान्त्स-
पत्नांन् । भूतमंसि भूते मां धा मुखंमसि मुखं
भूयासं द्यावांपृथिवीभ्यां त्वा परिं गृह्णामि
विश्वें त्वा देवा वैंश्वानराः (५) प्र च्यांव-
यन्तु दिवि देवान्दृꣳहान्तरिंक्षे वयाꣳसि
पृथिव्यां पार्थिवान्ध्रुवं ध्रुवेणं हविषाऽव सोमं
नयामसि । यथां नः सर्वमिज्जगंदयक्ष्मꣳ सु-
मना असंत् । यथां न इन्द्र इद्विशः केवंलीः
सर्वाः समंनसः करंत् । यथां नः सर्वा इद्वि-
शोऽस्माकं केवंलीरसंन् (६)

( एनसा विश्वकर्मभ्यो दक्षिणां न सर्पिर्ग्रीवी वैंश्वानराश्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके,
द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( तृतीयसवनमाध्यंदिनसवनगतहोमविशेषमन्त्राभिधानम् )
( अथ तृतीयाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

श्येनाय॑ । पत्व॑ने । स्वाहा॑ । वट् । स्वयम॑भिगू॒र्ताये॒ति॑ स्वयम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । वि॒ष्टम्भाये॒ति॑ वि—स्त॒म्भाय॑ । धर्म॑णे । स्वाहा॑ । वट् । स्व॒यम॑भि॒गू॒र्ताये॒ति॑ स्व॒यम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । प॒रि॒धय॒ इति॑ परि—धये॑ । ज॒नप्रथ॑ना॒येति॑ जन—प्रथ॑नाय । स्वाहा॑ । वट् । स्व॒यम॑भि॒गू॒र्ताये॒ति॑ स्व॒यम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । ऊ॒र्जे । होत्रा॑णाम् । स्वाहा॑ । वट् । स्व॒यम॑भि॒गू॒र्ताये॒ति॑ स्व॒यम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । पय॑से । होत्रा॑णाम् । स्वाहा॑ । वट् । स्व॒यम॑भि॒गू॒र्ता॒ये॒ति॑ स्व॒यम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । प्र॒जाप॑तय॒ इति॑ प्र॒जा—प॒त॒ये । मन॑वे । स्वाहा॑ । वट् । स्व॒यम॑भि॒गू॒र्ता॒ये॒ति॑ स्व॒यम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । ऋ॒तम् । ऋ॒त॒पा॒ इत्यृ॑त—पाः । सु॒व॒र्वा॒डिति॑ सुवः—वाट् । स्वाहा॑ । वट् । स्व॒यम॑भि॒गू॒र्ताये॒ति॑ स्व॒यम्—अ॒भि॒गू॒र्ता॒य । नम॑ः । तृ॒म्पन्ताम् । होत्रा॑ः । मधो॑ः । घृ॒तस्य॑ । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ—प॒तिम् । ऋष॑यः । एन॑सा (१) । आ॒हुः । प्र॒जा इति॑ प्र—जाः । निर्भ॑क्ता॒ इति॒ निः—भ॒क्ताः । अ॒नु॒तप्य॑मा॒ना॒ इत्य॑नु—तप्य॑मानाः । म॒धव्यौ॑ ।

स्तोकौ । अपेतिं । तौ । रराध । समितिं । नः । ताभ्याम् । सृजतु । विश्वकर्मेतिं विश्व—कर्मा । घोराः । ऋषंयः । नमः । अस्तु । एभ्यः । चक्षुषः । एषाम् । मनसः । च । संधाविति सं—धौ । बृहस्पतंये । महिं । सव् । द्युमदितिं द्यु—मत् । नमः । नमः । विश्वकर्मण इतिं विश्व—कर्मणे । सः । उ । पातु । अस्मान् । अनन्यान् । सोमपानितिं सोम—पान् । मन्यंमानः । प्राणस्येतिं प्र—अनस्यं । विद्वान् । समर इतिं सम्—अरे । न । धीरः । एनः । चकृवान् । महिं । बद्धः । एषाम् । तम् । विश्वकर्मन्निति विश्व—कर्मन् ( २ ) । प्रेतिं । मुञ्च । स्वस्तयें । ये । भक्षयंन्तः । न । वसूंनि । आनृहुः । यान् । अग्नयः । अन्वतंप्यन्तेत्यंनु—अतंप्यन्त । धिष्णियाः । इयम् । तेषाम् । अवया । दुरिष्ट्या इति दुः—इष्ट्यै । स्विंष्टिमिति सु—इष्टिम् । नः । ताम् । कृणोतु । विश्वकर्मेतिं विश्व—कर्मा । नमः । पितृभ्य इतिं पितृ—भ्यः । अभीतिं । ये । नः । अख्यन् । यज्ञकृत इतिं यज्ञ—कृतः । यज्ञकामा इतिं यज्ञ—कामाः । सुदेवा इतिं सु—देवाः । अकामाः । वः । दक्षिणाम् । न । नीनिम । मा । नः । तस्मात् । एनसः । पाप-

यिष्ट। यावन्तः। वै। सदस्याः। ते। सर्वे। दक्षि-
ण्याः। तेभ्यः। यः। दक्षिणाम्। न (३)।
नयेत्। एति। एभ्यः। वृश्च्येत। यत्। वैश्वकर्म-
णानीति वैश्व—कर्मणानि। जुहोति। सदस्यान्।
एव। तत्। प्रीणाति। अस्मे इति। देवासः।
वपुषे। चिकित्सत। यम्। आशिरा। दंपती इति।
वामम्। अश्नुतः। पुमान्। पुत्रः। जायते। विन्दते।
वसु। अथ। विश्वे। अरपाः। एधते। गृहः।
आशीर्दायेत्याशीः—दाया। दंपती इति। वामम्।
अश्नुताम्। अरिष्टः। रायः। सचताम्। समोकसेति
सम्—ओकसा। यः। एति। असिंचत्। संदुग्धं-
मिति सं—दुग्धम्। कुम्भ्या। सह। इष्टेन। यामन्।
अमतिम्। जहातु। सः। सर्पिर्ग्रीवीति सर्पिः—
ग्रीवी (४)। पीवरी। अस्य। जाया। पीवानः।
पुत्राः। अकृशासः। अस्य। सहजानिरिति सह—
जानिः। यः। सुमखस्यमान इति सु—मखस्यमानः।
इन्द्राय। आशिरम्। सह। कुम्भ्या। अदात्।
आशीरित्या—शीः। मे। ऊर्जम्। उत। सुप्रजा-
स्त्वमिति सुप्रजाः—त्वम्। इषम्। दधातु। द्रवि-
णम्। सवर्चसमिति स—वर्चसम्। संजयन्निति सं—

जयंन् । क्षेत्राणि । सहंसा । अहम् । इन्द्र । कृण्वानः । अन्यान् । अधंरान् । सपत्नान् । भूतम् । असि । भूते । मा । धाः । मुखम् । असि । मुखम् । भूयासम् । द्यावांपृथिवीभ्यामिति द्यावां—पृथिवीभ्याम् । त्वा । परीति । गृह्णामि । विश्वे । त्वा । देवाः । वैश्वानराः ( ५ ) । प्रेति । च्यावयन्तु । दिवि । देवान् । दृंह । अन्तरिंक्षे । वयांसि । पृथिव्याम् । पार्थिवान् । ध्रुवम् । ध्रुवेण । हविषां । अवेति । सोमम् । नयामसि । यथा । नः । सर्वम् । इत् । जगंत् । अयक्ष्मम् । सुमना इति सु—मनाः । असंत् । यथा । नः । इन्द्रः । इत् । विशः । केवंलीः । सर्वाः । समंनस इति स—मनसः । करंत् । यथा । नः । सर्वाः । इत् । दिशः । अस्माकम् । केवंलीः । असन् ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

प्रसूतिमन्त्रणं प्रोक्तं सप्तमे स्तुतशस्त्रयोः ।
अथाष्टमे तृतीयसवनगता माध्यंदिनसवनगता होमविशेषमन्त्रा उच्यन्ते ।

---

१ ख. घ. ङ. 'तिर्मन्त्र' ।

( तृतीयसवनमाध्यंदिनसवनगतहोमविशेषमन्त्राभिधानम् )

कल्पः—"अथ चमसाञ्जुहोति श्येनाय पत्वने स्वाहेति वषट्कृते जुहोति[1] वट्स्वयमभिगूर्ताय नमः स्वाहेत्यनुवषट्कृते, एवमुत्तरैः प्रचरत्येतावन्नाना-पूर्वेण मन्त्रेण वषट्कृते वषट्कृते जुहोत्युत्तरेणानुवषट्कृते[2]" इति।

पाठस्तु—

श्येनाय पत्वने स्वाहा वट्स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट्स्वयमभिगूर्ताय नमः परिधये जनप्रथनाय स्वाहा वट्स्वयम-भिगूर्ताय नम ऊर्जे होत्राणाꣳ स्वाहा वट्स्व-यमभिगूर्ताय नमः पयसे होत्राणाꣳ स्वाहा वट्स्वयमभिगूर्ताय नमः प्रजापतये मनवे स्वाहा वट्स्वयमभिगूर्ताय नम ऋतमृतपाः सुववार्ट्स्वाहा वट्स्वयमभिगूर्ताय नमः, इति।

श्येनरूपाय पतनशीलाय 'इन्द्र ऋभुभिः' इत्यनया याज्यया प्रतिपाद्याय देवाय स्वाहा हुतमिदमस्तु। वट्शब्दोऽवश्यमित्यस्मिन्नर्थे वर्तते। स्वयमेव सोमपार्श्वे गन्तुमुद्यतः स्वयमभिगूर्तोऽवश्यं स्वयमभिगूर्ताय नमोऽस्तु। विष्ट-म्भाय विष्टम्भयित्रे शत्रूणां विनाशयित्रे धर्मणे धारकायास्माकं पोषकायेन्द्रा-वरुणा सुतपाविति याज्यया प्रतिपाद्याय देवाय स्वाहुतम्। परिधये परितो धार-यित्रे जनप्रथनाय जनानां प्रख्यापनायेन्द्रश्च सोमं पिबतमिति याज्यया प्रतिपा-द्याय स्वाहुतम्। होत्राणां होमकर्तॄणामूर्जे ऊर्ग्रूपायान्नप्रदायाऽऽवो वहन्तु सप्तय इति याज्यया प्रतिपाद्याय स्वाहुतम्। होत्राणां होमकर्तॄणां पयसे क्षीरप्रदा-यामेव नः सुहवा इति याज्यया प्रतिपाद्याय स्वाहुतम्[3]। प्रजापतये प्रजानां पालकाय, मनवेऽस्माभिर्मन्तव्याय 'इन्द्राविष्णू पिबतम्' इति याज्यया प्रतिपाद्याय स्वाहुतम्। हे ऋतपाः सत्यपालक हे सुववार्ट् स्वर्गप्रापक ऋतम-स्मदीयं यज्ञं पालयेति शेषः। तस्मै तुभ्यमिमं स्तोममर्हत इति याज्यया प्रति-पाद्याय स्वाहुतम्। त एते प्रस्थितयाज्याहोमाः॥

कल्पः—"तृप्यन्ताꣳ होत्रा इति सर्वान्हुत्वा जपति" इति।

पाठस्तु—

---

१ ख. घ. ङ. च. °ते जु°। २ ख. ङ. च. °होतीत्युत्तरेणोत्त°। ३ क. घ. ङ. च. °म्। हे।

तृम्पन्ताᳪं होत्रा मधोर्घृतस्य , इति।

होत्रा मधोर्घृतस्येति हूयमाना देवा मधुरेण घृतेन तृप्यन्तु । त एते मन्त्रास्तृतीयसवनगताः कदा चन स्तरीरित्यस्मादनुवाकादूर्ध्वं द्रष्टव्याः ॥

कल्पः—“ यज्ञपतिमृषय एनसाऽऽहुरित्याग्नीध्रीये पञ्च वैश्वकर्मणानि हुत्वा ” इति।

तत्र प्रथमामृचमाह—

यज्ञपतिमृषय एनसाऽऽहुः । प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तोकावप तौ रराध। सं नस्ताभ्याᳪं सृजतु विश्वकर्मा, इति।

यदा प्रजाः सर्वा निर्भक्ता अन्नरहिता अनुतप्यमाना भवन्ति तदानीं यज्ञपतिमेनसा संयुक्तमृषयः सर्वेऽप्याहुः। यज्ञपत्यपराधादेव वृष्ट्याद्यभावे सस्याभावे प्रजानामनुतापो जायते । कोऽयं यज्ञपतेरपराध इति तदुच्यते—मधुर्वसन्तर्तुस्तत्संबन्धिनौ चैत्रवैशाखमासौ मधव्यौ स्तोकौ ज्योतिष्टोमानुष्ठानेन स्तोतुं योग्यौ। तादृशयोर्मासयोरनुष्ठानमकृत्वा तौ मासौ प्रत्यहं यज्ञपतिरपरराध, अनेनापराधेन पापी यजमान इत्यृषय आहुः । अतोऽयं विश्वकर्मा नोऽस्मान्यज्ञपतींस्ताभ्यां मासाभ्यां संसृजतु । यथा तयोर्मासयोर्ज्योतिष्टोममनुतिष्ठामस्तथा प्रेरयत्वित्यर्थः ॥

अथ द्वितीयामाह—

घोरा ऋषयो नमो अस्त्वेभ्यः । चक्षुष एषां मनसश्च संधौ बृहस्पतये महि षद्द्युमन्नमः। नमो विश्वकर्मणे स उ पात्वस्मान् , इति।

पूर्वोक्ता ऋषयस्ते घोरा उग्रा अस्मदपराधमन्विष्य पापीयानयमिति जनानामग्रे निन्दकत्वात्। अत एभ्य ऋषिभ्यो नमोऽस्तु नमस्कारेण शान्ताः सन्तोऽस्मान्मा निन्दन्तु। एषामृषीणां चक्षुषोऽस्माकं मनसश्च संधौ संधाननिमित्तं बृहस्पतये नमोऽस्तु। ऋषयो यथाऽस्मान्समनुग्रहेण कटाक्षेण वीक्षन्ते वयं च यथा कर्मानुष्ठानेनापराधरहिताः सन्तो मनसा भक्तिं कुर्मस्तथाऽयं बृहस्पतिरनुगृह्णातु। महि षद्द्युमदित्येतानि त्रीणि नमःशब्दस्य विशेषणानि। नमस्कारोऽयमष्टाङ्गोपेतत्वान्महान्। तदनुग्रहपर्यन्तमुत्पादनाभावादयं नमस्कारः

सीदतीति सत्। भक्तिरसेनात्यन्तमाविर्भूतत्वाद्द्युमत्। विश्वविषयं कर्म सृष्ट्यादिरूपं यस्यासौ विश्वकर्मा प्रजापतिस्तस्मै नमोऽस्तु। स उ सोऽपि विश्वकर्माऽस्माननुष्ठानप्रवर्तनेन पातु॥

अथ तृतीयामाह—

अनन्यान्त्सोमपान्मन्यमानः। प्राणस्य विद्वान्त्समरे न धीर एनश्चकृवान्महि बद्ध एषाम्। तं विश्वकर्मन्प्र मुञ्चा स्वस्तये, इति।

हे विश्वकर्मन्ननन्यांस्त्वद्व्यतिरेकेण गत्यन्तररहितानस्मान्सोमपान्मन्यमानोऽसोमपानप्येते सोमपा इत्येवानुग्रहं कुर्वन्पातुमर्हती(सी) ति शेषः। तत्र दृष्टान्तः—प्राणस्य विद्वान्समरे न धीर इति। यथा लोके धीरः पुरुषः परकीयस्य प्राणस्याऽऽपदं विद्वान्समरे न युद्ध इव करुणया तं पाति तद्वत्। अयं यजमानः प्रमादालस्यादिकारिणा तमोगुणेन वृतः सन्नेषामृषीणामेनो महि चकृवान्महान्तमपराधं कृतवान्। तमपराधिनं प्रमुञ्च तस्मादपराधात्प्रकर्षेण मोचय। किमर्थं स्वस्तये विनाशराहित्याय॥

अथ चतुर्थीमाह—

ये भक्षयन्तो न वसून्यानृहुः। यानग्नयोऽन्वतप्यन्त धिष्णिया इयं तेषामवया दुरिष्ट्यै स्विष्टिं नस्तां कृणोतु विश्वकर्मा।, इति।

ये यष्टारो भक्षयन्तो न भक्षयन्त इव वसूनि धनान्यानृहुः पूजितवन्तो यज्ञभिक्षारूपेण धनमर्जयित्वा यज्ञमकृत्वैव. भोगार्थं संगृहीतवन्त इत्यर्थः। धिष्ण्यनिवासिनोऽग्नयो यानन्वतप्यन्ताहो शोच्या एत इति तद्विषये खेदं कृतवन्तः। तेषां यष्टॄणां या दुरिष्टिर्दुष्टो यागो यागाभावस्तद्धेतुरेनश्च तस्या अवया विनाशयित्री येयमिष्टिर्यागस्तामिष्टिं नोऽस्माकं विश्वकर्मा स्विष्टिं करोतु॥

अथ पञ्चमीमाह—

नमः पितृभ्यो अभि ये नो अख्यन्यज्ञकृतो यज्ञकामाः सुदेवा अकामा वो दक्षिणां न नीनिम मा नस्तस्मादेनसः पापयिष्ट।, इति।

ये नोऽस्मानभ्यख्यन्नाभिमुख्येन पश्यन्ति ते यज्ञस्य कारयितारोऽस्माकं यज्ञं कामयमानाः सुदेवाः सुष्ठु द्योतमानास्तादृशा हे पितरो वयं प्रमादालस्यादिभिरकामा यज्ञं कर्तुमिच्छारहिताः सन्तो वो युष्मभ्यं दक्षिणां दक्षिणोपलक्षितं यज्ञं न नीनिम नैव नीतवन्तस्तस्मादेनसोऽस्मान्मा पापयिष्ट तेन पापेनास्मान्पापिष्ठान्मा कुरुत ॥

तैरेतैर्मन्त्रैर्होमं विधत्ते—

**यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न नयेदेभ्यो वृश्च्येत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत्प्रीणाति ,** इति ।

यज्ञसभायां द्रष्टुमागत्यावस्थिता ये ब्राह्मणास्ते सर्वे दक्षिणार्हास्तेषामदानेन यत्पापं तन्निवारणाय यथोक्तानि वैश्वकर्मणानि जुहुयात् । अयं च होम ऋत्विग्दक्षिणानन्तरभावीति कृत्वा तन्मन्त्रा उदु त्यं जातवेदसमित्यस्यावसाने द्रष्टव्याः ॥

कल्पः—“ पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य तस्मिन्यजमानः पुरस्तात्प्रत्यङ्तिष्ठन्सह पत्न्याऽऽशिरमवनयत्यस्मे देवासो वपुषे चिकित्सतेति चतसृभिः ” इति ।

आशिरशब्देन मथितं दध्यभिधीयते । आग्नीध्रे पत्न्याशिरं मथित्वेति सूत्रकारेणोक्तत्वात् ।

तत्र प्रथमाया ऋचः पाठस्तु—

**अस्मे देवासो वपुषे चिकित्सत यमाशिरा दंपती वाममश्नुतः ।·पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः । ,** इति ।

देवासो हे देवा अस्मे अस्माकं वपुषे शरीराय चिकित्सत । अस्माकं शरीरं यथा पापरहितं भवति तथा कुरुतेत्यर्थः । यत्क्षीरं दोहनपात्रस्थमेवाक्षतादिप्रक्षेपेण घनी भवति तादृशं दधि रेफान्ताशीःशब्देनाभिधीयते । चिकित्साविशेषं प्राप्य दंपती पत्नीयजमानावाशिरा दध्ना यं वामं सौन्दर्यमश्नुतस्तेन कृत्वा पुमान्पुत्रो जायते वसु च विन्दते । अथापि च विश्व एतत्संबन्धिनः सर्वेऽरपा ज्ञानवन्तः । एतस्य गृह एधते ॥

---

१ ख. °ख्येनापश्यन्, ते ।

(तृतीयसवनमाध्यंदिनसवनगतहोमविशेषमन्त्राभिधानम्)

अथ द्वितीयामाह—

आशीर्दायादंपती वाममश्नुतामरिष्टो रायः सचताꣳ समोकसा। य आऽसिचत्संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः।, इति।

आशीर्दाया, आशिरं पूर्वोक्तं दधि दत्त इत्याशीर्दायौ। तादृशौ दंपती वाममश्नुतां कल्याणं प्राप्नुताम्। कीदृशौ दंपती। समोकसा सम्यगोको ययोस्तौ समोकसौ द्वावेकगृहवासिनावित्यर्थः। अरिष्टो हिंसारहितः पत्नीयुक्तो यजमानो रायो धनानि सचतां समवैतु प्राप्नोत्वित्यर्थः। यो यजमान इष्टेन सह प्रीत्या युक्तो यामन्नाधारभूते सोमे संदुग्धं यथोक्तदधिभावमापन्नं सम्यक्क्षीरं कुम्भ्या संपूर्णेन घटेनाऽऽसिचत्सर्वतः सिक्तवान्स यजमानोऽमतिं रोगं दुर्बुद्धिं जहातु॥

अथ तृतीयामाह—

सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य। सहजानिर्यः सुमखस्यमान इन्द्रायाऽऽशिरꣳ सह कुम्भ्याऽदात्।, इति।

अस्य यजमानस्य जाया सर्पिर्ग्रीवी स्निग्धकण्ठा कोमलध्वनियुक्ता पीवरी पुष्टसर्वावयवयुक्ता भवतु। अस्य यजमानस्य पुत्राः पीवानः पुष्टसर्वाङ्गा अकृशासः कदाचिदपि व्याध्यादिजनितकार्श्यरहिताः सन्तु। यो यजमानः सुमखस्यमानः शोभनं यज्ञं कर्तुमिच्छन्निन्द्रायाऽऽशिरं पूर्णया कुम्भ्या सहादात्प्रभूतं दत्तवानित्यर्थः। तस्यास्य यजमानस्य जायेति पूर्वत्रान्वयः। कीदृशो यजमानः सहजानिः सहावस्थिता जाया यस्यासौ सहजानिः। आशीर्दानकाले जायाऽपि सहावस्थितेत्यर्थः॥

अथ चतुर्थीमाह—

आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसम्। संजयन्क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳ अधरान्त्सपत्नान्।, इति।

सकारान्तोऽयमाशीःशब्दः प्रार्थनामाचष्टे। हे इन्द्र म आशीर्ममेयं

---

१ ख. च. 'ग्धं नक्ष द'। २ ख. च. 'टेन यथाऽऽसि'।

प्रार्थना भवानूर्जं दधातु मदर्थं धारयतु प्रयच्छत्वित्यर्थः। उतापि च सुप्रजास्त्वं शोभनापत्यत्वमिषमन्नं द्रविणं सवर्चसं वर्चःसहितं प्रयच्छतु। अहं त्वत्प्रसादात्क्षेत्राणि वैरिसंबन्धीनि सहसा बलेन संजयन्स्वात्मनि धारयन्नन्यान्सपत्नान्वैरिणोऽधरान्कृण्वानोऽस्मदाज्ञाधारिणः कुर्वाणो भूयासम्। अस्याऽऽशिं(शी)रवनयनस्य तृतीयसवनगताभिषवार्थत्वादेते मन्त्राः कदा चन वाममद्येत्यनयोरनुवाकयोर्मध्ये द्रष्टव्याः॥

कल्पः—“भूतमसि भूते मा धा इति प्रतिप्रस्थाता ध्रुवमवेक्ष्य” इति।

पाठस्तु—

भूतमसि भूते मा धा मुखमसि मुखं भूयासम्, इति।

हे ध्रुव भूतमसि नित्यसिद्धस्वरूपमसि भूते नित्यसिद्धे स्वरूपे स्वर्गादौ परमात्मनि वा मा धा मां स्थापय। किंच मुखमसि सर्वेषु ग्रहेषु मुख्योऽसि। “आयुर्वा एतद्यज्ञस्य यद्ध्रुवः” इति श्रुतेः। अतस्त्वत्प्रसादान्मुखं भूयासं सर्वेषां मुख्यो भूयासम्॥

द्यावापृथिवीभ्यां त्वा परि गृह्णामि—

कल्पः—“द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यञ्जलिना परिगृह्य” इति।

हे ध्रुव द्यावापृथिवीसदृशाभ्यामञ्जलिपुटाभ्यां त्वां स्वी करोमि॥

कल्पः—“विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्विति ध्रुवं प्रच्याव्य” इति।

पाठस्तु—

विश्वे त्वा देवा वैश्वानराः प्र च्यावयन्तु दिवि देवान्दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान्, इति।

हे ध्रुव वैश्वानरा विश्वेषां नराणां हितकारित्वेन संबन्धिनः सर्वे देवास्त्वां प्रच्यावयन्तु स्वस्थानाच्चालयन्तु। त्वं च दिवि देवान्दृढी कुरु। अन्तरिक्षे वयाꣳसि पक्षिणो दृढी कुरु। पृथिव्यां पर्वतादीन्दृढी कुरु। न तु त्वदीयेन चलनेन सर्वं जगच्चालय॥

कल्पः—ध्रुवं ध्रुवेणेति पुरस्तात्प्रत्यङ्ङासीनो होतृचमसे ध्रुवमवनयति” इति।

---

१ क. घ. ङ. ॰शिराव॰। २ ख. प्रच्यावयति।

( तृतीयसवनमाध्यंदिनसवनगतहोमविशेषमन्त्राभिधानम् )

पाठस्तु—

ध्रुवं ध्रुवेण हविषाऽव सोमं नयामसि । यथा
नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् । यथा न
इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् । यथा
नः सर्वा इद्दिशोऽस्माकं केवलीरसन्, ॥ इति ॥

वयं ध्रुवेण हविषेदानीमवनीयमानेन ध्रुवस्थालीगतेन सोमरसेन पूर्वं होतृचमसे स्थितं ध्रुवं सोममवनयामासि अधस्तान्नयामस्तस्योपरि त्वां सिञ्चाम इत्यर्थः । यथा येन प्रकारेण नोऽस्माकं सर्वमिज्जगत्सर्वमेव जङ्गमं गवादिकमयक्ष्मं रोगरहितं सुमनाः शोभनमनस्कमसद्भवेत् । यथा च नोऽस्माकं विशः प्रजाः सर्वा अपि केवली रोगरहिताः समनसोऽनुकूलमनसश्चेन्द्रः करादिन्द्रश्च कुर्यात् । यथा च नोऽस्माकं सर्वा इद्दिशो दिग्वर्तिन्यः सर्वा एव प्रजा अधीनाः स्युरिति शेषः । किंचास्माकं केवलीरसन्नसाधारण्येन वर्तेरन् । यथैतत्सर्वं सिध्यति तथा होतृचमसेऽवनयामीति पूर्वत्रान्वयः । त एते मन्त्रा बृहस्पतिसुतस्य हरिरसीत्यनयोरनुवाकयोर्मध्ये द्रष्टव्याः ॥

अत्र विनियोगसंग्रहः—

श्येना तृतीयसवने सप्तभिश्चमसाहुतिः ।
वषट्कृते मन्त्रहोमो वडित्यनुवषट्कृते ॥ १ ॥
तृम्पन्तां सर्वचमसान्हुत्वा जपति मध्यमे ।
सवने वैश्वकर्माख्यहोमा मन्त्रैस्तु पञ्चभिः ॥ २ ॥
यज्ञ–घोरा–अनन्या—ये भक्षयन्तो–नमः पिभिः ।
पूतभृत्याशिरं त्वस्मे क्षिपेन्मन्त्रचतुष्टयात् ॥ ३ ॥
भूतं ध्रुवमवेक्षेत प्रतिप्रस्थातृकर्म तत् ।
ग्रावाऽञ्जलौ गृहीत्वा विश्वे होतृचमसे नयेत् ॥ ४ ॥
ध्रुवमेकी करोत्यत्र मन्त्रान्तोऽसन्निती रितः ।
अष्टमे त्वनुवाकेऽस्मिन्नष्टाविंशतिरीरिताः ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

१ ख. घ. च. 'मसं न'।

( प्रतिगरानन्तरभाविमन्त्राभिधानम् )

( अथ तृतीयाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातःसवनं गायत्रियैव प्रातःसवने वज्रमन्तर्धत्त उक्थं वाचीत्याह माध्यंदिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप्त्रैष्टुभं माध्यंदिनꣳ सवनं त्रिष्टुभैव माध्यंदिने सवने वज्रमन्तर्धत्ते ( १ ) उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वरो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दाꣳसि संपादयेत्तेजः प्रातःसवन आत्मन्दधीतेन्द्रियं माध्यंदिने सवने पशूꣳस्तृतीयसवन इत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि ( २ ) त्रिपदा गायत्री गायत्रं प्रातःसवनं प्रातःसवन एव प्रतिगरे छन्दाꣳसि सं पादयत्यथो तेजो वै गायत्री तेजः प्रातःसवनं

तेज॑ ए॒व प्रा॑तःसव॒न आ॒त्मन्ध॑त्त उ॒क्थं वा॒ची-
त्या॑ह॒ माध्यं॑दिन॒ꣳ सव॑नं प्र॒ति॒गी॒र्यं च॒त्वार्ये॒-
ता॒न्यक्षरा॑णि॒ चतु॑ष्पदा त्रि॒ष्टुप्त्रैष्टु॑भ॒ं माध्यं॑दि-
न॒ꣳ सव॑न॒ं माध्यं॑दिन ए॒व सव॑ने प्रतिग॒रे छ-
न्दा॒ꣳसि॒ सं पा॑दयत्यथो॒ इ॒न्द्रि॒यं वै त्रि॒ष्टुगि॒-
न्द्रि॒यं माध्यं॑दिन॒ꣳ सव॑नम् ( ३ ) इ॒न्द्रि॒यमे॒व
माध्यं॑दि॒ने सव॑न आ॒त्मन्ध॑त्त उ॒क्थं वा॒चीन्द्रा॒-
येत्या॑ह तृ॒तीयसव॒नं प्र॑तिगी॒र्यं स॒प्तैता॒न्यक्षरा॑णि
स॒प्तप॑दा॒ शक्व॑री शाक्व॒राः प॒शवो॑ जाग॑तं तृ॒तीयस-
व॒नं तृ॑तीयसव॒न ए॒व प्र॑तिग॒रे छन्दा॒ꣳसि॒ सं पा॑दय-
त्यथो॑ प॒शवो॑ वै जग॑ती प॒शव॑स्तृतीयसव॒नं प॒शू-
ने॒व तृ॑तीयसव॒न आ॒त्मन्ध॑त्ते य॒द्वै होता॒ऽध्व॒र्यु-
म॒भ्याह्वय॑त आ॒व्य॑मस्मिन्दधाति॒ तद्यन्न ( ४ )
अ॒प॒हनी॑त पु॒राऽस्य॑ संवत्सरा॒द्गृह आ वे॑वीर-
ञ्छोꣳसा॒ मोद॑ इ॒वेति॑ प्र॒त्याह्व॑यते॒ तेनै॒व तदप॑
ह॒ते यथा॒ वा आय॑तां प्र॒तीक्ष॑त ए॒वम॑ध्व॒र्युः प्र॑-
ति॒गरं॑ प्र॒तीक्ष॑ते॒ यद॑भिप्रतिगृ॒णीया॒द्यथाऽऽय॑-
तया समृ॒च्छते॑ ता॒दृगे॒व तद्यद॑र्ध॒र्चाल्लु॒प्येत॒ यथा॒
धाव॑द्भ्यो॒ हीय॑ते ता॒दृगे॒व तत्प्रबा॒हुग्वा ऋ॒त्वि-
जा॑मुद्गी॒था उ॑द्गी॒थ ए॒वोद्गा॒तॄणाम् ( ५ ) ऋ॒चः

( प्रतिगरानन्तरभाविमन्त्राभिधानम् )

प्रणव उक्थशꣳसिनां प्रतिगरोऽध्वर्यूणां य एवं विद्वान्प्रतिगृणात्यन्नाद एव भवत्याऽस्य प्रजायां वाजी जायत इयं वै होताऽसावध्वर्युर्यदासीनः शꣳसत्यस्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे यत्तिष्ठन्प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति ( ६ ) तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुहे यदासीनः शꣳसति तस्मादितःप्रदानं देवा उप जीवन्ति यत्तिष्ठन्प्रतिगृणाति तस्मादमुतःप्रदानं मनुष्या उप जीवन्ति यत्प्राङासीनः शꣳसति प्रत्यङ्तिष्ठन्प्रतिगृणाति तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयति पराङा वर्तते वज्रमेव तन्नि करोति ( ७ ) ॥

( सवने वज्रमन्तर्धत्ते त्रीण्येतान्यक्षराणीन्द्रियं माध्यंदिनꣳ सवनं नोद्गातॄणामध्वर्युर्नैति वर्तयत्यष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( प्रतिगरानन्तरभाविमन्त्राभिधानम् )

( अथ तृतीयाष्टके द्वितीयप्रपाठके नवमोऽनुवाकः । )

---

यत् । वै । होतां । अध्वर्युम् । अभ्याह्वयंत इत्यंभि—आह्वयंते । वज्रंम् । एनम् । अभि । प्रेति । वर्तयति । उक्थंशा इत्युक्थ—शाः । इति । आह । प्रातःसवनमिति प्रातः—सवनम् । प्रतिगीर्येति प्रति—गीर्ये । त्रीणि । एतानि । अक्षराणि । त्रिपदेति त्रि—पदा । गायत्री । गायत्रम् । प्रातःसवनमिति प्रातः—सवनम् । गायत्रिया । एव । प्रातःसवन इति प्रातः—सवने । वज्रंम् । अन्तः । धत्ते । उक्थम् । वाचि । इति । आह । माध्यंदिनम् । सवंनम् । प्रतिगीर्येति. प्रति—गीर्ये । चत्वारि । एतानि । अक्षराणि । चतुष्पदेति चतुः—पदा । त्रिष्टुप् । त्रैष्टुभम् । माध्यंदिनम् । सवंनम् । त्रिष्टुभा । एव । माध्यंदिने । सवंने । वज्रंम् । अन्तः । धत्ते (१०) । उक्थम् । वाचि । इन्द्राय । इति । आह । तृतीयसवनमिति तृतीय—सवनम् । प्रतिगीर्येति प्रति—गीर्ये । सप्त । एतानि । अक्षराणि । सप्तपदेति सप्त—पदा । शक्करी । शाक्करः । वज्रंः । वज्रेण । एव । तृतीयसवन इति तृतीय—सवने । वज्रंम् । अन्तः । धत्ते । ब्रह्मवादिन इति

ब्रह्म—वादिनः । वदन्ति । सः । तु । वै । अध्वर्युः । स्यात् । यः । यथासवनमिति यथा—सवनम् । प्रतिगर इति प्रति—गरे । छन्दांसि । संपादयेदिति सं—पादयेत् । तेजः । प्रातःसवन इति प्रातः—सवने । आत्मन् । दधीत । इन्द्रियम् । माध्यंदिने । सवने । पशून् । तृतीयसवन इति तृतीय—सवने । इति । उक्थशा इत्युक्थ—शाः । इति । आह । प्रातःसवनमिति प्रातः—सवनम् । प्रतिगीर्येति प्रति—गीर्य । त्रीणि । एतानि । अक्षराणि (२)। त्रिपदेति त्रि—पदा । गायत्री । गायत्रम् । प्रातःसवनमिति प्रातः—सवनम् । प्रातःसवन इति प्रातः—सवने । एव । प्रतिगर इति प्रति—गरे । छन्दांसि । समिति । पादयति । अथो इति । तेजः । वै । गायत्री । तेजः । प्रातःसवनमिति प्रातः—सवनम् । तेजः । एव । प्रातःसवन इति प्रातः—सवने । आत्मन् । धत्ते । उक्थम् । वाचि । इति । आह । माध्यंदिनम् । सवनम् । प्रतिगीर्येति प्रति—गीर्य । चत्वारि । एतानि । अक्षराणि । चतुष्पदेति चतुः—पदा । त्रिष्टुप् । त्रैष्टुभम् । माध्यंदिनम् । सवनम् । माध्यंदिने । एव । सवने । प्रतिगर इति प्रति—गरे ।

छन्दांᳪसि । समिति । पादयति । अथो इति ।
इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियम् । माध्यंदिनम् ।
सवनम् ( ३ ) । इन्द्रियम् । एव । माध्यंदिने ।
सवने । आत्मन् । धत्ते । उक्थम् । वाचि । इन्द्राय ।
इति । आह । तृतीयसवनमिति तृतीय—सवनम् ।
प्रतिगीर्येति प्रति—गीर्य । सप्त । एतानि । अक्ष-
राणि । सप्तपदेति सप्त—पदा । शक्वरी । शाक्वराः ।
पशवः । जागतम् । तृतीयसवनमिति तृतीय—सवनम् ।
तृतीयसवन इति तृतीय—सवने । एव । प्रतिगर
इति प्रति—गरे । छन्दांᳪसि । समिति । पादयति ।
अथो इति । पशवः । वै । जगती । पशवः । तृतीय-
सवनमिति तृतीय—सवनम् । पशून् । एव । तृतीय-
सवन इति तृतीय—सवने । आत्मन् । धत्ते । यत् ।
वै । होता । अध्वर्युम् । अभ्याह्वयत इत्यभि—आ-
ह्वयते । आव्यम् । अस्मिन् । दधाति । तत् । यत् ।
न ( ४ ) । अपहनीतेत्यप—हनीत । पुरा । अस्य ।
संवत्सरादिति सं—वत्सरात् । गृहे । एति । वेवीरन् ।
शोᳪसा । मोदः । इव । इति । प्रत्याह्वयत इति
प्रति—आह्वयते । तेन । एव । तत् । अपेति ।
हते । यथा । वै । आयतामित्या—यताम् । प्रतीक्ष-

त इति प्रति—ईक्षंते । एवम् । अध्वर्युः । प्रतिगर-
मिति प्रति—गरम् । प्रतीति । ईक्षते । यत् । अभि-
प्रतिगृणीयादित्यभि—प्रतिगृणीयात् । यथा । आयंत-
येत्या—यतया । समृच्छत इति सम्—ऋच्छते । तादृक् ।
एव । तत् । यत् । अर्धर्चादित्यर्ध—ऋचात् । लुप्येत ।
यथा । धावंभ्य इति धावंत्—भ्यः । हीयंते । तादृक् । एव ।
तत् । प्रबाहुगिति प्र—बाहुक् । वै । ऋत्विजाम् । उ-
द्गीथा इत्युंत्—गीथाः । उद्गीथ इत्युंत्—गीथः । एव ।
उद्गातृणामित्युंत्—गातृणाम् ( ५ ) । ऋचः । प्रणव
इति प्र—नवः । उक्थशंसिनामित्युक्थ—शंसि-
नाम् । प्रतिगर इति प्रति—गरः । अध्वर्यूणाम् ।
यः । एवम् । विद्वान् । प्रतिगृणातीति प्रति—गृणा-
ति । अन्नाद इत्यन्न—अदः । एव । भवति । एति ।
अस्य । प्रजायामिति प्र—जायाम् । वाजी । जायते ।
इयम् । वै । होता । असौ । अध्वर्युः । यत् । आ-
सीनः । शंसंति । अस्याः । एव । तत् । होता ।
न । एति । आस्ते । इव । हि । इयम् । अथो इति ।
इमाम् । एव । तेन । यजमानः । दुहे । यत् । ति-
ष्ठन् । प्रतिगृणातीति प्रति—गृणाति । अमुष्याः ।
एव । तत् । अध्वर्युः । न । एति ( ६ ) । तिष्ठंति ।

इव। हि। असौ। अथो इति। अमूम्। एव। तेन। यजमानः। दुहे। यत्। आसीनः। शꣳसति। तस्मात्। इतःप्रदानमितीतः—प्रदानम्। देवाः। उपेति। जीवन्ति। यत्। तिष्ठन्। प्रतिगृणातीति प्रति—गृणाति। तस्मात्। अमुतःप्रदानमित्यमुतः—प्रदानम्। मनुष्याः। उपेति। जीवन्ति। यत्। प्राङ्। आसीनः। शꣳसति। प्रत्यङ्। तिष्ठन्। प्रतिगृणातीति प्रति—गृणाति। तस्मात्। प्राचीनम्। रेतः। धीयते। प्रतीचीः। प्रजा इति प्र—जाः। जायन्ते। यत्। वै। होता। अध्वर्युम्। अभ्याह्वयेत इत्यभि—आह्वयते। वज्रम्। एनम्। अभि। प्रेति। वर्तयति। पराङ्। एति। वर्तते। वज्रम्। एव। तत्। नीति। करोति (७)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
द्वितीयप्रपाठके नवमोऽनुवाकः॥ ९॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः। )

---

उक्ताः प्रस्थितयाज्याख्यहोमाद्या अष्टमेऽखिलाः॥
अथ नवमे प्रतिगरानन्तरभाविमन्त्रा वक्तव्याः। शंसितुर्मन्त्रेण प्रोत्साहनं प्रतिगरस्तस्य प्रतिगरस्यानन्तरभाविषु मन्त्रेषु प्रथममुत्पाद्य विनियुङ्क्ते—

यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य

त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातः-
सवनं गायत्रियैव प्रातःसवने वज्रमन्तर्धत्ते, इति।

यदाशंसनकाले होताऽध्वर्युमाभिमुख्येनाऽऽह्वयति। आह्वानमन्त्रस्तु शोंसा-वोमिति। तस्यायमर्थः—हेऽध्वर्यो शस्त्रं पठानि मदीयशस्त्रपाठकाले प्रति-गराय त्वं सावधानो भवेति पदेन यदध्वर्युं प्रति होतुराह्वानं तदेतद्वज्रप्रहारमयं होता करोति। तस्माद्धोतृप्रयुक्तवज्रप्रहारं समाधातुं प्रातःसवनप्रतिगरादूर्ध्व-मुक्थशा इति मन्त्रेण होतारं स्तुवीत। उक्थं शस्त्रं शंसतीत्युक्थशाः सम्यक्शं-सितवानसीति मन्त्रार्थः। प्रतिगरप्रकारस्त्वापस्तम्बेन दर्शितः—"अध्वर्युः सदोबिले प्राङ्मुख उपविश्येडा देवहूरिति शस्त्रं प्रतिगरिष्यञ्जपत्यध्वर्यो शोंसावोमिति होतुरभिज्ञाय प्रदक्षिणमावर्तमानः शोंसामोदैवेति प्रत्याह्वयते शंसामोद इवेति वा" इति। प्रतिगर्तुं पात्रं धारयमाणः सदोबिले प्रत्यङ्ङृति-ग्न्संबोधनमाश्रुत्य होतारं प्रत्याह्वयते। हे होतः शोंसा सर्वथैव मोद एवा-स्माकं त्वदीयेन प्रतिगरेणेति मन्त्रार्थः। ऋचि समाम्नायामयमेव प्रतिगरः प्रण-वादिः पठ्यते। अस्त्विति प्रणवस्यार्थः। कृत्स्नशस्त्रसमाप्तावङ्गीकारवाचिना प्रणवेनैव प्रतिगरः। प्रत्युत्तरकथनं प्रतिगरशब्देनोच्यते। प्रातःसवने यानि शस्त्राणि तेषां सर्वेषां प्रतिगरमुक्त्वा तदवसाने त्र्यक्षरमुक्थशा इति मन्त्रं पठेत्। अत्राक्षरगतत्रित्वेन त्रिपदा गायत्री स्मार्यते। तया च गायत्र्या तद्युक्तं प्रातःसवनं स्मर्यते। प्रातःसवने स्मृतया गायत्र्यैव होतृप्रयुक्तं वज्रम-न्तर्हितं करोति॥

अथ मन्त्रान्तरमुत्पाद्य विधत्ते—[1]

उक्थं वाचीत्याह माध्यंदिनꣳ सवनं
प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा
त्रिष्टुप्त्रैष्टुभं माध्यंदिनꣳ सवनं त्रिष्टुभैव
माध्यंदिने सवने वज्रमन्तर्धत्ते, इति।

पूर्ववद्व्याख्येयम्। उक्थं शस्त्रं त्वदीयायां वाचि सम्यक्प्रवृत्तमिति मन्त्रार्थः॥

पुनरपि मन्त्रान्तरमुत्पाद्य विधत्ते—

१ ख. घ. ङ. च. °माहृत्य।

( प्रतिगरानन्तरभाविमन्त्राभिधानम् )

उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्करी शाक्करो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते , इति।

वज्रो वै शक्करीत्युक्तत्वाद्वज्रस्य शाक्करत्वम्। अनेन सप्ताक्षरेण शाक्करेण वज्रेण होतृप्रयुक्तं वज्रमन्तर्हितं करोति ॥

अथ विहितं मन्त्रत्रयं प्रकारान्तरेण प्रशंसितुमुपोद्घातमाह—

ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दाꣳसि संपादयेत्तेजः प्रातःसवन आत्मन्दधीतेन्द्रियं माध्यंदिने सवने पशूꣳस्तृतीयसवन इति , इति।

यः पुरुषः सवनानुरूपेण च्छन्दांसि कर्तुं जानाति प्रातःसवने गायत्री माध्यंदिने सवने त्रिष्टुप्तृतीयसवने जगतीत्येवंविधानि च्छन्दांसि। तानि च प्रतिगरेऽभिहिते सति पश्चात्संपादनीयानि। एतत्संपादने यः समर्थः स एव मुख्योऽध्वर्युः स्यात्। किंच, प्रातःसवने समाप्ते सति स्वात्मनि यस्तेजो धारयेन्माध्यंदिने समाप्ते सतीन्द्रियं धारयेत्तृतीयसवने समाप्ते सति पशून्धारयेत्स एव मुख्योऽध्वर्युरित्येवं ब्रह्मवादिनः परस्परमाहुः ॥

तत्र प्रथममन्त्रेण सवनोचितच्छन्दःसंपत्तिं तेजोधारणं च दर्शयति—

उक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातःसवनं प्रातःसवन एव प्रतिगरे छन्दाꣳसि संपादयत्यथो तेजो वै गायत्री तेजः प्रातःसवनं तेज एव प्रातःसवन आत्मन्धत्ते, इति।

प्रातःसवनगतानां स्तोत्रशस्त्राणां गायत्रीछन्दस्कत्वात्प्रातःसवनस्य बहिष्पवमानगता उपास्मै गायतेत्याद्या आज्यस्तोत्रगता अग्न आयाहीत्याद्याश्च गायत्रीछन्दस्काः। तथा शस्त्रेष्वपि द्रष्टव्यम्। गायत्र्युपदेशेन ब्राह्मण्यसंपूर्तेर्गायत्र्यास्तेजोरूपत्वम् ॥

द्वितीयमन्त्रेणोचितच्छन्दःसंपत्तिमिन्द्रियधारणं च दर्शयति—

उक्थं वाचीत्याह माध्यंदिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप्त्रैष्टुभं माध्यंदिनꣳ सवनं माध्यंदिन एव सवने प्रतिगरे छन्दाꣳसि सं पादयत्यथो इन्द्रियं वै त्रिष्टुगिन्द्रियं माध्यंदिनꣳ सवनमिन्द्रियमेव माध्यंदिने सवन आत्मन्धत्ते, इति।

माध्यंदिनपवमाने म तु द्रवेति सूक्तस्य त्रिष्टुप्छन्दस्कत्वात्तत्सवनं त्रैष्टुभं प्रजापतेरुरसो बाहुभ्यां चेन्द्रेण सहोत्पन्नत्वादिन्द्रसृष्टस्येन्द्रियस्य त्रिष्टुप्त्वम् ॥

तृतीयसवनोचितच्छन्दःसंपत्तिं पशुप्राप्तिं च सप्ताक्षरमन्त्रेण दर्शयति—

उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्करी शाक्कराः पशवो जागतं तृतीयसवनं तृतीयसवन एव प्रतिगरे छन्दाꣳसि सं पादयत्यथो पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन्धत्ते, इति।

शक्करीजगत्योः पशुप्राप्तिहेतुत्वं सवनगतस्तोत्रशस्त्रर्चां जगतीछन्दस्कत्वात्तत्सवनं जागतम् । अतः शक्करीद्वारा सवनोचितच्छन्दःसंपत्तिस्तृतीयसवनस्य पशुप्राप्तिहेतुतया पशुत्वम् ॥

अथ प्रत्याह्वानं विधत्ते—

यद्वै होताऽध्वर्युमभ्याह्वयत आव्यमस्मिन्दधाति तद्यन्नापहनीत पुराऽस्य संवत्सराद्गृह आ वेवीरञ्छोꣳसा मोद इवेति प्रत्याह्वयते तेनैव तदप हते, इति।

आ समन्ताद्व्यते पीड्यते येन रोगविशेषेण स रोगविशेष आव्यः । यदा होताऽध्वर्युं संबोध्य शोंसावोमिति प्रह्वमाभिमुख्येनाऽऽह्वयते तदानीमस्मिन्नध्वर्यौ रोगविशेषं स्थापयति सावधानत्वहेतोश्चित्तक्लेशस्योपद्रवत्वात् । तद्रोग-

१ ख. °रा स्वस्वोधि°।

( प्रतिगरानन्तरभाविमन्त्राभिधानम् )
स्थापनं यद्यध्वर्युर्नापहनीत न निराकुर्यात्तदानीमस्याध्वर्योर्गृहे संवत्सरात्पुरैव प्रजा आवेवीरन्सर्वरोगादिभिः पीड्येरन् । ततस्तत्परिहाराय शोंऽसा मोद इवेति मन्त्रेणाध्वर्युः प्रत्याह्वानं कुर्यात् । तेनैव प्रत्याह्वानेन तदभ्याह्वानं कृतं रोगजातमपहते विनाशयति । प्रश्नरूपस्याऽऽभिमुख्येनाऽऽह्वानस्य प्रत्युत्तररूपमाह्वानं परिहारः । मन्त्रस्यायमर्थः—हे होतस्त्वं शोंसा सर्वथा शंसैव मोद इवास्माकं हर्ष इव हर्ष एवेति ॥

इदानीमध्वर्योरप्रमत्तत्वं विधत्ते—

यथा वा आयतां प्रतीक्षत एव-
मध्वर्युः प्रतिगरं प्रतीक्षते, इति।

यथा लोके पृच्छन्तं वादिनं प्रत्याभिमुख्येन नियतां वाचं वक्तुं प्रतिवादी सावधानः प्रतीक्षते। यथा वा राजामात्यादिकं प्रति सेवको भृत्य आभिमुख्येन नियतां वाचं वक्तुमप्रमत्तः प्रतीक्षते, एवमसावध्वर्युः प्रतिगरं प्रत्युत्तरं वक्तुं सर्वदा सावधानः प्रतीक्षेत ॥

प्रतिगरकालमतिक्रम्य वा तस्मात्कालात्प्रागेव वा प्रतिगरे बाधं दर्शयति-

यदभिप्रतिगृणीयाद्यथाऽऽयतया
समृच्छते तादृगेव तत् , इति।

अर्धर्चसमाप्तिः प्रतिगरस्य कालस्तस्याभितो यदि प्रतिगृणीयात्तदा यथा प्रागतीते वा काले प्रत्युत्तरमाभाषमाण आयतया वाचा समृच्छत आभिमुख्येन या वाग्वक्तव्या तया नियतया वाचा हीनो भवतीत्यर्थः। तदेतदकाले प्रतिगरोच्चारणं तादृग्भवति ॥

प्रतिगरविस्मरणे बाधं दर्शयति—

यदर्धर्चाल्लुप्येत यथा धाव-
द्भ्यो हीयते तादृगेव तत्, इति।

अर्धर्चसमाप्तेरनन्तरं यदि प्रतिगरो लुप्यते। तत्र दृष्टान्तो यथा लोके चोरव्याघ्रादिभयाकुले महारण्ये शीघ्रं धावद्भ्यः सार्थगतेभ्यः पुरुषेभ्यः सकाशात्कश्चिद्धावितुमशक्तो हीनो गच्छन्संश्चोरादिभिरुपद्रुतो भवति। तदेतदर्धर्चप्रतिगरलोपनं तादृगेव। तस्मात्सावधानः प्रतिगरकालं प्रतीक्षेत ॥

उद्गातृहोतृसाम्येनाध्वर्योः प्रतिगरं प्रशंसति—

प्रबाहुग्वा ऋत्विजामुद्गीथा उद्गीथ

एवोद्गातॄणामृचः प्रणव उक्थ-
शꣳसिनां प्रतिगरोऽध्वर्यूणाम्, इति।

ऋत्विजामुद्गातृहोत्रध्वर्यूणामुद्गीथा उत्कृष्टगानविशेषाः प्रबाहुग्वै समाना एव। समानत्वं कथमिति तदुच्यते—उद्गातॄणां सामगानामुद्गीथनाम्नैव गानविशेषः प्रसिद्धः। प्रस्तावमन्त्रादुपरितना भक्तिरुद्गीथः। स च प्रणवपुरःसरं गीयते। एवमुक्थशंसिनां होतॄणां संबन्धी प्रणव उद्गीथः। अध्वर्यूणां तु प्रतिगर उद्गीथः। तथा च श्रूयते—"ओमिति सामानि गायन्ति। ओꣳ शोमिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति" इति। ओं शोꣳसा मोद इवेति ब्रुवन्सामवदुच्चारयति॥

प्रतिगरवेदनं प्रशंसति—

य एवं विद्वान्प्रतिगृणात्यन्नाद एव भव-
त्याऽस्य प्रजायां वाजी जायते, इति॥

होतुः शंसनकाल उपवेशनमध्वर्योश्च प्रतिगरकाल उत्थानं क्रमेण विधत्ते—

इयं वै होताऽसावध्वर्युर्यदासीनः शꣳस-
त्यस्या एव तद्धोता नैत्यास्त इव हीयमथो
इमामेव तेन यजमानो दुहे यत्तिष्ठन्प्रतिगृ-
णात्यमुष्या एव तदध्वर्युर्नैति तिष्ठतीव
ह्यसावथो अमूमेव तेन यजमानो दुहे, इति।

होतुर्भूमिस्वरूपत्वादयमासीनः शंसेत्तेनोपवेशनेनास्या एव भूमेर्होता नापगच्छति। भूमिश्चाऽऽसीनेव दृश्यते। किंच, तथा सति यजमानो भूमिं दुग्धे तत्रत्यं सारं गृह्णातीत्यर्थः। अध्वर्योः स्वर्गरूपत्वादुत्थित एवायं प्रतिगृणीयात्। तथा सति अयमध्वर्युरमुष्या दिवो नापगच्छति। द्यौश्च तिष्ठतीव दृश्यते। उपरिवर्तमानत्वात्। किंचाध्वर्योरुत्थितत्वेन यजमानो दिवं दुग्धे तत्रत्यं सारं गृह्णाति॥

प्रकारान्तरेणोपवेशनोत्थाने प्रशंसति—

यदासीनः शꣳसति तस्मादितःप्रदानं देवा
उप जीवन्ति यत्तिष्ठन्प्रतिगृणाति तस्मा-

( प्रतिगरानन्तरभाविमन्त्राभिधानम् )

दमुतःप्रदानं मनुष्या उप जीवन्ति , इति।

यस्मादासीनो होता शꣳसति तस्माद्देवा इतःप्रदानमुपजीवन्ति । अस्मिँल्लोके यत्प्रदीयते हविस्तदुपजीवन्तीत्यर्थः । यस्मादध्वर्युस्तिष्ठन्प्रतिगृणाति तस्मान्मनुष्या अमुतःप्रदानमुपजीवन्ति । अमुष्य लो(ष्माल्लो)काद्देवैः प्रेरितं वर्षमुपजीवन्तीत्यर्थः ॥

होतुः प्राङ्मुखत्वमध्वर्योः प्रत्यङ्मुखत्वं च विधत्ते—

यत्प्राङासीनः शꣳसति प्रत्यङ्तिष्ठन्प्रतिगृणाति तस्मात्प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते , इति।

यस्माद्धोता प्राङ्मुखस्तस्मात्प्राचीनं पत्नीक्षेत्राभिमुखं रेतः स्थाप्यते। यस्मादध्वर्युः प्रत्यङ्मुखस्तस्मात्प्रजाः क्षेत्रविमुखा उत्पद्यन्ते ॥

होतुरभ्याह्वानात्पूर्वमिडा देवहूरिति मन्त्रं जपतः प्राङ्मुखस्याध्वर्योरभ्याह्वानादूर्ध्वं प्रत्यङ्मुखत्वाय परावृत्तिं विधत्ते—

यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयति पराङा वर्तते वज्रमेव तन्नि करोति ॥ , इति ॥

यद्यपि शोंसावोमिति होतुरभ्याह्वानं सकृदेव तथाऽपि त्रीनर्थान्विधातुं द्वितीयानुवादस्तस्मिन्नेव काले प्राङ्मुखस्य परावृत्तिं विधातुं तृतीयानुवादः । अत एवाऽऽपस्तम्बेनोक्तम्—" प्रदक्षिणमावर्तमानः शोंसा मोदैवेति प्रत्याह्वयते " इति ॥

अत्र विनियोगसंग्रहः—

प्रत्याह्वयेत शोंसावो सवनेषु त्रिषूच्चरेत् ।
उक्थादिमन्त्रांस्त्रीनत्र मन्त्राश्चत्वार ईरिताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

उपयामगृंहीतोऽसि वाक्षसदंसि वाक्पाभ्यां त्वा क्रतुपाभ्यांमस्य यज्ञस्यं ध्रुवस्याध्यंक्षाभ्यां गृह्णाम्युपयामगृंहीतोऽस्यृतसदंसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यांमस्य यज्ञस्यं ध्रुवस्याध्यंक्षाभ्यां गृह्णाम्युपयामगृंहीतोऽसि श्रुतसदंसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यांमस्य यज्ञस्यं ध्रुवस्याध्यंक्षाभ्यां गृह्णामि देवेभ्यंस्त्वा विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्यो विष्णंवुरुक्रमैष ते सोमस्तꣳ रक्षस्व ( १ ) तं ते दुश्चक्षा माऽवं ख्यन्मयि वसुंः पुरोवसुर्वाक्पा वाचं मे पाहि मयि वसुंर्विदद्वंसुश्चक्षुष्पाश्चक्षुंर्मे पाहि मयि वसुंः संयद्वंसुः श्रोत्रपाः श्रोत्रं मे पाहि भूरंसि श्रेष्ठो रश्मीनां प्रांणपाः प्राणं मे पाहि धूरंसि श्रेष्ठो रश्मीनामंपानपा अंपानं मे पाहि यो नं इन्द्रवायू मित्रावरुणावश्विनावभिदासंति भ्रातृंव्य उत्पिपीते शुभस्पती इदमहं तमधंरं पादयामि यथेन्द्राहमुंत्तमश्चेतयांनि ( २ ) ॥

( रक्षस्व भ्रातृंव्यस्त्रयोदंश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( प्रतिनिर्ग्राह्यमन्त्राभिधानम् )

( अथ तृतीयाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

उपयामगृहीत इत्युपयाम—गृहीतः । असि । वाक्षसदिति वाक्ष—सत् । असि । वाक्पाभ्यामिति वाक्—पाभ्याम् । त्वा । क्रतुपाभ्यामिति क्रतु—पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यक्षाभ्यामित्यधि—अक्षाभ्याम् । गृह्णामि । उपयामगृहीत इत्युपयाम—गृहीतः । असि । ऋतसदित्यृत—सत् । असि । चक्षुष्पाभ्यामिति चक्षुः—पाभ्याम् । त्वा । क्रतुपाभ्यामिति क्रतु—पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यक्षाभ्यामित्यधि—अक्षाभ्याम् । गृह्णामि । उपयामगृहीत इत्युपयाम—गृहीतः । असि । श्रुतसदिति श्रुत—सत् । असि । श्रोत्रपाभ्यामिति श्रोत्र—पाभ्याम् । त्वा । क्रतुपाभ्यामिति क्रतु—पाभ्याम् । अस्य । यज्ञस्य । ध्रुवस्य । अध्यक्षाभ्यामित्यधि—अक्षाभ्याम् । गृह्णामि । देवेभ्यः । त्वा । विश्वदेवेभ्य इति विश्व—देवेभ्यः । त्वा । विश्वेभ्यः । त्वा । देवेभ्यः । विष्णो । उरुक्रमेत्युरु—क्रम । एषः । ते । सोमः । तम् । रक्षस्व ( १ ) । तम् । ते । दुश्चक्षा इति दुः—चक्षाः । मा । अवेति । स्यत् । मयि । वसुः । पुरोवसुरिति पुरः—वसुः । वाक्पा

इति वाक्—पाः । वाचम् । मे । पाहि । मयि । वसुः । विदद्वसुरिति विदत्—वसुः । चक्षुष्पा इति चक्षुः—पाः । चक्षुः । मे । पाहि । मयि । वसुः । संयद्वसुरिति संयत्—वसुः । श्रोत्रपा इति श्रोत्र—पाः । श्रोत्रम् । मे । पाहि । भूः । असि । श्रेष्ठः । रश्मीनाम् । प्राणपा इति प्राण—पाः । प्राणमिति प्र—अनम् । मे । पाहि । धूः । असि । श्रेष्ठः । रश्मीनाम् । अपानपा इत्यपान—पाः । अपानमित्यप—अनम् । मे । पाहि । यः । नः । इन्द्रवायू इतीन्द्र—वायू । मित्रावरुणाविति मित्रा—वरुणौ । अश्विनौ । अभिदासतीत्यभि—दासति । भ्रातृव्यः । उत्पिपीत इत्युत्—पिपीते । शुभः । पती इति । इदम् । अहम् । तम् । अधरम् । पादयामि । यथा । इन्द्र । अहम् । उत्तम इत्युत्—तमः । चेतयानि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः । )

---

उक्तः प्रतिगरः साङ्गः समन्त्रो नवमे स्फुटम् ॥

अथ दशमे प्रतिनिर्ग्राह्यमन्त्रा उच्यन्ते ।

( प्रतिनिर्ग्राह्यमन्त्राभिधानम् )

कल्पः—"उपयामगृहीतोऽसि वाक्षसदसीति प्रतिनिर्ग्राह्यं गृहीत्वा न सादयति" इति।

पाठस्तु—

उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि, इति।

हे प्रतिनिर्ग्राह्य त्वमुपयामेन पार्थिवपात्रेण गृहीतोऽसि। वाक्षो वागिन्द्रियं तत्रावस्थितोऽसि। "वाग्वा एषा यदैन्द्रवायवः" इति श्रुतेः। तादृशं त्वां वाचः पालकाभ्यां क्रतोर्यज्ञस्य पालकाभ्यां ध्रुवस्याविनाशिनोऽस्य यज्ञस्याध्यक्षाभ्यां स्वामिभ्यामिन्द्रवायुभ्यां गृह्णामि तदर्थं गृह्णामीत्यर्थः॥

कल्पः—"ग्रहाणां प्रतिनिर्ग्राह्याणां ग्रहणादित्योपस्थानावनयनप्रदानान्युत्तरोत्तरैर्मन्त्रैः" इति।

अस्यायमर्थः—प्रतिनिर्ग्राह्यनामका ये ग्रहा ऐन्द्रवायवमैत्रावरुणाश्विनसंबन्धिनस्तेषां ग्रहणादिक्रियाऽऽम्नानक्रमेणोत्तरोत्तरैर्मन्त्रैर्द्रष्टव्येति।

तत्रैन्द्रवायवप्रतिनिर्ग्राह्यस्य ग्रहणमन्त्र उक्तः। मैत्रावरुणप्रतिनिर्ग्राह्यस्य ग्रहणमन्त्रः—

उपयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि, इति।

ऋतं सत्यं यज्ञो वा तत्र सीदतीत्यृतसत्॥

आश्विनप्रतिनिर्ग्राह्यमन्त्रः—

उपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि, इति।

श्रुतं श्रोत्रेन्द्रियं तत्र सीदतीति श्रुतसत् "चक्षुर्मैत्रावरुणꣳ श्रोत्रमाश्विनम्।" इति" श्रुत्यन्तरात्॥

देवेभ्यस्त्वा विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्यः—

१ ख. घ. ङ. च. °शिपालनस्यास्य।

कल्पः—" देवेभ्यस्त्वेत्यादित्यपात्रेण प्रतिप्रस्थाताऽऽदित्यस्थाल्यां संपातमवनीय " इति ।

हे ऐन्द्रवायवप्रतिनिग्राह्य देवार्थं त्वामवनयामीति शेषः । एवं विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्य इति मन्त्राभ्यामुत्तरयोः संपातावनयनं कुर्यात् । गणप्राधान्येन विश्वदेवेभ्य इति समासनिर्देशः । प्रत्येकप्राधान्येन विश्वेभ्य इति व्यासनिर्देशः ॥

विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व
तं ते दुश्चक्षा माऽव ख्यत्—

कल्पः—" विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्वेत्यादित्यपात्रेण प्रतिप्रस्थाताऽऽदित्यस्थालीमपिदधाति " इति ।

तं ते दुश्चक्षा माऽव ख्यदित्येष आम्नातो मन्त्रशेषः ।

हे उरुक्रम विष्णो रक्षणार्थमेष सोमस्त्वाधीनः । अतस्तं रक्षस्व । तं ते त्वदीयं सोमं दुश्चक्षाः पापदृष्टिः पुरुषो माऽवख्यन्मा द्राक्षीत् ॥

कल्पः—" ग्रहमध्वर्युरादाय क्षिप्रꣳ होतारमतिद्रुत्य मयि वसुः पुरोवसुरिति ग्रहꣳ होत्रे प्रयच्छति " इति ।

पाठस्तु—

मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि, इति ।

वसुर्धनरूपः सोमो मयि वर्तते । स कीदृशः, पुरोवसुः पुरस्कृतेतरसमस्तधनः । यद्वा पुरस्तात्प्राणादीनां वासयिता । तथाविधस्त्वं वाक्पा वाचः पालकः । अतो मम वाचं पाहि ॥

यथाऽनेन मन्त्रेणैन्द्रवायवग्रहो होत्रे दत्त एवमुत्तराभ्यां मन्त्राभ्यां मैत्रावरुणाश्विनग्रहौ देयौ । तयोः पाठस्तु—

मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि मयि
वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि, इति ।

विदद्वसुर्लब्धसमस्तधनः । संयद्वसुः प्राप्तसमस्तधनः ॥

भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि—

( प्रतिनिर्ग्राह्यमन्त्राभिधानम् )

कल्पः—"हुते चाऽऽदित्यमुपतिष्ठते भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहीति" इति।

हे हस्तस्थ सोम त्वं भूरसि सुखानां भावयिताऽसि। अतो रश्मीनां सुखप्रकाशकानां वस्तूनां मध्ये त्वं श्रेष्ठोऽसि। त्वमेव प्राणस्य फलकस्तस्मान्मे प्राणं पाहि पालय॥

यथाऽनेन मन्त्रेणैन्द्रवायवग्रहहोमादूर्ध्वमादित्योपस्थानं तथैवोत्तरेण मन्त्रेण मैत्रावरुणग्रहहोमादूर्ध्वमादित्यमुपतिष्ठते। पाठस्तु—

धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि, इति।

हे मैत्रावरुण ग्रह त्वं धूरसि दुःखानां हिंसिताऽसि। शेषं पूर्ववत्। आश्विनग्रहहोमादूर्ध्वभावी तूपस्थानमन्त्रः शाखान्तरे द्रष्टव्यः॥

कल्पः—"यदि मन्येत यजमानः पूर्वो माऽतिक्रान्तो भ्रातृव्य इति प्राग्घोमादङ्गुष्ठेनाङ्गुलिमवगृह्णीयाद्यो न इन्द्रवायू अभिदासतीति" इति।

पाठस्तु—

यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति
भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं
पादयामि यथेन्द्राहमुत्तमश्चेतयानि॥, इति॥

हे इन्द्रवायू यो भ्रातृव्यो नोऽस्मानभिदासति हिनस्ति, उत्पिपीतेऽस्मानुल्लङ्घ्य सोमं पिबति हे शुभस्पती शुभस्य कर्मणः पालयितारौ तं भ्रातृव्यमहमधरं पादयाम्यपकृत्य पातयामि। इदमितिशब्देन तर्जन्याऽङ्गुल्याऽङ्गुष्ठेनावग्रहणमभिनीय प्रदर्श्यते। हे इन्द्र यथाऽहं भ्रातृव्यादुत्तमः संश्चेतयानीहलोकपरलोकज्ञानवान्भूयासं तथा त्वमनुगृहाणेति शेषः। मित्रावरुणाविति द्वितीयमन्त्रेऽश्विनाविति तृतीयमन्त्रे च शेषं सर्वमनुषज्य व्याख्येयम्॥

अत्र विनियोगसंग्रहः—

उपेति प्रतिनिर्ग्राह्या ग्रहीतव्यास्त्रिभिः क्रमात्।
देवेभ्यो निनयेच्छेषांस्त्रिभिरादित्यपात्रके॥ १॥
विष्णो तत्पात्रमाच्छाद्य द्विदेवत्यग्रहानपि।
होत्रे दद्यात्त्रिभिः सूर्यमुपतिष्ठेत भूर्द्वयात्॥ २॥

---

१ ख. पादयामि।

यो नस्त्रिभिस्तर्जनीं तामङ्गुष्ठेनोपपीडयेत् ।
इन्द्रमित्राश्विभिर्भिन्ना मन्त्राः पञ्चदशात्र ते ॥ ३ ॥

त एते मन्त्रा ऋतुग्रहानुवाकात्पूर्वं द्रष्टव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वꣳ सख्यमाविथ । प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतीꣳषि बिभ्रते न वेधसे । अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः । तिस्र उ ते तनुवो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् । सं वां कर्मणा समिषा ( १ ) हिनोमीन्द्राविष्णू अपसस्पारे अस्य । जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता । उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् । त्रीण्यायूꣳषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने । ताभिर्देवानामवो यक्षि

विद्वानर्थ (२) भव यजमानाय शं योः ।
अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः ।
स त्रीꣳरेकादशाꣳ इह । यक्षच्च पिप्रयच्च नो
विप्रो दूतः परिष्कृतः । नभन्तामन्यके समे ।
इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो
नवतिं च श्नथिष्टम् । शतं वर्चिनः सहस्रं च
साकꣳ हथो अप्रत्यसुरस्य वीरान् । उत माता
महिषमन्ववेनदमी त्वा जहति पुत्र देवाः ।
अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो
वितरं वि क्रमस्व (३) ॥

(इषाऽर्थ त्वा त्रयोदश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

यो वै पवमानानां त्रीणि परिभूः स्फ्यः स्वस्तिर्भक्षेहि महीनां पयोऽसि देव सवितरेतत्ते श्येनाय यद्वै होतोपयामगृहीतोऽसि वाक्षसदसि प्र सो अग्न एकादश ॥ ११ ॥

यो वै स्फ्यः स्वस्तिः स्वधायै नमः प्र मुञ्च तिष्ठतीव
षट्चत्वारिꣳशत् ॥ ४६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहिताया तृतीयाष्टके
द्वितीयः प्रपाठकः ॥ २ ॥

( अथ तृतीयाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

प्रेति । सः । अग्ने । तव । ऊतिभिरित्यूति—भिः । सुवीराभिरिति सु—वीराभिः । तरति । वाजकर्मभिरिति वाजकर्म—भिः । यस्य । त्वम् । सख्यम् । आविथ । प्रेति । होत्रे । पूर्व्यम् । वचः । अग्नये । भरत । बृहत् । विपामिति वि—पाम् । ज्योतींषि । बिभ्रते । न । वेधसे । अग्ने । त्री । ते । वाजिना । त्री । सधस्थेति सध—स्था । तिस्रः । ते । जिह्वाः । ऋतजातेत्यृत—जात । पूर्वीः । तिस्रः । उ । ते । तनुवः । देववाता इति देव—वाताः । ताभिः । नः । पाहि । गिरः । अप्रयुच्छन्नित्यप्र—युच्छन् । समिति । वाम् । कर्मणा । समिति । इषा ( १ ) । हिनोमि । इन्द्राविष्णू इतीन्द्रा—विष्णू । अपसः । पारे । अस्य । जुषेथाम् । यज्ञम् । द्रविणम् । च । धत्तम् । अरिष्टैः । नः । पथिभिरिति पथि—भिः । पारयन्ता । उभा । जिग्यथुः । न । परेति । जयेथे इति । न । परेति । जिग्ये । कतरः । चन । एनोः । इन्द्रः । च । विष्णो इति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वीति । तत् । ऐरयेथाम् । त्रीणि । आयूंषि । तव । जातवेद इति जात—वेदः । तिस्रः ।

आजानीरित्यां—जानीः । उषसः । ते । अग्ने । ताभिः । देवानाम् । अवः । यक्षि । विद्वान् । अथ (२) । भव । यजमानाय । शम् । योः । अग्निः । त्रीणि । त्रिधातूनीति त्रि—धातूनि । एति । क्षेति । विदथा । कविः । सः । त्रीन् । एकादशान् । इह । यक्षत् । च । पिप्रयत् । च । नः । विप्रः । दूतः । परिष्कृतः । नभन्ताम् । अन्यके । समे । इन्द्राविष्णू इतीन्द्रा—विष्णू । दृंहिताः । शम्बरस्य । नव । पुरः । नवतिम् । च । श्नथिष्टम् । शतम् । वर्चिनः । सहस्रम् । च । साकम् । हथः । अप्रति । असुरस्य । वीरान् । उत । माता । महिषम् । अन्विति । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः । अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णो इति । वितरमिति वि—तरम् । वीति । क्रमस्व (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके द्वितीयः प्रपाठकः ॥ २ ॥**

( अथ तृतीयकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः । )

---

प्रतिनिर्ग्राह्यमन्त्रास्तु दशमे परिकीर्तिताः ॥
अथैकादशे त्रैधातवीयेष्टिविषया मन्त्रा उच्यन्ते ।

कल्पः—" प्र सो अग्न इत्युष्णिहककुभौ धाय्ये दधात्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परिदधाति सं वां कर्मणोभा जिग्यथुरिति याज्यानुवाक्ये उत्तरे संयाज्ये " इति ।

धाय्ययोः प्रथमामाह—

प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति
वाजकर्मभिः । यस्य त्वꣳ सख्यमाविथ ।, इति ।

हेऽग्ने यस्य यजमानस्य त्वं सख्यमाविथ सखिवत्स्नेहं पालितवानसि स यजमानस्तवोतिभिः पालनैः प्रकर्षेण तरति संसारक्लेशमतिवर्तते । कीदृशीभिरूतिभिः, सुवीराभिः शोभनपुत्राद्यपत्यहेतुभिः । वाजकर्मभिः, अन्ननिमित्तानि कर्माण्युद्योगा यासामूतीनां ता वाजकर्माणस्ताभिः ॥

द्वितीयां धाय्यामाह—

प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् ।
विपां ज्योतीꣳषि बिभ्रते न वेधसे ।, इति ।

हे ऋत्विजो यूयमग्नये वचः स्तुतिरूपं वाक्यं प्रकर्षेण भरत पोषयत । कीदृशं वचः, पूर्व्यं पूर्वैर्ऋषिभिः पठितं बृहत्प्रौढं विपां विशेषेणास्माकं पालकम् । कीदृशायाग्नये, होत्रे होमनिष्पादकाय । वेधसेऽस्मद्धितस्य विधात्रे । अग्नेर्दृष्टान्तः—ज्योतीꣳषि बिभ्रते नेति । यथा रश्मिरूपाणि ज्योतींषि धारयित्रे सूर्याय स्तुतिं कुर्वन्ति तद्वदित्यर्थः ॥

अथ परिधानीयामाह—

अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते
जिह्वा ऋतजात पूर्वीः । तिस्र उ ते तनुवो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ।, इति ।

हेऽग्ने ते तव त्री वाजिना त्रयः पुरोडाशा भवन्तीति तस्यामिष्टौ विहितत्वात्त्रीण्यन्नानि । यद्वा सोमौषधिसांनाय्यरूपाणि त्रीणि । तथा त्री षधस्था सहस्थानानि त्रीणि परस्परयुक्तानि लोकत्रयरूपाण्याहवनीयगार्हपत्यदक्षिणाग्नि-

रूपाणि वा । हे ऋतजात *ऋताज्ज्ञानात्मनः समुत्पन्न ते तव पूर्वीः पूर्वसिद्धा जिह्वास्तिस्रः सात्त्विकराजसतामसरूपा इष्टप्राप्त्यनिष्टपरिहाराभिचारहेतव उ अपि च देववाता देवैर्वाताः प्राप्तास्ते तव तनुवास्तिस्रस्ताभिस्तनूभिरग्निविद्युदादित्यरूपाभिर्नोऽस्मान्पाहि । किं कुर्वन् । गिरो अप्रयुच्छन्नस्मदीयाः स्तुतीरप्रमादयन्नस्माभिः कृतं प्रमादं परिहरन्नित्यर्थः ॥

अथ पुरोनुवाक्या—

सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य । जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ।, इति ।

हे इन्द्राविष्णू वां युवामनेन कर्मणा संहिनोमि सम्यक्प्रीणयामि । इषा हविर्लक्षणेनान्नेन च संहिनोमि । किंनिमित्तमिति तदुच्यते—अस्यापसः पारेऽनुष्ठीयमानस्य कर्मणः पारनिमित्तमविघ्नेन परिसमाप्त्यर्थम् । किंच, अस्मदीयमिमं यज्ञं जुषेथामस्मभ्यं च द्रविणं संपादयतः । किं कुर्वन्तौ । अरिष्टैर्नः पथिभिः पारयन्ता विनाशरहितैरनुष्ठानमार्गैरस्मान्कर्मणः पारं प्रापयन्तौ ॥

अथ याज्यामाह—

उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ।, इति ।

हे विष्णो, इन्द्रश्च त्वं चोभौ जिग्यथुर्जयं प्राप्तवन्तौ न पराजयेथे कदाऽपि पराजयं न प्राप्नुथः । एनोरनयोरुभयोर्मध्ये कतरश्चनान्यतरोऽपि न पराजिग्ये पराजयं न प्राप्तवान् । यद्यदा युवामुभावपस्पृधेथां स्पर्धां कुर्यातां त्वं तत्तदा सहस्रं दक्षिणारूपेण दातव्यं गोसहस्रं त्रिधा विभज्यैरयेथां नीतवन्तौ । अयं च विभागः सप्तमकाण्डे स्पष्टमाम्नातः ॥

अथ स्विष्टकृतः पुरोनुवाक्यारूपां संयाज्यामाह—

त्रीण्यायूꣳषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने । ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ।, इति ।

---

* ऋतात्सत्यात्परमात्मन इति ख. पुस्तकस्थपाठान्तरम् ।

हे जातवेदस्तवाऽऽयूंषि आयुर्वृद्धिकारणानि हवींषि सोमसांनाय्यपुरोडाशरूपेण त्रीणि । हेऽग्ने ते तवोषस उषःकालसदृश्य आजानीराविर्भावरूपा ज्वालास्तिस्र आहवनीयादिषु त्रिषु स्थानेषु त्रिविधास्ताभिर्ज्वालाभिर्देवानामवो रक्षकं हविर्विद्वान्यक्षि यज । अथानन्तरं यजमानाय शं भव सुखप्रदो भव । योर्भव दुःखवियोजको भव ॥

अथ स्विष्टकृतो याज्यारूपां संयाज्यामाह—

अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा
कविः । स त्रीꣳरेकादशाꣳ इह ।, इति ।

कविर्विद्वानयमग्निर्विदथेषु यज्ञेषु त्रीणि हवींष्याक्षेति सर्वतः प्राप्नोति । "त्रयः पुरोडाशा भवन्ति" इत्युक्तत्वाद्धविषां त्रित्वम् । कीदृशानि त्रीणि हवींषि, त्रिधातूनि "उत्तरउत्तरो ज्यायान्भवति" इत्युक्तत्वात्त्रिप्रकाराणि । सोऽग्निरिहास्मिन्कर्मण्येकादशभिर्देवैरुपेतांस्त्रीन्गणांस्तर्पयत्विति शेषः । "ये देवा दिव्येकादश स्थ" इत्यनुवाके गणत्रयं विस्पष्टमाम्नातम् ॥

अथ तत्रैव विकल्पितरूपां संयाज्यामाह—

यक्षच्च पिप्रयच्च नो विप्रो दूतः परि-
ष्कृतः । नभन्तामन्यके समे ।, इति ।

अग्निर्देवानां दूत आसीदित्युक्तत्वाद्दूतरूपोऽयमग्निर्यक्षच्च देवान्यक्षतु च । ब्राह्मणजात्यभिमानित्वाद्विप्ररूपोऽयमग्निर्नोऽस्मान्पिप्रयच्च प्रीणयतु च । कीदृशोऽग्निः, परिष्कृतो दूतत्वचिह्नैरलंकृतः । अन्यशब्दः शत्रुवाची । कप्रत्ययः कुत्सितार्थे । समशब्दः सर्वशब्दपर्यायः । अन्यके समेऽस्मत्तोऽन्ये कुत्सिताः शत्रवः सर्वेऽपि नभन्तां नश्यन्तु ॥

अथ प्रधानहविषो विकल्पितां पुरोनुवाक्यामाह—

इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो
नवतिं च श्नथिष्टम् । शतं वर्चिनः सहस्रं
च साकꣳ हथो अप्रत्यसुरस्य वीरान् ।, इति ।

हे इन्द्राविष्णू शम्बरनामकस्यासुरस्य संबन्धिन्यः पुरो नगरीः श्नथिष्टं युवां नाशितवन्तौ । कियतीर्नगरीः, नव नवतिं च, एकोनशतसंख्याका इत्यर्थः । कीदृशीः, दृꣳहिता दृढाः । किंच, असुरस्य संबन्धिनो वर्चिनो दीप्तिमतः शतं सहस्रं च वीरान्प्रधानभूतानमात्यादीनप्रति पक्षराहित्यं यथा भवति तथा साकं हथः ॥

(त्रैधातवीयेष्टिविषयमन्त्राभिधानम्)

अथ तत्रैव विकल्पितां याज्यामाह—

उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः। अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥, इति ॥

उत मातेन्द्रस्य देवस्य माता महिषं महान्तमिन्द्रमन्ववेनदनुक्रमेण ज्ञापितवतीत्यर्थः। कथं ज्ञापितवतीति तदुच्यते—हे पुत्रेन्द्र त्वयि शत्रून्हत्वा तूष्णीं स्थिते सति सर्वेऽप्यमी देवास्त्वां जहति परित्यजन्तीति। अथ मातृबोधनादूर्ध्वमिन्द्रो वृत्रं हनिष्यन्वधोद्युक्तो विष्णुं प्रत्येतदब्रवीत्—हे सखे विष्णो वितरं विक्रमस्व विशिष्टतरं पराक्रमं कुरु शीघ्रं वृत्रं जहीति। तथाविधौ हे इन्द्राविष्णू अस्मदभीष्टं संपादयतमिति तात्पर्यार्थः ॥

अत्र विनियोगसंग्रहः—

प्र सो त्रैधातवीयेष्टौ द्वे धाय्ये अग्न इत्यसौ।
तत्रैव परिधानीया ह्यनुवाक्या समित्यसौ ॥ १ ॥
उभेति याज्या त्रीणीति संयाज्यास्तिस्र ईरिताः।
इन्द्रानुवाक्योत याज्या दश मन्त्रा इहोदिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

---

(अथ तृतीयाष्टके तृतीयः प्रपाठकः।)

---

(तत्र प्रथमोऽनुवाकः।)

---

हरिः ॐ।

अग्ने तेजस्विन्तेजस्वी त्वं देवेषु भूयास्ते-

जंस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि तेजोविदसि तेजो मा मा हासीन्माऽहं तेजो हासिषं मा मां तेजो हासीदिन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य च (१) ओजसे जुहोम्योजोविदस्योजो मा मा हासीन्माऽहमोजो हासिषं मा मामोजो हासीत्सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपां च भ्राजसे जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माऽहꣳ सुवर्हासिषं मा माꣳ सुवर्हासीन्मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु (२) ॥

( क्षत्रस्य च मयि त्रयोविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अतिग्राह्यगतमन्त्राभिधानम् )

अथ तृतीयाष्टके तृतीयः प्रपाठकः ।

( तत्र प्रथमोऽनुवाकः । )

अग्ने । तेजस्विन् । तेजस्वी । त्वम् । देवेषु । भूयाः । तेजस्वन्तम् । माम् । आयुष्मन्तम् । वर्च-स्वन्तम् । मनुष्येषु । कुरु । दीक्षायै । च । त्वा । तपसः । च । तेजसे । जुहोमि । तेजोविदिति तेजः—वित् । असि । तेजः । मा । मा । हासीत् । मा । अहम् । तेजः । हासिषम् । मा । माम् । तेजः । हासीत् । इन्द्र । ओजस्विन् । ओजस्वी । त्वम् । देवेषु । भूयाः । ओजस्वन्तम् । माम् । आयुष्मन्तम् । वर्च-स्वन्तम् । मनुष्येषु । कुरु । ब्रह्मणः । च । त्वा । क्षत्रस्य । च (१) । ओजसे । जुहोमि । ओजोवि-दित्योजः—वित् । असि । ओजः । मा । मा । हासीत् । मा । अहम् । ओजः । हासिषम् । मा । माम् । ओजः । हासीत् । सूर्य । भ्राजस्विन् । भ्राज-स्वी । त्वम् । देवेषु । भूयाः । भ्राजस्वन्तम् । माम् । आयुष्मन्तम् । वर्चस्वन्तम् । मनुष्येषु । कुरु । वायोः । च । त्वा । अपाम् । च । भ्राजसे । जुहो-मि । सुवर्विदिति सुवः—वित् । असि । सुवः ।

मा । मा । हासीत् । मा । अहम् । सुवः । हासिषम् । मा । माम् । सुवः । हासीत् । मयि । मेधाम् । मयि । प्रजामिति प्र—जाम् । मयि । अग्निः । तेजः । दधातु । मयि । मेधाम् । मयि । प्रजामिति प्र—जाम् । मयि । इन्द्रः । इन्द्रियम् । दधातु । मयि । मेधाम् । मयि । प्रजामिति प्र—जाम् । मयि । सूर्यः । भ्राजः । दधातु ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

( अथ तृतीयकाण्डे तृतीयः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रतिनिग्राह्यपर्यन्ताः पवमानग्रहादयः ।
प्रपाठके द्वितीये तु मन्त्रयुक्ताः प्रपञ्चिताः ॥ २ ॥
अथावशिष्टा मन्त्राद्यास्तृतीयेऽस्मिन्प्रपाठके ।
उच्यन्ते वैकृताश्चान्ये समन्त्रा विधयः क्रमात् ॥ ३ ॥

कल्पः—" सहैवाध्वर्युणाऽऽग्नेयं प्रतिप्रस्थाताऽऽदत्त ऐन्द्रं नेष्टा सौर्यमुन्नेताऽग्ने तेजस्विन्नित्याग्नेयं प्रतिप्रस्थाता हुत्वा तेजोविदसीत्यनुमन्त्रयते " इति ।

तत्र होममन्त्रपाठस्तु—

अग्ने तेजस्विन्तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं

( अतिप्राह्यगतमन्त्राभिधानम् )

मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु दी-
क्षायै च त्वा तपसश्च तेजसे जुहोमि, इति।

तेजः कान्तिर्वर्चो बलम्। दीक्षायास्तपसश्च संबन्धि यत्तेजस्तल्लाभार्थं हे आग्नेयातिग्राह्य त्वां जुहोमि। अनेन होमेन दीक्षानियमास्तपश्च निर्विघ्नेन सिध्यन्त्वित्ययमभिप्रायः॥

अनुमन्त्रणमन्त्रपाठस्तु—

तेजोविदसि तेजो मा मा हासीन्माऽहं
तेजो हासिषं मा मां तेजो हासीत्, इति।

हेऽग्ने त्वं तेजोभिज्ञोऽस्यतस्त्वत्प्रसादात्तेजो मां मा परित्यजतु। अहमपि तेजो न परित्यक्तवानस्मि। तस्मात्सर्वथा तेजो मां मा परित्यजतु॥

कल्पः—"इन्द्रौजस्विन्नित्यैन्द्रं नेष्टा हुत्वौजोविदसीत्यनुमन्त्रयते" इति।

पाठस्तु—

इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओज-
स्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु
कुरु ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहो-
म्योजोविदस्योजो मा मा हासीन्माऽ-
हमोजो हासिषं मा मामोजो हासीत्, इति।

बलहेतुरष्टमो धातुरोजः। हे ऐन्द्रातिग्राह्य ब्राह्मणजातेः क्षत्रियजातेश्च संबन्धि यदोजो बलकारणं तदर्थं त्वां जुहोमि॥

कल्पः—"सूर्य भ्राजस्विन्निति सौर्यमुन्नेता हुत्वा सुवर्विदसीत्यनुमन्त्रयते" इति।

पाठस्तु—

सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेषु भूया
भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनु-
ष्येषु कुरु वायोश्च त्वाऽपां च भ्राजसे-

जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माऽ-
हꣳ सुवर्हासिषं मा माꣳ सुवर्हासीत्, इति ।

शरीरकान्तेर्बहिर्भूता रश्मिरूपा दीप्तिर्भ्राजः । हे सौर्यातिग्राह्य वायोरपां च संबन्धि यद्भ्राजस्तदर्थं त्वां जुहोमि । हे सूर्य त्वं सुवर्विदसि स्वर्गमार्गाभिज्ञोऽसि ॥

कल्पः—"तान्हुत्वा सदसि प्रत्यङ्मुखा भक्षयन्ति मयि मेधामित्येतैः स्वं स्वं यथालिङ्गम्" इति ।

पाठस्तु—

मयि मेधां मयि प्रजां मय्यग्निस्तेजो
दधातु मयि मेधां मयि प्रजां मयीन्द्र
इन्द्रियं दधातु मयि मेधां मयि प्रजां
मयि सूर्यो भ्राजो दधातु ॥, इति ॥

मन्त्रतदर्थयोर्धारणसामर्थ्यं मेधा ॥

अत्र विनियोगसंग्रहः—

अग्नेऽतिग्राह्यमाग्नेयं हुत्वा तेज उपस्थितिः ।
तथैन्द्रसौर्ययोर्भक्षेन्मयीति त्रीन्नवोदिताः ॥ १ ॥

अत्र मीमांसा ।

दशमाध्यायस्याष्टमपादे चिन्तितम्—

"नातिदेशोऽतिदेशो वा वह्न्यतिग्राह्ययोर्न सः ।
विकृतौ पुनरुक्तत्वादेषोऽङ्गान्तरवद्भवेत् ॥
प्रकृतेर्विकृतीनां च साम्याय स्यात्पुनर्वचः ।
साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव ॥" इति ॥

अनारभ्य श्रूयते—"य एवं विद्वानग्निं चिनुते" इति । "उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः" इति । अतिग्राह्यसंज्ञका ग्रहा यज्ञस्योपष्टम्भकत्वादनुष्ठेया इत्यर्थः । अत्र चीयमानस्याग्नेरतिग्राह्याणां च विकृतिष्वतिदेशो नास्ति । कुतः, पुनरुक्तिवैयर्थ्यप्रसङ्गात् । विकृतौ ह्येवं पुनरुच्यते—"अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण" इत्यादि । अयमर्थः—इष्टकचितमग्निमनु तस्मिंश्चितेऽग्नावग्निष्टोमाद्यनुष्ठानमिति । तथाऽग्निष्टोमः प्रकृतिः । उक्थ्यादयो विकृतयः । यदि विकृतिषु चोदकश्चित-

मग्निमतिदिशेत्तदानीमुक्थ्यादिषु चोदकादेव तत्प्राप्तेः पुनर्विधानमनर्थकं स्यात्। अतिग्राह्याश्च विकृतिषु पुनर्विधीयन्ते–"पृष्ठ्ये गृह्णीयात्" इति। तस्मात्पुनर्विधानार्थवत्त्वाय विकृतावग्न्यतिग्राह्यातिदेशो नास्तीति प्राप्ते ब्रूमः—ऐन्द्रवायवादिग्रहादीनामङ्गान्तराणामुक्थ्यादिविकृतिषु यथाऽतिदेशोऽभ्युपगतस्तथाऽग्निचयनस्यातिग्राह्याणां चातिदेशः स्यात्। नह्यखण्डः सकृत्प्रवृत्तश्चोदकः कानिचिदङ्गान्यतिदिश्येतराण्युपेक्षत इति युक्तम्। अतिदेशप्राप्तानामपि पुनर्विधानं प्रकृतिविकृतिसाम्यार्थम्। यथा प्रकृतावतिग्राह्याणां प्रत्यक्षविधिस्तथा विकृतिष्वपीति तत्साम्यम्। न च साम्ये प्रयोजनाभावः। गुणकामप्रवृत्तेस्तत्प्रयोजनत्वात्। "श्येनाचितं चिन्वीत स्वर्गकामः" इत्यादिना श्येनाकारादिगुणफलभूतस्वर्गादिकामाः श्रुताः। ते चोपदिष्टमाश्रयमपेक्षन्ते। तस्मादथातोऽग्निमिति वाक्येन प्रकृतावग्निष्टोमे कासुचिदुक्थ्यादिविकृतिषु चाग्निचयनलक्षण आश्रय उपदिश्यते। अन्यासु तु वाजपेयादिविकृतिषूपदिष्टस्याऽऽश्रयस्याभावादतिदिष्टस्य चानाश्रयत्वाद्गुणकामानां नास्ति प्रवृत्तिः। तस्मात्पुनर्विधानवैयर्थ्याभावादस्त्यतिदेशः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥ १॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः। )

---

वायुर्हिंकर्ताऽग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधत्वेतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्वमात्मन्धत्त इडा

---

१ ख. घ. 'वग्न्यतिग्राह्ययोः प्र°'। २ ख. घ. ङ. च. 'श्येन प्र°'।

देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसि-
षद्विश्वे देवाः ( १ ) सूक्तवाचः पृथिवि मातर्मा
मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु
वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो
वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा
देवा अवन्तु शोभायै पितरोऽनु मदन्तु (२)॥

( शꣳसिषद्विश्वे देवा अष्टाविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके द्वितीयोऽनुवाकः । )

---

वायुः । हिंकर्तेति हिं—कर्ता । अग्निः ।
प्रस्तोतेति प्र—स्तोता । प्रजापतिरिति प्रजा—पतिः ।
साम । बृहस्पतिः । उद्गातेत्युत्—गाता । विश्वे ।
देवाः । उपगातार इत्युप—गातारः । मरुतः । प्रति-
हर्तार इति प्रति—हर्तारः । इन्द्रः । निधनमिति नि—
धनम् । ते । देवाः । प्राणभृत इति प्राण—भृतः ।
प्राणमिति प्र—अनम् । मयि । दधतु । एतत् । वै ।
सर्वम् । अध्वर्युः । उपाकुर्वन्नित्युप—आकुर्वन् ।
उद्गातृभ्य इत्युद्गातृ—भ्यः । उपाकरोतीत्युप—आक-
रोति । ते । देवाः । प्राणभृत इति प्राण—भृतः । प्राण-

मितिं प्र—अनम् । मयिं । दधतु । इतिं । आह ।
एतत् । एव । सर्वम् । आत्मन् । धत्ते । इडां ।
देवहूरितिं देव—हूः । मनुः । यज्ञनीरितिं यज्ञ—नीः ।
बृहस्पतिः । उक्थामदानीत्युंक्थ—मदानिं । शंसि-
षत् । विश्वे । देवाः ( १ ) । सूक्तवाच इतिं सूक्त—
वाचः । पृथिवि । मातः । मा । मा । हिंसीः । मधु ।
मनिष्ये । मधु । जनिष्ये । मधु । वक्ष्यामि । मधु ।
वदिष्यामि । मधुमतीमिति मधु—मतीम् । देवेभ्यः ।
वाचम् । उद्यासम् । शुश्रूषेण्याम् । मनुष्येभ्यः ।
तम् । मा । देवाः । अवन्तु । शोभायै । पितरः ।
अन्विति । मदन्तु ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ तृतीयकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः)

---

अतिग्राह्यगता मन्त्राः प्रथमे समुदीरिताः ।
अथ द्वितीये स्तोत्रोपाकरणप्रतिगराङ्गमन्त्रा उच्यन्ते ।

कल्पः—" अथाध्वर्युः स्तोत्रमुपाकरोति वायुर्हिं कर्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छति सर्वेषु पवमानेष्वेवमुपाकरणे " इति ।

पाठस्तु—

वायुर्हिंकर्ताऽग्निः प्रस्तोता प्रजापतिः साम
बृहस्पतिरुद्गाता विश्वे देवा उपगातारो

मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः
प्राणभृतः प्राणं मयि दधतु , इति।

गातव्यस्य साम्नः पञ्च भागा हिंकारः प्रस्ताव उद्गीथः प्रतिहारो निधनं चेति। तत्र हिंकारनिधनरूपावाद्यन्तौ भागौ सर्वैः पठनीयौ। द्वितीयं प्रस्तावभागं प्रस्तोता गायति। तृतीयमुद्गीथभागमुद्गाता गायति। चतुर्थं प्रतिहारभागं प्रतिहर्ता गायति। एतेषु गायत्सु सर्वेऽप्यृत्विजोऽध्वर्युव्यतिरिक्ता ओमित्युपगायन्ति। यजमानस्तु हो, इत्युपगायति। त एते सर्वे वाय्वादिदेवतारूपेण मन्त्रेण प्रतिपाद्यन्ते। सर्वदेवताजनकस्य प्रजापतेः समष्टिरूपत्वेन कृत्स्नसामरूपत्वं, वाय्वादीनां प्रजापत्येकदेशत्वेन सामैकदेशहिंकारादिकर्तृत्वम्। त एते वाय्वादय इन्द्रान्ता देवाः प्राणपोषकास्तस्मात्प्राणं मयि स्थापयन्तु॥

तमेतं मन्त्रं विनियुङ्क्ते—

एतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्वमात्मन्धत्ते, इति।

यदाऽध्वर्युरुद्गातृभ्य उपाकरोति स्तोत्रपाठानुज्ञां प्रयच्छति तदानीमेतदेव वाय्वादिरूपहिंकर्तृत्वादिकं सर्वमुपाकरोत्यभ्यनुजानाति। तस्माद्वायुरित्यादिमन्त्रेण बर्हिर्मुष्टिप्रदानरूपमुपाकरणं कुर्यादिति तात्पर्यार्थः। तस्मिन्मन्त्रे ते देवा इति भागमध्वर्युर्ब्रूयात्। तेनैतदेव वाय्वादिरूपं हिंकर्तृत्वादिकं सर्वमात्मनि स्थापितवान्भवति॥

कल्पः—“ अध्वर्युः सदोबिले प्राङ्मुख उपविश्येडा देवहूरिति शस्त्रं प्रतिगरिष्यञ्जपति ” इति।

पाठस्तु—

इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्ये-

(अदाभ्यांशुग्रहापेक्षितमन्त्राभिधानम्)

भ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु ॥ , इति ॥

येयमिडा देवगोरूपा सेयमत्र देवहूर्देवानामाह्वयित्री । यस्तु मनुः सोऽत्र यज्ञनीर्यज्ञप्रवर्तकः । यश्च बृहस्पतिः सोऽयमुक्थामदानि शंसिषच्छंसति । उक्थैः शस्त्रैर्जायमानो मदो हर्षो येषु मन्त्रवाक्येषु तानि वाक्यान्युक्थामदानि । ये विश्वे देवास्तेऽत्र सूक्तवाचः सूक्तानां वक्तारः । हे मातृरूपे पृथिवि यथोक्तानामिडादिदेवानामनुग्रहादपराधरहितं मां त्वं मा हिंसीः । त्वदनुग्रहादहं मधु मनिष्ये मधुवत्प्रियमेव कार्यं मनसा चिन्तयिष्यामि । तथा मधु जनिष्ये मधुवत्प्रियं कर्मफलमुत्पादयिष्यामि । तथा मधु वक्ष्यामि मधुवत्प्रियस्य हविषो देवान्प्रति वहनं करिष्यामि । तथा मधु वदिष्यामि मधुवत्प्रियं प्रतिगररूपं वाक्यमुच्चारयिष्यामि । तथा प्रतिगर ओथामोद इवेति, एतादृशादूर्ध्वं शस्त्रान्ते वाचमुक्थशा इत्यादिरूपामुच्चासं सवनत्रये कथयामि । कीदृशीं वाचम् । देवेभ्यो मधुमतीं देवानां मधुवत्प्रियां मनुष्येभ्यः शुश्रूषेण्यां मनुष्यैर्होत्रादिभिः श्रोतुमिष्यमाणाम् । तं तादृशीं वाचं ब्रुवाणं मां शोभायै वाचिकप्रमादाभावरूपशोभार्थं देवा अवन्तु पूर्वोक्ता इडादयः सर्वेऽपि पालयन्तु । पितरश्चानुमदन्तु समीचीनेयं वागित्युपलालयन्तु ॥

अत्र विनियोगसंग्रहः—

वायुः स्तोत्रमुपाकुर्याच्छस्त्रं प्रतिगरिष्यता ।
जपितव्य इडामन्त्रो द्वौ मन्त्राविह कीर्तितौ ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(अथ तृतीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः ।)

---

वसवस्त्वा प्र वृंहन्तु गायत्रेण छन्दसाऽग्नेः प्रियं पाथ उपेहि रुद्रास्त्वा प्र वृंहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्यादित्यास्त्वा

---

१ ख. 'मराच्छोंसा मो' । २ ख. च. 'चि प्र' ।

प्र वृंहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि मान्दासु ते शुक्र शुक्रमा धूनोमि भन्दनासु कोतनासु नूतनासु रेशीषु मेषीषु वाशीषु विश्वभृत्सु माध्वीषु ककुहासु शक्करीषु (१) शुक्रासु ते शुक्र शुक्रमा धूनोमि शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः। आऽस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत। ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः। यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहोशिक्त्वं देव सोम गायत्रेण छन्दसाऽग्नेः (२) प्रियं पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीह्या नः प्राण एतु परावत आऽन्तरिक्षाद्दिवस्परि। आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा। इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः। वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना। दधन्वे वा यदीमनु वोचद्ब-

ह्माणि वेरु तत्र । परि विश्वानि काव्यां नेमि-
श्चक्रमिवाभवत् ( ३ ) ॥

( शक्करीष्वग्नेर्बृहस्पतिः पञ्चविंशतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके तृतीयोऽनुवाकः । )

---

वसवः । त्वा । प्रेति । वृहन्तु । गायत्रेण । छन्दसा । अग्नेः । प्रियम् । पाथः । उपेति । इहि । रुद्राः । त्वा । प्रेति । वृहन्तु । त्रैष्टुभेन । छन्दसा । इन्द्रस्य । प्रियम् । पाथः । उपेति । इहि । आदित्याः । त्वा । प्रेति । वृहन्तु । जागतेन । छन्दसा । विश्वेषाम् । देवानाम् । प्रियम् । पाथः । उपेति । इहि । मान्दासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । भन्दनासु । कोतनासु । नूतनासु । रेशीषु । मेषीषु । वाशीषु । विश्वभृत्स्विति विश्व-भृत्—सु । माध्वीषु । ककुहासु । शक्करीषु ( १ ) । शुक्रासु । ते । शुक्र । शुक्रम् । एति । धूनोमि । शुक्रम् । ते । शुक्रेण । गृह्णामि । अह्नः । रूपेण । सूर्यस्य । रश्मिभिरिति रश्मि—भिः । एति । अस्मिन् । उग्राः । अचुच्यवुः । दिवः । धाराः । असश्चत ।

ककुहम् । रूपम् । वृषभस्य । रोचते । बृहत् । सोमः ।
सोमस्य । पुरोगा इति पुरः—गाः । शुक्रः । शुक्रस्य ।
पुरोगा इति पुरः—गाः । यत् । ते । सोम । अदा-
भ्यम् । नाम । जागृवि । तस्मै । ते । सोम ।
सोमाय । स्वाहा । उशिक् । त्वम् । देव । सोम ।
गायत्रेण । छन्दसा । अग्नेः ( २ ) । प्रियम् । पाथः ।
अपीति । इहि । वशी । त्वम् । देव । सोम । त्रैष्टु-
भेन । छन्दसा । इन्द्रस्य । प्रियम् । पाथः । अपीति ।
इहि । अस्मत्सखेत्यस्मत्—सखा । त्वम् । देव ।
सोम । जागतेन । छन्दसा । विश्वेषाम् । देवानाम् ।
प्रियम् । पाथः । अपीति । इहि । एति । नः ।
प्राण इति प्र—अनः । एतु । परावत इति परा—
वतः । एति । अन्तरिक्षात् । दिवः । परि । आयुः ।
पृथिव्याः । अधीति । अमृतम् । असि । प्राणायेति
प्र—अनाय । त्वा । इन्द्राग्नी इतीन्द्र—अग्नी । मे ।
वर्चः । कृणुताम् । वर्चः । सोमः । बृहस्पतिः । वर्चः ।
मे । विश्वे । देवाः । वर्चः । मे । धत्तम् । अश्विना ।
दधन्वे । वा । यत् । ईम् । अन्विति । वोचत् ।
ब्रह्माणि । वेः । उ । तत् । परीति । विश्वानि ।
काव्या । नेमिः । चक्रम् । इव । अभवत् ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

(अदाभ्यांशुग्रहापेक्षितमन्त्राभिधानम्)

(अथ तृतीयकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः)

---

उपाकृतिः प्रतिगरजपश्चोक्तौ द्वितीयके।

अथ तृतीयानुवाके द्वावदाभ्यांशुग्रहौ प्रत्यपेक्षिता मन्त्रा उच्यन्ते।

कल्पः—"उपनद्धस्य राज्ञस्त्रीन्ꣳशून्प्रवृहति वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रम्" इति।

पाठस्तु—

वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसाऽग्नेः
प्रियं पाथ उपेहि रुद्रास्त्वा प्र वृहन्तु त्रैष्टु-
भेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्या-
दित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा
विश्वेषां देवानां प्रियं पाथ उपेहि, इति।

हे सोमांशो वसुनामका देवास्त्वां प्रवृहन्तु वाससा बद्धात्सोमलतासमूहात्प्रकर्षेण पृथक्कुर्वन्तु। केन साधनेन। गायत्रेण छन्दसा। तवाऽऽकर्षणे छन्दः साधनम्। तथाविधस्त्वमग्नेः प्रियं पाथोऽन्नभावमुपेहि। एवं द्वितीयतृतीयमन्त्रौ योज्यौ॥

कल्पः—"तैरेनं चतुराधूनोति पञ्चकृत्वः सप्तकृत्वो वा मान्दासु त इत्येतान्प्रति विभज्य" इति।

पाठस्तु—

मान्दासु ते शुक्र शुक्रमा धूनोमि भन्दनासु
कोतनासु नूतनासु रेशीषु मेषीषु वाशीषु
विश्वभृत्सु माध्वीषु ककुहासु शक्वरीषु
शुक्रासु ते शुक्र शुक्रमा धूनोमि, इति।

अत्र होतृचमसे वसतीवरीनामिकाभ्योऽद्भ्यः सकाशात्कियदप्युदकं निषिच्य तैः पूर्वोक्तैस्त्रिभिः सोमांशुभिरेनं होतृचमसं मान्दास्वित्यादिमन्त्रैराधूनोति चमसस्थमुदकं प्रकम्पयेदित्यर्थः। मान्दास्वित्यादीनि सप्तम्यन्तानि द्वादश पदान्यपां गोप्यानि नामानि। ते शुक्र शुक्रमा धूनोमीत्येतावान्द्वादशस्वपि पदेष्वनुषज्यते। अनुषङ्गद्योतनायैवाऽऽदावन्ते च द्विः पाठः। मन्दगतय आपो मान्दाः। हे शुक्र दीप्यमान सोम ते तव संबन्धि शुक्रं दीप्यमानं सारं

मान्दास्वप्स्वाधूनोमि सर्वतः कम्पयामि। एवमुत्तरत्रापि योज्यम् । भन्दनासु भद्रासु कल्याणकारिणीषु, कोतनासु ज्ञानकारिणीषु, नूतनास्वभिनवासु, रेशीषु शीघ्रगमनेन भुवो हिंसिकासु, मेषीषु स्पर्धमानासु, वाशीषु शब्दवतीषु, विश्वभृत्सु विश्वस्य धारिकासु, माध्वीषु मधुररसवतीषु, ककुहासु ककुत्सदृशीषु प्रधानभूतासु, शक्करीषु शक्तिमतीषु, शुक्रासु दीप्यमानासु। तानेतान्द्वादश मन्त्रानतुषङ्गेण सह प्रतिविभज्य चतुष्पञ्चकृत्वः सप्तकृत्वो वा द्वादशमन्त्रैराधावनं कुर्यात् ॥

कल्पः—"अंशुमदाभ्यं वा प्रथमं गृह्णाति शुक्रं ते शुक्रेण गृह्णामीति दध्नः पयसो निग्राभ्याणां वा" इति।

पाठस्तु—

शुक्रं ते शुक्रेण गृह्णाम्यह्नो
रूपेण सूर्यस्य रश्मिभिः।, इति।

हे दधिद्रव्य ते शुक्रं तव सारं शुक्रेण सोमादिरूपेण सारेण सह गृह्णामि। केन साधनेनेति तदुच्यते—ये सूर्यस्य रश्मयोऽह्नो रूपं रसाख्येन तेन रूपेण॥

कल्पः—"आऽस्मिन्नुग्रा अचुच्यवुरित्यादाय" इति।

पाठस्तु—

आऽस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत।, इति।

अस्मिन्पात्र उग्रा धारास्तीव्राः सोमरसधारा आचुच्यवुरागत्य पतिताः। किं च। पतितास्ता धारा असश्चत पात्रे संगताः॥

कल्पः—"ककुहꣳ रूपमिति हरति" इति।

पाठस्तु—

ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः।, इति।

वृषभस्य वर्षयितुरिन्द्रस्य ककुहं ककुद्वत्प्रधानभूतं रूपं वृष्टिलक्षणं स्वरूपं रोचते शोभते। तत्र( च ) बृहत्प्रौढम् । अयं सोमो वल्लीरूपो राजरूपस्य सोमस्य देवस्य पुरोगाः प्रथमगामी शुक्रो दीप्यमानो रसः शुक्रस्य दीप्यमानस्येन्द्रस्य पुरोगाः॥

कल्पः—"यत्ते सोमादाभ्यं नाम जागृवीति जुहोति" इति।

पाठस्तु—

( अदाभ्यांशुग्रहापेक्षितमन्त्राभिधानम् )

यत्ते सोमादाभ्यं नाम जागृवि तस्मै
ते सोम सोमाय स्वाहा , इति।

हे सोम ते यन्नामादाभ्यं केनाप्यतिरस्करणीयं जागृवि सदा जागरणशीलं हे सोम तस्मै सोमाय सोमनाम्ने ते त्वदीयाय स्वाहा हुतमिदमस्तु ॥

कल्पः—" आधवनानंशून्प्रज्ञातान्निधायोशिक्त्वं देव सोम गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपि सृजाति " इति।

पाठस्तु—

उशिक्त्वं देव सोम गायत्रेण छन्दसाऽग्नेः
प्रियं पाथो अपीहि वशी त्वं देव सोम
त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्म-
त्सखा त्वं देव सोम जागतेन छन्दसा
विश्वेषां देवानां प्रियं पाथो अपीहि , इति।

हे सोम देव त्वमुशिक्कमनीयस्तथाविधप्रथमांशुरूपस्त्वमग्नेः प्रियं पाथोऽन्नभावं यथा प्रतिपद्यसे तथा गायत्रेण छन्दसा सोमसमूहात्पृथक्कृत इदानीमपीहि पुनरपि सोमसमूहं गच्छ। एवं द्वितीयतृतीयांशुविषययोरुत्तरमन्त्रयोर्योजनीयम्। सर्वेषां प्राणिनां वशोऽस्यास्तीति वशी द्वितीयोंऽशुरस्मासु सखिवत्प्रीतिमत्त्वादस्मत्सखा तृतीयोंऽशुः ॥

कल्पः—" अंशुं गृह्णन्नेकग्रहायाऽऽसं राजानमुपरे न्युप्य सकृदभिषुत्य वामदेव्यं मनसा गायमानोऽनवानं गृह्णाति यद्ि व्यवानेदा नः प्राण एतु परावत इति शतमानं हिरण्यमभिव्यनेयातामध्वर्युर्यजमानश्च " इति।

पाठस्तु—

आ नः प्राण एतु परावत आऽन्तरिक्षा-
द्दिवस्परि। आयुः पृथिव्या अध्य-
मृतमसि प्राणाय त्वा। , इति।

परावतो दूरदेशात्प्राणो नोऽस्मान्प्रत्येतु आगच्छतु अन्तरिक्षादप्यागच्छतु। दिवस्परि स्वर्गस्योपरि स्थितोऽप्यागच्छतु। हे हिरण्य पृथिव्या अध्युपरि

१ ख. घ. ङ. च. व्यने'।

त्वमायुरमृतमसि आयुर्हेतुरमृतत्वहेतुश्चासि । तादृशं त्वा प्राणाय प्राणस्थितय एवं क्षिपामीति शेषः ॥

कल्पः—"इन्द्राग्नी इत्युदकमुपस्पृश्य" इति ।

पाठस्तु—

इन्द्राग्नी मे वर्चः कृणुतां वर्चः
सोमो बृहस्पतिः । वर्चो मे विश्वे
देवा वर्चो मे धत्तमश्विना ।, इति ।

यावेताविन्द्राग्नी तौ मे वर्चः कृणुतां बलं कुरुताम् । तथा सोमो बृहस्पतिश्चोभौ वर्चः कृणुताम् । विश्वे देवाश्च मे वर्चः कुर्वन्तु । हेऽश्विनौ मे वर्चो धत्तं संपादयतम् ॥

कल्पः—"दधन्वे वा यदीमित्यानिरुक्तया प्राजापत्यया प्राण्यापान्यानवानं जुहोति" इति ।

पाठस्तु—

दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् । परि
विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥, इति ॥

वेरेर्वेतव्यस्य गन्तव्यस्य यज्ञस्य संबन्धीनि ब्रह्माणि परिवृढानि दीक्षादीन्यङ्गान्यनुवोचदनुक्रमेण वेदो वक्ति यदीमित्येतादृशं यदस्ति तदु दधन्वे तदप्यहं मनसि धारयामि वेदोक्तं किमपि न विस्मरामीत्यर्थः । काव्या काव्यसदृशानि विस्पष्टमनभिहितानि विश्वानि सर्वाण्यङ्गानि पर्यभवत् । अयं यज्ञः परितो व्याप्तवान् । व्याप्तौ दृष्टान्तः—नेमिश्चक्रमिवेति । यथा रथस्य चक्रं कृत्स्नं परितो नेमिर्व्याप्नोति तद्वत् । अत्र देवताविशेषस्य कस्यचिदपि विस्पष्टमप्रतीतत्वादियमनिरुक्ता प्राजापत्या । ततः प्रजापतये जुहोमीति तात्पर्यार्थः ॥

अत्र विनियोगसंग्रहः—

वसात्रिभिर्ग्रहीतव्या नद्ध सोमांशवस्त्रयः ।
मान्दा द्वादश मन्त्रास्तैश्चमसस्था अपोऽशुभिः ॥ १ ॥
आधूनोत्यथ शुक्रं तेऽदाभ्यपात्रे दधिग्रहः ।
आऽस्मिन्नदाभ्यमादत्ते ककुहं सोऽपनीयते ॥ २ ॥
यत्ते जुहोत्युशिक्प्रोक्तानंशूनभिषवत्रये ।

( अदाभ्यांशुग्रहार्थमन्त्रब्राह्मणाभिधानम् )

त्रिभिः संसृजते ह्या नः स्वर्णोपरि, समुच्छ्वसेत् ॥
इन्द्रा स्पृष्टोदकं होमो दधन्वे पञ्चविंशतिः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

एतद्वा अपां नामधेयं गुह्यं यदाधावा मान्दासु ते शुक्र शुक्रमा धूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमव रुन्धे शुक्रं ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रिः सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयत्याऽस्मिन्नुग्राः ( १ ) अचुच्यवुरित्याह यथायजुरेवैतत्ककुहꣳ रूपं वृषभस्य रोचते बृहदित्याहैतद्वा अस्य ककुहꣳ रूपं यद्वृष्टी रूपेणैव वृष्टिमव रुन्धे यत्ते सोमादाभ्यं नाम जागृवीत्याहैष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति परा वा एतस्याऽऽयुः प्राण एति ( २ ) योऽꣳशुं गृह्णात्या नः प्राण एतु परावत इत्याहाऽऽयुरेव प्राणमात्मन्धत्तेऽमृतमसि प्राणाय त्वेति हिरण्यमभि व्यनित्य-

मृतं वै हिरण्यमायुः प्राणोऽमृतेनैवाऽऽयुरात्म-
न्धत्ते शतमानं भवति शतायुः पुरुषः शते-
न्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यप उप
स्पृशति भेषजं वा आपो भेषजमेव कुरुते(३)॥

( उग्रा एत्यापस्त्रीणि च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

एतत् । वै । अपाम् । नामधेयमिति नाम—धेयम् ।
गुह्यम् । यत् । आधावा इत्या—धावाः । मान्दासु ।
ते । शुक्र । शुक्रम् । एति । धूनोमि । इति । आह ।
अपाम् । एव । नामधेयेनेति नाम—धेयेन । गुह्येन ।
दिवः । वृष्टिम् । अवेति । रुन्धे । शुक्रम् । ते ।
शुक्रेण । गृह्णामि । इति । आह । एतत् । वै ।
अह्नः । रूपम् । यत् । रात्रिः । सूर्यस्य । रश्मयः ।
वृष्ट्याः । ईशते । अह्नः । एव । रूपेण । सूर्यस्य ।
रश्मिभिरिति रश्मि—भिः । दिवः । वृष्टिम् । च्याव-
यति । एति । अस्मिन् । उग्राः ( १ )। अचुच्यवुः ।
इति । आह । यथायजुरिति यथा—यजुः । एव ।
एतत् । ककुहम् । रूपम् । वृषभस्य । रोचते ।

बृहत् । इति । आह । एतत् । वै । अस्य । ककुहम् । रूपम् । यत् । वृष्टिः । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे । यत् । ते । सोम । अदाभ्यम् । नाम । जागृवि । इति । आह । एषः । ह । वै । हविषा । हविः । यजति । यः । अदाभ्यम् । गृहीत्वा । सोमाय । जुहोति । परेति । वै । एतस्य । आयुः । प्राण इति प्र—अनः । एति ( २ ) । यः । अꣳशुम् । गृह्णाति । एति । नः । प्राण इति प्र—अनः । एतु । परावत इति परा—वतः । इति । आह । आयुः । एव । प्राणमिति प्र—अनम् । आत्मन् । धत्ते । अमृतम् । असि । प्राणायेति प्र—अनाय । त्वा । इति । हिरण्यम् । अभि । वीति । अनिति । अमृतम् । वै । हिरण्यम् । आयुः । प्राण इति प्र—अनः । अमृतेन । एव । आयुः । आत्मन् । धत्ते । शतमानमिति शत—मानम् । भवति । शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । अपः । उपेति । स्पृशति । भेषजम् । वै । आपः । भेषजम् । एव । कुरुते ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( अथ तृतीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः । )

---

अदाभ्यांशुग्रहार्थास्तु मन्त्राः प्रोक्तास्तृतीयके ।
अथ चतुर्थे तेषां ब्राह्मणमुच्यते ।

तत्र मान्दास्वित्यादिमन्त्राणां तात्पर्यं दर्शयति—

एतद्वा अपां नामधेयं गुह्यं यदाधावा मान्दासु ते शुक्र शुक्रमा धूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमव रुन्धे, इति।

एतदेव मान्दा इत्यादिपदजातमपां गोप्यं नामधेयं, लोके प्रसिद्ध्यभावाद्वैदिकमन्त्र एव प्रतीयमानतया गोप्यत्वम् । आधूयन्ते सर्वतः कम्प्यन्त आपो यैर्मान्दादिमन्त्रैस्ते मन्त्रा आधावाः। त एते आधावा इति यदेतदेव गुह्यं नामेति पूर्वत्रान्वयः । तस्मादबभिमानिदेवतानां प्रीत्यै मान्दादिमन्त्रान्पठेत् । ततो गुह्येन नामधेयेन देवताः परितोष्य दिवः सकाशाद्वृष्टिं संपादयति ॥

ग्रहणमन्त्रे त्वह्नो रूपेण सूर्यस्य रश्मिभिरित्यमुमंशं व्याचष्टे—

शुक्रं ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रिः सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयति, इति।

रात्रिरिति यदेतदेवाह्नो रूपमहर्निरूप्यते येन तदह्नो रूपं निरूपकमित्यर्थः। एतावदहर्नातोऽधिकमित्यह्न इयत्ता रात्र्या निरूप्यते । सेयं रात्रिः सूर्यस्य रश्मयश्च वृष्टिस्वामिभूताः । न खलु रात्रिरूपं सूर्यरश्मियुक्तं च कालं मुक्त्वा वृष्टेरन्यः कालोऽस्ति । तस्मादेतं मन्त्रभागं पठन्नह्नो निरूपकेण रात्रिलक्षणेन कालेन सूर्यस्य रश्मिभिर्युक्तेन च कालेन दिवः सकाशाद्वृष्टिं भूमौ पातयति ॥

पात्रादानमन्त्रस्य स्पष्टार्थतां दर्शयति—

आऽस्मिन्नुग्रा अचुच्यवुरित्याह यथायजुरेवैतद्, इति ॥

हरणमन्त्रे प्रधानरूपवाचिभ्यां ककुहं रूपमिति पदाभ्यां वृष्टिर्विवक्षितेति दर्शयति—

ककुहꣳ रूपं वृषभस्य रोचते बृह-

---

१ क. ङ. च. 'तदाधा'।

(अदाभ्यांशुग्रहार्थमन्त्रब्राह्मणाभिधानम्)

दिव्याहैतद्वा अस्य ककुहꣳ रूपं
यद्वृष्टी रूपेणैव वृष्टिमव रुन्धे, इति ॥

होममन्त्रे सोमायेति देवतामुद्दिश्य दधिद्रव्यहवने तात्पर्यं दर्शयति—

यत्ते सोमादाभ्यं नाम जागृवीत्या-
हैष ह वै हविषा हविर्यजति योऽ-
दाभ्यं गृहीत्वा सोमाय जुहोति, इति।

यो यजमानोऽदाभ्यनामकं दधिग्रहं गृहीत्वा सोमाय देवाय जुहोति एष एव यजमानो हविषा दध्ना हविःस्वरूपं देवमुद्दिश्य यजतीत्युक्तम् ॥

हिरण्यस्योपरि श्वासमन्त्रे प्राणशब्देनाऽऽयुर्विवक्षितमित्येवं दर्शयति—

परा वा एतस्याऽऽयुः प्राण एति योऽꣳ-
शुं गृह्णात्या नः प्राण एतु परावत
इत्याहाऽऽयुरेव प्राणमात्मन्धत्ते, इति।

यो यजमानोंऽशुनामकं सोमरसं पात्रे गृह्णात्येतस्याऽऽयुः प्राणः परैति गच्छत्यतो मन्त्रेणाऽऽयुष्प्रदं प्राणमात्मन्येव स्थापयति ॥

हिरण्यस्योपरि श्वासविशेषं विधत्ते—

अमृतमसि प्राणाय त्वेति हिरण्यमभि
व्यनित्यमृतं वै हिरण्यमायुः प्रा-
णोऽमृतेनैवाऽऽयुरात्मन्धत्ते, इति।

श्वासवायोर्बहिः परित्यागः प्राणनमन्तराकर्षणमपाननं माध्यस्थ्येन धारणं व्यानम्। "अथ यः प्राणापानयोः संधिः स व्यानः" इति श्रुत्यन्तरात्। हिरण्यस्योपरि व्यानेन स्वात्मन्यायुर्धारयति ॥

हिरण्यस्याऽऽयुष्परिमाणं विधत्ते—

शतमानं भवति शतायुः पुरुषः शतेन्द्रिय
आयुष्येवेन्द्रिये प्रति तिष्ठति, इति ॥

इन्द्राग्नी इति मन्त्रेण यदु(उ)दकस्पर्शस्तमिमं विधत्ते—

अप उप स्पृशति भेषजं वा
आपो भेषजमेव कुरुते॥, इति ॥

आपो वै शान्ता इत्यन्यत्र श्रुतत्वादपां भेषजत्वम् । एतेऽदाभ्यांशुग्रहमन्त्रा आददे ग्रावेत्यनुवाकात्पूर्वं द्रष्टव्याः ॥

अथ मीमांसा ।

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

यददाभ्यं गृहीत्वेति गृह्णात्यंशुमिति द्वयम् ।
तद्यागो वा गुणो यागः स्याददाभ्यांशुनामतः ॥
ग्रहयोरेव नाम स्यादानन्तर्याद्विधिस्तयोः ।
गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिता ॥

अनारभ्य श्रूयते—अदाभ्यं गृहीत्वा सोमाय यजतेऽंशुं गृह्णातीति च । तत्रादाभ्यशब्दस्य ज्योतिरादिवदपूर्वनामत्वात्तन्नामको यागो यजत इत्याख्यातेन विधीयते । अंशुमित्यत्र यजतेरश्रवणेऽपि नामविशेषबलादेवापूर्वयागविधिः । न चात्र द्रव्यदेवतयोरभावः, ग्रहणलिङ्गेन ज्योतिष्टोमविकृतित्वावगतौ तदीयविध्यन्तातिदेशेन तत्सिद्धेरिति प्राप्ते ब्रूमः—भवत्वदाभ्यांशुशब्दयोर्नामत्वम् । ते च नामनी ग्रहयोरेव स्यातां न तु यागयोर्गृहीत्वेति शब्दस्यानन्तरमेव पाठात् । यजतिस्तु व्यवहितस्तादृशोऽपि यजिरंशुवाक्ये नास्ति । तस्माद्ग्रहयोरत्र विधिः । ग्रहणं च ज्योतिष्टोमगतस्य सोमरसस्य संस्काररूपो गुण ऐन्द्रवायवादिग्रहणसमानरूपत्वात् । यद्यप्यप्रकृतो ज्योतिष्टोमस्तथाऽपि तत्संबन्धिग्रहणद्वारा वाक्याज्ज्योतिष्टोमगामित्वम् । अत एव सोमार्थमदाभ्यं गृहीत्वेति निर्दिश्यते । अथवा तैत्तिरीयाणां षष्ठकाण्डस्य षष्ठप्रपाठके प्राकरणिकं विनियोजकं वाक्यं द्रष्टव्यम् । तस्माज्ज्योतिष्टोमे गुणविधिः ॥

तृतीयाध्यायस्य षष्ठे पादे चिन्तितम्—

ग्रहधर्मा अनारभ्योक्तांश्वदाभ्यद्वये नहि ।
विद्यन्ते वा प्रकरणाद्वाद्यो वाक्यादिहान्तिमः ॥

अनारभ्य द्वौ ग्रहौ श्रुतावंशुं गृह्णातीति । अदाभ्यं गृहीत्वेति च । तयोः सादनसंमार्गादयो ग्रहधर्मा न विद्यन्तेऽननारभ्याधीतेष्वैन्द्रवायवादिष्वेव प्रकरणेन व्यवस्थापितत्वादिति चेन्मैवम् । ग्रहाः साद्यन्त इत्यादिवाक्येन ग्रहधर्मत्वावगमे तयोरपि ग्रहयोरनिवार्यत्वात् । न चैन्द्रवायवादयः प्रकरणिनो ज्योतिष्टोमो हि प्रकरणी । तस्मात्सन्ति तयोर्धर्माः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ क. घ. ङ. च. इत्यस्यान्तेन । २ ख. 'न्तेऽना' ।

( विकृतिरूपद्वादशाहशेषपृश्निग्रहाभिधानम् )

( अथ तृतीयाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

वायुर॑सि प्राणो नाम॑ सवितुराधि॑पत्येऽपानं मे दाश्चक्षु॑रसि श्रोत्रं नाम॑ धातुराधि॑पत्य आयु॑र्मे दा रूपम॑सि वर्णो नाम बृहस्पतेराधि॑पत्ये प्रजां मे॑ दा ऋतम॑सि सत्यं नामेन्द्रस्याऽऽधि॑पत्ये क्षत्रं मे॑ दा भूतम॑सि भव्यं नाम॑ पितृणामाधि॑पत्येऽपामोष॑धीनां गर्भं धा ऋतस्य॑ त्वा व्यो॑मन ऋतस्य॑ ( १ ) त्वा विभू॑मन ऋतस्य॑ त्वा विध॑र्मण ऋतस्य॑ त्वा सत्यायर्तस्य॑ त्वा ज्योति॑षे प्रजाप॑तिर्विराज॑मपश्यत्तया॑ भूतं च भव्यं॑ चासृजत तामृषि॑भ्यस्तिरोऽदधात्तां जमद॑ग्निस्तप॑साऽपश्यत्तया वै स पृश्नी॒न्कामा॑नसृजत तत्पृश्नी॑नां पृश्नि॒त्वं यत्पृश्न॑यो गृह्यन्ते पृश्नी॑नेव तैः कामान्यज॑मानोऽव॑ रुन्धे वायुर॑सि प्राणः ( २ ) नामेत्या॑ह प्राणापा॒नावे॒वाव॑ रुन्धे चक्षु॑रसि श्रोत्रं नामेत्याहाऽऽयु॑रेवाव॑ रुन्धे रूपम॑सि वर्णो नामेत्या॑ह प्रजामेवाव॑ रुन्ध ऋतम॑सि सत्यं नामेत्या॑ह क्षत्रमेवाव॑ रुन्धे भूतम॑सि भव्यं नामेत्या॑ह पशवो॑ वा अपामोष॑धीनां गर्भः॑ पशूनेव ( ३ ) अव॑ रुन्ध एतावद्वै पुरु॑षं परि॰

तस्तद्देवावं रुन्ध ऋतस्यं त्वा व्योमन इत्यांहेयं वा ऋतस्य व्योमेमामेवाभि जंयत्यृतस्यं त्वा विभूमन इत्यांहान्तरिक्षं वा ऋतस्य विभूमान्तरिक्षमेवाभि जंयत्यृतस्यं त्वा विधर्मण इत्यांह द्यौर्वा ऋतस्य विधर्म दिवंमेवाभि जंयत्यृतस्यं ( ४ ) त्वा सत्यायेत्यांह दिशो वा ऋतस्यं सत्यं दिशं एवाभि जंयत्यृतस्यं त्वा ज्योतिष इत्यांह सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभि जंयत्येतावंन्तो वै देवलोकास्तानेवाभि जंयति दश सं पंद्यन्ते दशांक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतिं तिष्ठति ( ५ ) ॥

( व्योमन ऋतस्यं प्राणः पशूनेव विधर्म दिवंमेवाभि जंयत्यृतस्य षट्चंत्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

वायुः । असि । प्राण इति प्र—अनः । नाम । सवितुः । आधिपत्य इत्याधि—पत्ये । अपानमित्यंप—अनम् । मे । दाः । चक्षुः । असि । श्रोत्रंम् ।

नाम॑ । धा॒तुः । आधि॑पत्य॒ इत्याधि॑—प॒त्ये॒ । आयुः॑ । मे॒ । दाः॒ । रू॒पम् । अ॒सि॒ । वर्णः॑ । नाम॑ । बृ॒ह॒स्पतेः॑ । आधि॑पत्य॒ इत्याधि॑—प॒त्ये॒ । प्र॒जामिति॑ प्र—जाम् । मे॒ । दाः॒ । ऋ॒तम् । अ॒सि॒ । स॒त्यम् । नाम॑ । इन्द्र॑स्य । आधि॑पत्य॒ इत्याधि॑—प॒त्ये॒ । क्ष॒त्रम् । मे॒ । दाः॒ । भू॒तम् । अ॒सि॒ । भव्य॑म् । नाम॑ । पि॒तॄ॒णाम् । आधि॑पत्य॒ इत्याधि॑—प॒त्ये॒ । अ॒पाम् । ओष॑धीनाम् । गर्भ॑म् । धाः॒ । ऋ॒तस्य॑ । त्वा॒ । व्यो॑मन॒ इति॒ वि—ओ॒म॒ने॒ । ऋ॒तस्य॑ ( १ ) । त्वा॒ । विभू॑मन॒ इति॒ वि—भू॒म॒ने॒ । ऋ॒तस्य॑ । त्वा॒ । विध॑र्मण॒ इति॒ वि—ध॒र्म॒णे॒ । ऋ॒तस्य॑ । त्वा॒ । स॒त्याय॑ । ऋ॒तस्य॑ । त्वा॒ । ज्योति॑षे । प्र॒जाप॑ति॒रिति॑ प्र॒जा—प॒तिः॒ । वि॒राज॑मिति॑ वि—राज॑म् । अ॒प॒श्य॒त् । तया॑ । भू॒तम् । च॒ । भव्य॑म् । च॒ । अ॒सृ॒ज॒त॒ । ताम् । ऋषि॑भ्य॒ इत्यृषि॑—भ्यः॒ । ति॒रः । अ॒द॒धा॒त् । ताम् । ज॒मद॑ग्निः । तप॑सा । अ॒प॒श्य॒त् । तया॑ । वै । सः । पृश्नी॑न् । कामा॑न् । अ॒सृ॒ज॒त॒ । तत् । पृश्नी॑नाम् । पृ॒श्नि॒त्वमिति॑ पृश्नि—त्वम् । यत् । पृश्न॑यः । गृ॒ह्यन्ते॑ । पृश्नी॑न् । ए॒व । तैः । कामा॑न् । यज॑मानः । अवे॑ति । रु॒न्धे॒ । वा॒युः । अ॒सि॒ । प्रा॒ण इति॑ प्र—अ॒नः ( २ ) । नाम॑ ।

इति॑ । आ॒ह॒ । प्रा॒णा॒पा॒नावि॑ति॒ प्राण—अ॒पा॒नौ । ए॒व । अवे॑ति॑ । रु॒न्धे॒ । चक्षुः॑ । अ॒सि॒ । श्रोत्र॑म् । नाम॑ । इति॑ । आ॒ह॒ । आयुः॑ । ए॒व । अवे॑ति॑ । रु॒न्धे॒ । रू॒पम् । अ॒सि॒ । वर्णः॑ । नाम॑ । इति॑ । आ॒ह॒ । प्र॒जा-मिति॑ प्र—जाम् । ए॒व । अवे॑ति॑ । रु॒न्धे॒ । ऋ॒तम् । अ॒सि॒ । स॒त्यम् । नाम॑ । इति॑ । आ॒ह॒ । क्ष॒त्रम् । ए॒व । अवे॑ति॑ । रु॒न्धे॒ । भू॒तम् । अ॒सि॒ । भव्य॑म् । नाम॑ । इति॑ । आ॒ह॒ । प॒शवः॑ । वै । अ॒पाम् । ओष॑-धीनाम् । गर्भः॑ । प॒शून् । ए॒व ( ३ ) । अवे॑ति॑ । रु॒न्धे॒ । ए॒तावत् । वै । पुरु॑षम् । प॒रितः॑ । तत् । ए॒व । अवे॑ति॑ । रु॒न्धे॒ । ऋ॒तस्य॑ । त्वा॒ । व्यो॑मन इ॒ति॒ वि—ओ॒म॒ने॒ । इति॑ । आ॒ह॒ । इ॒यम् । वै । ऋ॒तस्य॑ । व्यो॑मेति॒ वि—ओ॒म॒ । इ॒माम् । ए॒व । अ॒भीति॑ । ज॒य॒ति॒ । ऋ॒तस्य॑ । त्वा॒ । वि॒भूम॒न इ॒ति॒ वि—भू॒म॒ने॒ । इति॑ । आ॒ह॒ । अ॒न्तरि॑क्षम् । वै । ऋ॒तस्य॑ । वि॒भूमे॒ति॒ वि—भूम॒ । अ॒न्तरि॑क्षम् । ए॒व । अ॒भीति॑ । ज॒य॒ति॒ । ऋ॒तस्य॑ । त्वा॒ । वि॒धर्म॒ण इ॒ति॒ वि—ध॒र्म॒णे॒ । इति॑ । आ॒ह॒ । द्यौः । वै । ऋ॒तस्य॑ । वि॒धर्मे॒ति॒ वि—ध॒र्म॒ । दिव॑म् । ए॒व । अ॒भीति॑ । ज॒य॒ति॒ । ऋ॒तस्य॑ ( ४ ) । त्वा॒ । स॒त्याय॑ । इति॑ । आ॒ह॒ । दिशः॑ । वै ।

ऋतस्यं । सत्यम् । दिशः । एव । अभीति । जयति । ऋतस्यं । त्वा । ज्योतिषे । इति । आह । सुवर्ग इति सुवः—गः । वै । लोकः । ऋतस्यं । ज्योतिः । सुवर्गमिति सुवः—गम् । एव । लोकम् । अभीति । जयति । एतावन्तः । वै । देवलोका इति देव—लोकाः । तान् । एव । अभीति । जयति । दश । समिति । पद्यन्ते । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् । विराडिति वि—राट् । विराजीति वि—राजि । एव । अन्नाद्य इत्यन्न—अद्ये । प्रतीति । तिष्ठति ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ तृतीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः । )

---

चतुर्थेऽशोरदाभ्यस्य मन्त्रव्याख्यानमीरितम् ॥

अथ पञ्चमेऽग्निष्टोमशेषं परित्यज्य विकृतिरूपस्य द्वादशाहस्य शेषाः पृश्निग्रहा उच्यन्ते ।

कल्पः—" प्राकृतं यजुर्मानमनुद्रुत्य वायुरसि प्राणो नामेति दशभिः पृश्निग्रहाणां मन्त्रैर्दश मानानि मिमीते " इति ।

इन्द्राय त्वा वृत्रघ्न इत्यादीनि प्राकृतानि यजूंषि सोमोन्मानकरणानि। तदेतद्यजुर्जातमुच्चार्य वायुरसीत्यादिभिर्मन्त्रैः सोमस्योन्मानं कुर्यात् ।

पाठस्तु—

वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाश्चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे

दा रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दा ऋतमसि सत्यं नामेन्द्रस्याऽऽधिपत्ये क्षत्रं मे दा भूतमसि भव्यं नाम पितृणामाधिपत्येऽपामोषधीनां गर्भं धा ऋतस्य त्वा व्योमन ऋतस्य त्वा विभूमन ऋतस्य त्वा विधर्मण ऋतस्य त्वा सत्यायर्तस्य त्वा ज्योतिषे, इति।

हे सोम त्वं यजमानेन पीतः सञ्शरीरमध्ये धारणादिना वायोराप्यायनकारित्वाद्वायुरसि सामान्याकारेण वायुर्भूत्वा विशेषाकारेण प्राणो नामासि। बहिर्निर्गमनशीलस्त्वमुच्छ्वासरूपोऽसि। तादृशस्त्वं सवितुः प्रेरकस्य परमेश्वरस्याऽऽधिपत्ये स्थित्वा मे मह्यमपानमन्तःप्रवेशवन्तं वायुविशेषं दा देहि। तथा चक्षुःश्रोत्रयोराप्यायनकारित्वात्तदुभयरूपोऽसि। अतो धातुर्देहेन्द्रियादिस्रष्टुराधिपत्ये स्थित्वा मह्यमायुर्देहि। तथा शरीरावयवसौष्ठवलक्षणस्य रूपस्य कान्तिलक्षणस्य वर्णस्य च हेतुत्वात्तदुभयरूपोऽसि। अतस्तदुभयकारिणो बृहस्पतेराधिपत्ये स्थित्वा मह्यं पुत्रपौत्रादिरूपां प्रजां देहि। तथा मनसा चिन्त्यमानस्य[ऋतस्य]वाचोच्चार्यमाणस्य सत्यस्य च हेतुत्वात्तदुभयरूपोऽसि। अतस्तदुभयपालकस्येन्द्रस्याऽऽधिपत्ये स्थित्वा मह्यं बलं देहि। तथा शरीरमध्ये यद्भूतं पूर्वं सिद्धं धातुवैषम्यं यच्च भव्यमितः परं भविष्यत्तदुभयसमाधानहेतुत्वात्तदुभयरूपोऽसि। अतस्तदुभयसमाधातॄणां पितृणामाधिपत्ये स्थित्वाऽपामोषधीनां च संबन्धी यो गर्भः पशुरूपस्तं धाः संपादय। हे सोम ऋतस्य व्योमने सत्यस्य विशेषेण रक्षणाय त्वां मिमे। ऋतस्य सत्यस्य विभूमने विशेषेण बाहुल्याय त्वां मिमे। तथर्तस्य विधर्मणे सत्यस्य विशेषेण धारणाय त्वां मिमे। तथर्तस्य सत्याय सत्यस्य सत्याय प्रमादरूपानृतराहित्याय त्वां मिमे। तथर्तस्य ज्योतिषे सत्यस्य प्रकाशाय त्वां मिमे॥

तैरेतैर्दशभिर्मन्त्रैः सोमोन्मानरूपा ये पृश्निग्रहास्तान्विधातुं प्रस्तौति—

प्रजापतिर्विराजमपश्यत्तया भूतं च भव्यं चासृजत तामृषिभ्यस्तिरोऽदधात्तां जमदग्निस्तपसाऽपश्यत्तया वै स पृश्नीन्कामानसृजत तत्पृश्नीनां पृश्नित्वम्, इति।

( विकृतिरूपद्वादशाहशेषपृश्निग्रहाभिधानम् )

प्रजापतिः पूर्वं विचार्य सृष्टेः साधनभूतां विराजमपश्यत् । वायुरसीत्यादिमन्त्रसमष्टिर्दशसंख्योपेतत्वाद्दशाक्षरयुक्तच्छन्दःसाम्येन विराडित्युच्यते । तया च विराजा भूतं भविष्यच्च जगदसृजत । कृत्स्नं जगत्सृष्ट्वा तत्र किंचिद्भूतं किंचिद्भविष्यदिति विभागमकरोदित्यर्थः । ततस्तां विराजमृषिभ्यो न प्रकाशितवान् । तदा जमदग्निस्तपः कृत्वा प्रजापत्यनुग्रहेण तां विराजमपश्यत् । तया विराजा स जमदग्निः पृश्नीन्धेनुस्वरूपान्कामान्भोगानसृजत । यस्माद्वायुरसीत्यादिभिर्दशभिर्मन्त्रैः पृश्निशब्दाभिधेयान्धेनुरूपान्भोगानसृजत तस्मात्कारणात्पृश्निनामकानां वायुरसीत्यादीनां पृश्निनाम संपन्नम् । पृश्नयः कामधेनवः सृष्टा यैर्मन्त्रैस्ते मन्त्राः पृश्नय इति निर्वक्तुं शक्यत्वात् ॥

अथ विधत्ते—

यत्पृश्नयो गृह्यन्ते पृश्नीनेव तैः
कामान्यजमानोऽव रुन्धे, इति ।

ग्रहणं नाम न पात्रेषु सोमरसस्य धारणं किं तु नद्धस्य सोमस्योन्मानम् । पृश्निशब्दाभिधेयैर्वायुरसीत्यादिभिर्मन्त्रैर्ग्रहीतव्याः सोमभागाः पृश्नयस्ते च गृह्यन्ते ग्रहीतव्या इत्यर्थः । तैरुन्मानलक्षणैर्ग्रहैर्यजमानः कामधेनुसदृशान्भोगान्प्राप्नोति ॥

तत्र प्रथममन्त्रेण प्राणापानपोषणलक्षणं कामं दर्शयति—

वायुरसि प्राणो नामेत्याह
प्राणापानावेवाव रुन्धे , इति ॥

द्वितीयमन्त्रेण चक्षुःश्रोत्रस्थैर्यहेतोरायुषः प्राप्तिं दर्शयति—

चक्षुरसि श्रोत्रं नामेत्याहाऽऽयुरेवाव रुन्धे , इति ॥

तृतीयमन्त्रेणावयवसौष्ठवकान्तिभ्यामुपेतायाः प्रजायाः संपत्तिं दर्शयति—

रूपमसि वर्णो नामेत्याह प्रजामेवाव रुन्धे, इति ॥

चतुर्थमन्त्रेण मानसवाचिकसत्यसाधनस्य संपत्तिं दर्शयति—

ऋतमसि सत्यं नामेत्याह क्षत्रमेवाव रुन्धे , इति ॥

पञ्चममन्त्रेण भूतभविष्यदस्वास्थ्यपरिहारहेतूनां पशूनां प्राप्तिं दर्शयति—

भूतमसि भव्यं नामेत्याह पशवो वा
अपामोषधीनां गर्भः पशूनेवाव रुन्धे, इति ।

अपामोषधीनां गर्भं धा इति तस्मिन्मन्त्रे समाम्नातं तत्र तृणोदकपरिणामरूपत्वात्पशव एव तादृशो गर्भ इह विवक्षितः ॥

पञ्चममन्त्रफलमुपसंहरति—

एतावद्वै पुरुषं परितस्तदेवाव रुन्धे , इति ।

प्राणापानस्वास्थ्यप्रभृति पशुप्राप्तिपर्यन्तं यावत्फलमुक्तमेतावदेव पुरुषं परितो वर्तते पुरुषस्य सर्वतोऽपेक्षितं फलमित्यर्थः ॥

उत्तरस्मिन्मन्त्रपञ्चके व्योमन इत्यादिभिः पञ्चभिश्चतुर्थ्यन्तपदैर्लोकत्रयस्य दिशां स्वर्गस्य च विवक्षितत्वात्तद्विजयः फलमित्येतद्दर्शयति—

ऋतस्य त्वा व्योमन इत्याहेयं वा ऋतस्य व्योमेमामेवाभि जयत्यृतस्य त्वा विभूमन इत्याहान्तरिक्षं वा ऋतस्य विभूमान्तरिक्षमेवाभि जयत्यृतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाभि जयत्यृतस्य त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यं दिश एवाभि जयत्यृतस्य त्वा ज्योतिष इत्याह सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभि जयत्येतावन्तो वै देवलोकास्तानेवाभि जयति , इति ।

ऋतशब्दः सत्यवाची ॥

कामप्रापके पूर्वमन्त्रपञ्चके लोकजयहेतावुत्तरमन्त्रपञ्चके चावस्थितां संख्यां प्रशंसति—

दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति ॥, इति ॥

अत्र विनियोगसंग्रहः—

वायुर्दश द्वादशाहे पृश्निग्रहणमन्त्रकाः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

( अथ तृतीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

देवा वै यद्यज्ञेन नावारुन्धत तत्परैरवारुन्धत तत्पराणां परत्वं यत्परे गृह्यन्ते यदेव यज्ञेन नावरुन्धे तस्यावरुद्ध्यै यं प्रथमं गृह्णाती- ममेव तेन लोकमभि जयति यं द्वितीयमन्तरिक्षं तेन यं तृतीयममुमेव तेन लोकमभि जयति यदेते गृह्यन्त एषां लोकानामभिजित्यै (१) उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमाँल्लोकान्पुनरिमं लोकं प्रत्यवरोहन्ति यत्पूर्वेष्वहःस्वितः पराञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे लोका यदुत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्मादयातयाम्नो लोकान्मनुष्या उप जीवन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्यादद्भ्य ओषधयः सं भवन्त्योषधयः (२) मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्र जायन्त इति परानन्विति ब्रूयाद्यद्गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति तस्मादद्भ्य ओषधयः सं भवन्ति यद्गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नं यद्गृह्णाति प्रजाभ्यस्त्वा प्रजाप-

तये गृह्णामीति तस्मात्प्रजापतिं प्रजा अनु प्र जायन्ते ( ३ ) ॥

( अभिजित्या ओषधयोऽष्टाचत्वारिंशच्च )।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः । )

---

देवाः । वै । यत् । यज्ञेन । न । अवारुन्धतेत्यव—अरुन्धत । तत् । परैः । अवेति । अरुन्धत । तत् । पराणाम् । परत्वमिति पर—त्वम् । यत् । परे । गृह्यन्ते । यत् । एव । यज्ञेन । न । अवरुन्ध इत्यव—रुन्धे । तस्य । अवरुद्ध्या इत्यव—रुद्ध्यै । यम् । प्रथमम् । गृह्णाति । इमम् । एव । तेन । लोकम् । अभीति । जयति । यम् । द्वितीयम् । अन्तरिक्षम् । तेन । यम् । तृतीयम् । अमुम् । एव । तेन । लोकम् । अभीति । जयति । यत् । एते । गृह्यन्ते । एषाम् । लोकानाम् । अभिजित्या इत्यभि—जित्यै ( १ ) । उत्तरेष्वित्युत्—तरेषु । अहःस्वित्यहः—सु । अमुतः । अर्वाञ्चः । गृह्यन्ते । अभिजित्येत्यभि—जित्य । एव । इमान् । लोकान् । पुनः । इमम् । लोकम् । प्रत्यवरोहन्तीति प्रति—

अवरोहन्ति। यत्। पूर्वेषु। अहःस्वित्यहः—सु। इतः। पराञ्चः। गृह्यन्ते। तस्मात्। इतः। पराञ्चः। इमे। लोकाः। यत्। उत्तरेष्वित्युत्—तरेषु। अहःस्वित्यहः—सु। अमुतः। अर्वाञ्चः। गृह्यन्ते। तस्मात्। अमुतः। अर्वाञ्चः। इमे। लोकाः। तस्मात्। अयातयाम्न इत्ययात—याम्नः। लोकान्। मनुष्याः। उपेति। जीवन्ति। ब्रह्मवादिन इति ब्रह्म—वादिनः। वदन्ति। कस्मात्। सत्यात्। अभ्य इत्यत्—भ्यः। ओषधयः। समिति। भवन्ति। ओषधयः (२)। मनुष्याणाम्। अन्नम्। प्रजापतिमिति प्रजा—पतिम्। प्रजा इति प्र—जाः। अनु। प्रेति। जायन्ते। इति। परान्। अन्विति। इति। ब्रूयात्। यत्। गृह्णाति। अभ्य इत्यत्—भ्यः। त्वा। ओषधीभ्य इत्योषधि—भ्यः। गृह्णामि। इति। तस्मात्। अभ्य इत्यत्—भ्यः। ओषधयः। समिति। भवन्ति। यत्। गृह्णाति। ओषधीभ्य इत्योषधि—भ्यः। त्वा। प्रजाभ्य इति प्र—जाभ्यः। गृह्णामि। इति। तस्मात्। ओषधयः। मनुष्याणाम्। अन्नम्। यत्। गृह्णाति। प्रजाभ्य इति प्र—जाभ्यः। त्वा। प्रजा-

पतय इति प्रजा—पतये । गृह्णामि । इति । तस्मात् । प्रजापतिमिति प्रजा—पतिम् । प्रजा इति प्र—जाः । अनु । प्रेति । जायन्ते ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः )

---

पृश्निग्रहाख्या उन्मानविशेषाः पञ्चमे श्रुताः ।
अथ षष्ठे गवामयनगताः परःसंज्ञका अतिग्राह्यविशेषा उच्यन्ते ।

कल्पः—" त्रिषु परःसामसु त्रीनतिग्राह्यान्गृह्णात्युपयामगृहीतोऽस्यग्नयस्त्वौषधीभ्यो जुष्टं गृह्णामीति प्रथमेऽहनि गृह्णात्योषधीभ्यस्त्वा प्रजाभ्य इति द्वितीये प्रजाभ्यस्त्वा प्रजापतय इति तृतीय एतानेवाऽऽवृत्तानर्वाक्सामसु तानूर्ध्वानावृत्तांश्च विषुवति " इति ।

अस्ति गवामयनं नाम संवत्सरसत्रं, तस्य पूर्वमासषट्कमुत्तरमासषट्कं चेति द्वौ भागौ, तयोर्मध्ये विषुवत्संज्ञकमेकं प्रधानमहर्भवति । तस्य चाह्नः पूर्वभावीनि परःसामनामकानि त्रीण्यहानि भवन्ति । तानि पूर्वस्य मासषट्कस्यान्तिमानि । तथा विषुवतोऽह्न उत्तरभावीन्यनन्तराण्यर्वाक्सामनामानि त्रीण्यहानि भवन्ति । तान्युत्तरस्य मासषट्कस्याऽऽदिभूतानि । तत्रापि परःसामनामकेषु त्रिष्वहःसु क्रमेणोक्तैस्त्रिभिर्मन्त्रैस्त्रयोऽतिग्राह्याख्याः सोमरसा ग्रहीतव्याः। अर्वाक्सामनामकेषु त्रिष्वहःसु तेषामेव मन्त्राणां विपरीतक्रमेण त्रयोऽतिग्राह्या ग्रहीतव्याः । विषुवन्नामके तु मुख्यदिने समाम्नातक्रमेण विपरीतक्रमेण चेत्येवं षडतिग्राह्या ग्रहीतव्याः ॥

तानेतानतिग्राह्यान्विधातुं प्रस्तौति—

देवा वै यद्यज्ञेन नावारुन्धत तत्परैरवारुन्धत तत्पराणां परत्वम् , इति ।

पुरा यज्ञमनुतिष्ठन्तो देवा विधास्यमानातिग्राह्यरहितेन केवलेन यज्ञेन यत्फलं न प्राप्नुवन्तस्तत्फलं पराख्यैर्ग्रहैराप्नुवन् । पारयन्त्यभीष्टसमाप्तिं गमयन्तीति पराः।

( गवामयनगतपरःसंज्ञकातिग्राह्यविशेषाभिधानम् )

विधत्ते—

यत्परे गृह्यन्ते यदेव यज्ञेन
नावरुन्धे तस्यावरुद्ध्यै, इति ॥

समुदायाकारेण प्रशस्य विशेषाकारेण प्रशंसति—

यं प्रथमं गृह्णातीममेव तेन लोकमभि
जयति यं द्वितीयमन्तरिक्षं तेन यं तृती-
यममुमेव तेन लोकमभि जयति यदेते
गृह्यन्त एषां लोकानामभिजित्यै, इति ॥

विषुवतोऽह्न उपरितनेष्वहःसु विपरीतक्रमं विधत्ते—

उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमा-
ल्लोँकान्पुनरिमं लोकं प्रत्यवरोहन्ति , इति ।

अमुतोऽन्त्यादर्वाञ्चो व्युत्क्रमस्थितान्गृह्णीयात् । तथा सति पूर्वानुष्ठितैरनु-लोमगतैर्ग्रहैः पृथिव्यन्तरिक्षद्युलोकानभिजित्यैव पुनर्द्युलोकाद्भूलोकं प्रत्यारूढ-वान्भवति ॥

अथाऽऽम्नातक्रमं विपरीतक्रमं च मिलित्वा पुनः प्रशंसति—

यत्पूर्वेष्वहःस्वितः पराञ्चो गृह्यन्ते तस्मादितः
पराञ्च इमे लोका यदुत्तरेष्वहःस्वमुतोऽर्वाञ्चो
गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्माद-
यातयाम्नो लोकान्मनुष्या उप जीवन्ति , इति ।

विषुवतोऽह्नः पूर्वेष्वहःसु इतः प्रथमादतिग्राह्यादारभ्य क्रमेणैव पराञ्चो गृह्यन्ते । परमुत्तममञ्चन्तीति पराञ्चः । प्रथमं गृहीत्वा ततः परं द्वितीयोऽति-ग्राह्यः । द्वितीयं गृहीत्वा ततः परं तृतीयोऽतिग्राह्यः । एते पराञ्चः । यस्मादेवं गृह्यन्ते तस्मादितो भूलोकादारभ्य त्रयो लोकाः पराञ्च उत्तरोत्तरगतयो भवन्ति । विषुवत उत्तरेष्वहःस्वमुतस्तृतीयग्रहादारभ्यार्वाञ्चोऽधस्तना गृह्यन्ते । प्रथमेऽहनि तृतीयो ग्रहो द्वितीयेऽहनि द्वितीयो ग्रहस्तृतीयेऽहनि प्रथमो ग्रहः । त एतेऽर्वाञ्चः । यस्मादेवं तस्मादमुतो द्युलोकादधस्तनोऽन्तरिक्षलोकस्तस्माद-धस्तनो भूलोकः । त एतेऽर्वाञ्चो लोका यस्मात्पराञ्चोऽर्वाञ्चश्च परस्परवि-

लक्षणा अत एवापुनरावृत्तत्वादगतसाराः । तस्मान्मनुष्या अगतसाराँल्लोकानुपजीवन्ति । यानि स्थानान्युपभुक्तत्वेन गतसाराणि भवन्ति तानि नापेक्षन्ते किंत्वभुक्तपूर्वाणि नूतनानि स्थानान्यपेक्षन्ते ॥

प्रथममन्त्रत्रयं विधातुं प्रस्तौति—

ब्रह्मवादिनो वदन्ति कस्मात्सत्यादद्भ्य ओषधयः
सं भवन्त्योषधयो मनुष्याणामन्नं प्रजापतिं प्रजा
अनु प्र जायन्त इति परानन्विति ब्रूयात् , इति ।

लोके ह्यद्भ्यः सकाशादोषधय उत्पद्यन्त इति यत्तत्कस्मात्सत्यात्कुतः कारणात् । तथा मनुष्याणामोषधयोऽन्नमिति यत्तदपि कुतः कारणात् । तथा प्रजापतिमनु प्रजाः प्रजायन्त इति यदेतदपि कुतः कारणादित्येवं ब्रह्मवादिभिः पृष्टः कश्चिद्बुद्धिमान्परानन्वित्युत्तरं ब्रूयात् । परतोऽतिग्राह्यग्रहणमन्त्रा उत्कृष्टत्वात्परशब्दाभिधेयाः । तदनुसारेण यथोक्तमेतत्त्रयं संपद्यते ॥

तत्र प्रथमं मन्त्रं विधत्ते—

यद्गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति
तस्मादद्भ्य ओषधयः सं भवन्ति, इति ।

हे प्रथमातिग्राह्य त्वामद्भ्यः सकाशाद्गृह्णामि । किमर्थम् । ओषधीभ्य ओषध्युत्पत्त्यर्थम् । अनेन मन्त्रेण प्रथमं गृह्णीयात् । यस्मादेवं गृह्णाति तस्मादद्भ्यः सकाशादोषधयः सम्यग्भवन्ति ॥

द्वितीयमन्त्रं विधत्ते—

यद्गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नम्, इति ।

हे द्वितीयातिग्राह्य त्वामोषधीभ्यः सकाशाद्गृह्णामि । किमर्थम् । प्रजाभ्यः प्रजाजीवनार्थम् । अनेन द्वितीयातिग्राह्यं गृह्णीयात् । यस्मादेवं गृह्णाति तस्मादोषधयो मनुष्याणामन्नं भवन्ति ॥

अथ तृतीयं मन्त्रं विधत्ते—

यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति
तस्मात्प्रजापतिं प्रजा अनु प्र जायन्ते ॥, इति ॥

( सोमाङ्गत्वेनाऽऽश्रावयेत्यादिमन्त्रविधिः )

हे तृतीयातिग्राह्य त्वां प्रजार्थं प्रजापत्यर्थं च गृह्णामि। प्रजाः सर्वा अपि प्रजापतिमाश्रित्य यथा प्रजायेरन्नित्यनेनाभिप्रायेण गृह्णामीत्यर्थः ॥

अथ विनियोगसंग्रहः--

"पराभिधा अतिग्राह्यास्ते गवामयने त्रयः।
तेष्वद्भ्य ओषधीभ्यश्च प्रजाभ्यश्चेति मन्त्रकाः ॥ १ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत यज्ञं छन्दांसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दांसि ते देवा अमन्यन्तामी वा इदमभूवन्यद्वयँ स्म इति ते प्रजापतिमुपाधावन्त्सोऽब्रवीत्प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्र दास्यामीति स छन्दसां वीर्यम् (१.) आदाय तदेभ्यः प्रायच्छत्तदनु छन्दांस्यपाक्रामञ्छन्दांसि यज्ञस्ततो देवा अभवन्पराऽसुरा य एवं छन्दसां वीर्यं वेदाऽऽश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युरा श्रावयतीति छन्दसां वीर्यायेति ब्रूयादेतद्वै (२)

छन्दसां वीर्यमा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद सवीर्यैरेव छन्दोभिरर्चति यत्किं चार्चति यदिन्द्रो वृत्रमहन्नमेध्यं तद्यद्यतीनपावपदमेध्यं तदथ कस्मादैन्द्रो यज्ञ आ सꣳस्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव तद्यजन्ति य एवं वेदोपैनं यज्ञो नमति ( ३ ) ॥

( छन्दसां वीर्यं वा एव तदष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

प्रजापतिरिति प्रजा—पतिः । देवासुरानिति देव—असुरान् । असृजत । तत् । अन्विति । यज्ञः । असृज्यत । यज्ञम् । छन्दाꣳसि । ते । विष्वञ्चः । वीति । अक्रामन् । सः । असुरान् । अन्विति । यज्ञः । अपेति । अक्रामत् । यज्ञम् । छन्दाꣳसि । ते । देवाः । अमन्यन्त । अमी इति । वै । इदम् । अभूवन् । यत् । वयम् । स्मः । इति । ते । प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावन् । सः । अब्रवीत् । प्रजापतिरिति प्रजा—पतिः । छन्दसाम् ।

(सोमाङ्गत्वेनाऽऽश्रावयेत्यादिमन्त्रविधिः)

वीर्यम् । आदायेत्या—दार्य । तत् । वः । प्रेति । दास्यामि । इति । सः । छन्दसाम् । वीर्यम् (१) । आदायेत्या—दार्य । तत् । एभ्यः । प्रेति । अयच्छत् । तत् । अन्विति । छन्दांसि । अपेति । अक्रामन् । छन्दांसि । यज्ञः । ततः । देवाः । अभवन् । परेति । असुराः । यः । एवम् । छन्दसाम् । वीर्यम् । वेद । एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कार इति वषट्—कारः । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । कस्मै । कम् । अध्वर्युः । एति । श्रावयति । इति । छन्दसाम् । वीर्याय । इति । ब्रूयात् । एतत् । वै । (२) । छन्दसाम् । वीर्यम् । एति । श्रावय । अस्तु । श्रौषट् । यज । ये । यजामहे । वषट्कार इति वषट्—कारः । यः । एवम् । वेद । सवीर्यैरिति स—वीर्यैः । एव । छन्दोभिरिति छन्दः—भिः । अर्चति । यत् । किम् । च । अर्चति । यत् । इन्द्रः । वृत्रम् । अहन् । अमेध्यम् । तत् । यत् । यतीन् । अपावपदित्यप—अवपत् । अमेध्यम् । तत् । अथ । कस्मात् । ऐन्द्रः । यज्ञः । एति । सं-

स्थातोरिति सं—स्थातोः । इति । आहुः । इन्द्रस्य । वै । एषा । यज्ञिया । तनूः । यत् । यज्ञः । ताम् । एव । तत् । यजन्ति । यः । एवम् । वेद । उपेति । एनम् । यज्ञः । नमति ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठे प्रोक्ता अतिग्राह्या गवामयनिकास्त्रयः ॥
अथ सप्तमे सोमाङ्गत्वेनाऽऽश्रावयेत्यादयो मन्त्रा विधीयन्ते—

प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत यज्ञं छन्दाꣳसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दाꣳसि ते देवा अमन्यन्तामी वा इदमभूवन्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्सोऽब्रवीत्प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्र दास्यामीति स छन्दसां वीर्यमादाय तदेभ्यः प्रायच्छत्तदनु छन्दाꣳस्यपाक्रामन्छन्दाꣳसि यज्ञस्ततो देवा अभवन्पराऽसुराः, इति ।

कदाचित्प्रजापतिर्देवानसुरांश्च पुराऽसृजत सृष्टवान् । ताननु तेन यज्ञोऽव्यसृज्यत । यज्ञमनु च्छन्दांसि च ससर्ज । तदानीं ते देवाः परस्परमैकमत्याभावाद्विष्वञ्चो नानागतयो भूत्वा व्यक्रामन्विविधं देशं गताः । अथ स यज्ञोऽसुराननुसृत्य देवेभ्योऽपाक्रामत् । तं च यज्ञमनुसृत्य च्छन्दांस्यपि देवेभ्योऽपाक्रामन् । तदानीं ते देवाः परस्परमैकमत्यं प्राप्यैवं विचारितवन्तो

( सोमाङ्गत्वेनाऽऽश्रावयेत्यादिमन्त्रविधिः )

वयं यदैश्वर्यं प्राप्य स्थिताः स्मस्तदिदं सर्वं प्राप्यासुरा एवेदानीमवस्थिता अभवन्निति विचार्य ते देवास्तथाविधं परिभवमसहमानाः प्रजापतिमुपाधावन्। अथ देवैरुपसेवितः प्रजापतिस्तान्प्रत्येवमब्रवीत्। छन्दसां वैदिकमन्त्राणां मध्ये वीर्यं सारमादाय युष्मभ्यं तत्प्रदास्यामीत्युक्त्वा तथैव कृतवान्। अथ तद्वीर्यमनु सर्वाणि च्छन्दांस्यसुरेभ्योऽपक्रम्य देवान्प्राप्नुवन्। तानि च्छन्दांस्यनुसृत्य यज्ञोऽप्यसुरेभ्योऽपक्रम्य देवान्प्राप्नोत्। ततो देवा विजयिनोऽभवन्नसुरास्तु पराभूताः॥

अथ मन्त्रान्विधत्ते—

य एवं छन्दसां वीर्यं वेदाऽऽश्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो भवत्यात्मना पराऽस्य भ्रातृव्यो भवति, इति।

यो वीर्यं वेद स स्वयमेव विजयी भवति। तस्य भ्रातृव्यः पराभवति। तस्माद्वीर्यं विदित्वा प्रयुञ्जीत। आश्रावयेत्यादिमन्त्रपञ्चकं तद्वीर्यम्। एतेषां मन्त्राणामर्था यो वै सप्तदशमित्यस्मिन्ननुवाके [ सं० का० १ प्र० ६ अ० ११ ] प्रपञ्चिताः। इष्ट्यङ्गत्वेन तत्र विधिः। अत्र तु सोमाङ्गत्वेन। सोमस्येष्टिविकारत्वाभावेन चोदकात्ते मन्त्रा अप्राप्ताः॥

इदानीं तानेतान्मन्त्रान्प्रशंसति—

ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युरा श्रावयतीति छन्दसां वीर्यायेति ब्रूयादेतद्वै छन्दसां वीर्यमा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारः, इति।

कस्मै कं कस्मै कामाय प्रयोजनायाध्वर्युराश्रावणं करोतीति ब्रह्मवादिभिः पृष्टो बुद्धिमानुत्तरं ब्रूयात्। प्रजापतिनोद्धृतवीर्याणां छन्दसां पुनर्वीर्यप्राप्तिलाभायाध्वर्युराश्रावयतीत्युत्तरम्। स एवोत्तरवादी वीर्यं दर्शयितुमाश्रावयेत्यादिकमनुवदति॥

इदानीं वीर्यवेदनं प्रशंसति—

य एवं वेद सवीर्यैरेव छन्दोभिरर्चति यत्किं चार्चति, इति।

अस्मिन्यज्ञे लोकव्यवहारे वा वीर्यवेदी यत्किंचिद्देवादिकं पूजयति तत्सर्वं सवीर्यैरेव च्छन्दोभिः पूजितवान्भवति॥

अथैतैर्मन्त्रैर्युक्तं यज्ञं प्रशंसति—

यदिन्द्रो वृत्रमहन्नमेध्यं तद्यद्यतीनपाव-
पदमेध्यं तदथ कस्मादैन्द्रो यज्ञ आ सꣳ-
स्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया
तनूर्यद्यज्ञस्तामेव तद्यजन्ति, इति ।

इन्द्रो वृत्रं हतवानिति यत्तदेतद्ब्रह्मरूपममेध्यमयज्ञियम् । किंचायमिन्द्रो यतीनपावपत्सालावृकेभ्यः प्रायच्छदिति यत्तदपि पापरूपत्वादयज्ञियम् । अथैवं सति कस्मात्कारणादयं यज्ञ आ संस्थातोः समाप्तिपर्यन्तमैन्द्रः संपन्न इति ब्रह्मवादिन आहुः । तत्र बुद्धिमानेवमुत्तरं ब्रूते—इन्द्रस्य हि द्वे तन्वावयज्ञिया यज्ञिया च । राज्यं कुर्वती क्षत्रादीन्हिंसन्ती तनूरयज्ञिया । सा च राजसी । यज्ञ इति यदेषेन्द्रस्यैव यज्ञिया यज्ञार्हा तनूः । सा च सात्त्विकी वक्ष्यत इति । यज्ञे हविषा पूजनीयो यज्ञाङ्गदेवतारूपः सात्त्विकविग्रह इत्यर्थः । तत्तस्मिन्यज्ञे तामेव सात्त्विकीं यज्ञार्हां तनूं यजमानाः प्रयजन्ति ॥

यज्ञरूपतनुवेदनं प्रशंसति—

य एवं वेदोपैनं यज्ञो नमति ॥, इति ॥

अत्र विनियोगसंग्रहः—

"आश्रावयेत्यादयोऽत्र पञ्च मन्त्रा उदीरिताः ।
आश्रावणादि सोमार्थमत्र प्राक्तनमिष्टिगम् ॥ १ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके
सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको
घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं
पितेव पुत्रमभि रक्षतादिमम् । आ वृश्च्यते वा

---

१ क. घ. ङ. च. 'मार्थे मन्त्रं प्रा' ।

एतद्यजमानोऽग्निभ्यां यदेनयोः शृतंकृत्याथान्यत्रावभृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादाहुत्यैवैनौ शमयति नाऽऽर्तिमार्छति यजमानो यत्कुसीदम् ( १ ) अप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामि । विश्वलोप विश्वदावस्य त्वाऽऽसञ्जुहोम्यग्धादेकोऽहुतादेकः समसनादेकः । ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यम् । अयं नो नभसा पुरः सꣳस्फानो अभि रक्षतु । गृहाणामसमर्त्यै बहवो नो गृहा असन् । स त्वं नः ( २ ) नभसस्पत ऊर्जं नो धेहि भद्रया । पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि । देव सꣳस्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् । अग्निर्वाव यम इयं यमी कुसीदं वा एतद्यमस्य यजमान आ दत्ते यदोषधीभिर्वेदिꣳ स्तृणाति यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनम् ( ३ ) अमुष्मिँल्लोके नेनीयेरन्यत्कुसीदमप्रतीत्तं मयीत्युपोषतीहैव सन्यमं कुसीदं निरवदायानृणः

सुवर्गं लोकमेति यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत्प्रदाव्यः स एवैनꣳ स्वदयत्यह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेद्यदि (४) दहति पुण्यसमं भवति यदि न दहति पापसममेतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्त्रमुप यन्ति यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारं विद्वान्यजते सममुष्मिꣳल्लोक इष्टापूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता तान्य एवं विद्वान्यजते सममुष्मिꣳल्लोक इष्टापूर्तेन गच्छतेऽयं नो नभसा पुरः (५) इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति स त्वं नो नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति देव सꣳस्फानेत्याहासौ वा आदित्यो देवः सꣳस्फान आदित्यमेव तदाहैतन्मे गोपायेति (६) ॥

(कुसीदं त्वं न एनमोषेद्यदि पुर आदित्यमेव तदाहैतन्मे गोपायेति ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अवभृथाङ्गहोमाद्यभिधानम् )

( अथ तृतीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

---

आयुर्दा इत्यायुः—दाः । अग्ने । हविषः । जुषाणः । घृतप्रतीक इति घृत—प्रतीकः । घृतयोनिरिति घृत—योनिः । एधि । घृतम् । पीत्वा । मधु । चारु । गव्यम् । पिता । इव । पुत्रम् । अभीति । रक्षतात् । इमम् । एति । वृश्च्यते । वै । एतत् । यजमानः । अग्निभ्यामित्यग्नि—भ्याम् । यत् । एनयोः । शृतंकृत्येति शृतं—कृत्य । अथ । अन्यत्र । अवभृथमित्यव—भृथम् । अवैतीत्यव—एति । आयुर्दा इत्यायुः—दाः । अग्ने । हविषः । जुषाणः । इति । अवभृथमित्यव—भृथम् । अवैष्यन्नित्यव—एष्यन् । जुहुयात् । आहुत्येत्या—हुत्या । एव । एनौ । शमयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । यत् । कुसीदम् ( १ ) । अप्रतीत्तमित्यप्रति—इत्तम् । मयि । येन । यमस्य । बलिना । चरामि । इह । एव । सन् । निरवदय इति निः—अवदये । तत् । एतत् । तत् । अग्ने । अनृणः । भवामि । विश्वलोपेति विश्व—लोप । विश्वदावस्येति विश्व—दावस्य । त्वा । आसन् । जुहोमि । अग्धादित्यग्ध—अत् । एकः । अहुतादित्यहुत—

अत् । एकः । समसनादिति समसन—अत् । एकः ।
ते । नः । कृण्वन्तु । भेषजम् । सदः । सहः । वरे-
ण्यम् । अयम् । नः । नभसा । पुरः । सᳪस्फान
इति सं—स्फानः । अभीति । रक्षतु । गृहाणाम् ।
असमर्त्या इत्यसम्—ऋत्यै । बहवः । नः । गृहाः ।
असन् । सः । त्वम् । नः ( २ ) । नभसः । पते ।
ऊर्जम् । नः । धेहि । भद्रया । पुनः । नः । नष्टम् ।
एति । कृधि । पुनः । नः । रयिम् । एति । कृधि ।
देव । सᳪस्फानेति सं—स्फान । सहस्रपोषस्येति
सहस्र—पोषस्य । ईशिषे । सः । नः । रास्व ।
अज्यानिम् । रायः । पोषम् । सुवीर्यमिति सु—वी-
र्यम् । संवत्सरीणामिति सं—वत्सरीणाम् । स्वास्तिम् ।
अग्निः । वाव । यमः । इयम् । यमी । कुसीदम् ।
वै । एतत् । यमस्य । यजमानः । एति । दत्ते ।
यत् । ओषधीभिरित्योषधि—भिः । वेदिम् । स्तृणाति ।
यत् । अनुपोष्येत्यनुप—ओष्य । प्रयायादिति प्र—
यायात् । ग्रीवबद्धमिति ग्रीव—बद्धम् । एनम् ( ३ ) ।
अमुष्मिन् । लोके । नेनीयेरन् । यत् । कुसीदम् ।
अप्रतीत्तमित्यप्रति—इत्तम् । मयि । इति । उपेति ।
ओषति । इह । एव । सन् । यमम् । कुसीदम् ।

(अवभृथाङ्गहोमाद्यभिधानम्)

निरवदायेति निः—अवदाय । अनृणः । सुवर्गमिति
सुवः—गम् । लोकम् । एति । यदि । मिश्रम् ।
इव । चरेत् । अञ्जलिना । सक्तून् । प्रदाव्य इति
प्र—दाव्ये । जुहुयात् । एषः । वै । अग्निः । वैश्वा-
नरः । यत् । प्रदाव्य इति प्र—दाव्यः । सः । एव ।
एनम् । स्वदयति । अह्नाम् । विधान्यामिति वि—
धान्याम् । एकाष्टकायामित्येक—अष्टकायाम् । अपू-
पम् । चतुःशरावमिति चतुः—शरावम् । पक्त्वा ।
प्रातः । एतेन । कक्षम् । उपेति । ओषेत् । यदि(४) ।
दहति । पुण्यसममिति पुण्य—समम् । भवति ।
यदि । न । दहति । पापसममिति पाप—समम् ।
एतेन । ह । स्म । वै । ऋषयः । पुरा । विज्ञाने-
नेति वि—ज्ञानेन । दीर्घसत्रमिति दीर्घ—सत्रम् ।
उपेति । यन्ति । यः । वै । उपद्रष्टारमित्युप—द्रष्टा-
रम् । उपश्रोतारमित्युप—श्रोतारम् । अनुख्यातार-
मित्यनु—ख्यातारम् । विद्वान् । यजते । समिति ।
अमुष्मिन् । लोके । इष्टापूर्तेनेतीष्ट—पूर्तेन । गच्छते ।
अग्निः । वै । उपद्रष्टेत्युप—द्रष्टा । वायुः । उपश्रोते-
त्युप—श्रोता । आदित्यः । अनुख्यातेत्यनु—ख्याता ।
तान् । यः । एवम् । विद्वान् । यजते । समिति ।

अमुष्मिन् । लोके । इष्टापूर्तेनेतीष्ट—पूर्तेन । गच्छते । अयम् । नः । नभसा । पुरः ( ५ ) । इति । आह । अग्निः । वै । नभसा । पुरः । अग्निम् । एव । तत् । आह । एतत् । मे । गोपाय । इति । सः । त्वम् । नः । नभसः । पते । इति । आह । वायुः । वै । नभसः । पतिः । वायुम् । एव । तत् । आह । एतत् । मे । गोपाय । इति । देव । सꣳस्फानेति सं— स्फान । इति । आह । असौ । वै । आदित्यः । देवः । सꣳस्फान इति सं—स्फानः । आदित्यम् । एव । तत् । आह । एतत् । मे । गोपाय । इति ( ६ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ तृतीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः । )

सोमाङ्गाश्रावणादीनां मन्त्राणां सप्तमे विधिः ॥

अथाष्टमेऽवभृथाङ्गहोमादयो वक्तव्याः ।

कल्पः—"आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यन्नाहवनीये हुत्वा" इति ।

पाठस्तु—

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु

गव्यं पितेव पुत्रमभि रक्षतादिमम् । , इति ।

हेऽग्ने त्वमायुर्दा एधि यजमानस्याऽऽयुष्प्रदो भव । कीदृशस्त्वम् । हविषो जुषाणो हविः सेवमानो घृतप्रतीको घृतोपक्रम आघारप्रयाजादीनां घृतेन हूयमानत्वात् । घृतयोनिरवसानेऽप्यनूयाजादौ घृतमेव योनिर्ज्वालोत्पत्तिकारणं यस्यासौ घृतयोनिः । तादृशस्त्वं मधु स्वादुतमं चारु शोधितत्वेन निर्मलं गव्यं घृतं पीत्वा पिता पुत्रमिवेमं यजमानमभितो रक्ष ॥

अनेन मन्त्रेण होमं विधत्ते—

आ वृश्च्यते वा एतद्यजमानोऽग्निभ्यां यदेनयोः शृतंकृत्याथान्यत्रावभृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादाहुत्यैवैनौ शमयति नाऽऽर्तिमार्छति यजमानः , इति ।

एनयोराहवनीयगार्हपत्ययोर्हविः पक्कं कृत्वाऽत्रावभृथहविषो वारुणपुरोडाशस्य पक्कस्य होममकृत्वाऽन्यत्र जलसमीपेऽवभृथकर्मार्थं गच्छतीति यदेनेनापराधेन यजमान आहवनीयगार्हपत्याभ्यामग्निभ्यां विच्छिन्नो भवति । अतोऽवभृथं जिगमिषुरायुर्दा अग्न इति मन्त्रेणाऽऽज्यमाहवनीये जुहुयात् । एतयैवाऽऽहुत्यैनावाहवनीयगार्हपत्यौ शान्तौ करोति । तयोः शान्तयोः सतोर्यजमान आर्तिं न प्राप्नोति ॥

कल्पः—" आहवनीयादुल्मुकमादाय वेदिमुपोषति यत्कुसीदमप्रतीत्तमिति " इति ।

अवभृथोदयनीयानूबन्ध्याख्येभ्यः कर्मभ्य ऊर्ध्वमयं वेदिदाहः ।

मन्त्रपाठस्तु—

यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामि ।, इति ।

यत्कुसीदमृणमप्रतीत्तमनर्पितं मयि वर्तते, येन यमस्य बलिनोत्तमर्णस्य बलिः प्रत्यर्पणीयमृणं येनाहमृणेन युक्त इदानीं वर्ते तदेतदृणमिहैव सन्नस्मिन्नेव जन्मनि यज्ञदेशे वर्तमानो निरवदये निःशेषेणापाकरोमि तत्तेनैव कारणेन हेऽग्ने यमरूपादुत्तमर्णादहमनृणो भवामि ॥

कल्पः—" यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहुयाद्विश्वलोप विश्वदावस्य त्वेति " इति ।

अस्मिन्पक्षे यदङ्गं संकीर्णमिव यजमानोऽनुतिष्ठेत्तस्य सांकर्यस्य परिहाराय वेदिदाहके दावाग्नौ सक्तूनञ्जलिना जुहुयात् ।

मन्त्रपाठस्तु—

विश्वलोप विश्वदावस्य त्वाऽऽसञ्जुहोम्य-
ग्धादेकोऽहुतादेकः समसनादेकः । ते नः
कृण्वन्तु भेषजꣳ सदः सहो वरेण्यम् ।, इति ।

हे विश्वलोप सर्वस्य पापस्य विनाशक हे सक्त्वञ्जले विश्वदावस्य कृत्स्नपापदहनाय प्रवृत्तस्य दावाग्नेरासन्नास्ये त्वां जुहोमि । अनेन होमेन संतुष्टा अग्नयस्त्रयस्तेष्वेकोऽग्धं होमेनाऽऽगतमत्तीत्यग्धात् । अहुतं होमरहितमत्तीत्यहुतात्तादृश एकः । समसनं समस्तमप्यत्तीति समसनात्तादृश एकः । ते त्रयोऽप्यग्नयोऽस्माकं भेषजं कृण्वन्तु । क्षुधः परिहारं कुर्वन्तु । तथा सदो निवासस्थानं कुर्वन्तु । सहो बलं कुर्वन्तु । वरेण्यं वरणीयं धनादिकं श्रेष्ठं कुर्वन्तु ॥

कल्पः—" अयं नो नभसा पुर इत्येतैर्यथाब्राह्मणमुपस्थाय " इति ।

प्रथममन्त्रपाठस्तु—

अयं नो नभसा पुरः सꣳस्फानो अभि रक्षतु ।
गृहाणामसमर्त्यै बहवो नो गृहा असन् ।, इति ।

अयमग्निः पुरो वर्तमानो नभसा संस्फानस्तेजसा वर्धमानो नोऽस्मानभिरक्षतु । किमर्थं गृहाणामसमर्त्यै समार्तिः सम्यग्विनाशस्तद्राहित्यार्थम् । ततोऽग्निरक्षणान्नोऽस्माकं बहवो गृहा असन्संन्तु ॥

द्वितीयमन्त्रपाठस्तु—

स त्वं नो नभसस्पत ऊर्जं नो धेहि भद्रया ।
पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि ।, इति ।

नभसस्पत आकाशस्य पालक हे वायो स त्वं नोऽस्मभ्यं भद्रयाऽनुग्रहरूपया वाचोर्जं धेहि अन्नादिरसं प्रयच्छ । किंचास्माकं नष्टमन्नादिरसं पुनराकृधि आनीय देहि । पुनरप्यस्मभ्यं रयिमपेक्षितं धनमानीय देहि ॥

तृतीयमन्त्रपाठस्तु—

देव सꣳस्फान सहस्रपोषस्येशिषे स
नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ
संवत्सरीणाꣳ स्वस्तिम् ।, इति ।

हे संस्फान सम्यगभिवृद्धियुक्ताऽऽदित्य देव त्वं सहस्रपोषस्य सहस्रसंख्याकधनपश्वादिपुष्टेरीशिषे प्रभुर्भवसि । स त्वं नोऽस्मभ्यं रास्व देहि । किं किमिति तदुच्यते–अज्यानिमक्षीणत्वं दारिद्र्याभावं रायस्पोषं धनपुष्टिं सुवीर्यं शोभनापत्यं संवत्सरीणां तत्तत्संवत्सरसंबद्धां स्वस्तिमनिष्टनाशरूपां संपदं च ॥

अथ वेदिदाहं विधातुं प्रस्तौति—

अग्निर्वाव यम इयं यमी कुसीदं वा एतद्य-
मस्य यजमान आ दत्ते यदोषधीभिर्वेदिꣳ
स्तृणाति यदनुपोष्य प्रयायाद्ग्रीवबद्धमे-
नममुष्मिꣳल्लोके नेनीयेरन् , इति ।

यमस्य बलिना चरामीत्यस्मिन्मन्त्रेऽभिधीयमानो यमोऽग्निरेव तस्य होमाधारत्वेन नियतत्वात् । इयं वेदिरूपा भूमिर्यमी । यजमानो वेदिमदग्ध्वा भूमेर्निर्गत्य प्रयाणं कुर्यात्तदानीं यमस्य भृत्या गले रज्ज्वा बद्धमेनं यजमानं स्वर्गलोकं भृशं नयेयुः ॥

इदानीं दाहं विधत्ते—

यत्कुसीदमप्रतीत्तं मयीत्युपोषतीहैव सन्यमं
कुसीदं निरवदायानृणः सुवर्गं लोकमेति , इति ।

उपोषति दहेदित्यर्थः । इहैवास्मिन्नेव जन्मनि यज्ञप्रदेश एवावस्थितः सन्यमं प्रति विद्यमानं कुसीदमृणं निःशेषमनेन दाहेनापाकृत्यानन्तरमृणरहितः स्वर्गं प्राप्नोतीति ॥

विश्वलोपेतिमन्त्रेण होमं विधत्ते—

यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्र-
दाव्ये जुहुयादेष वा अग्निर्वैश्वानरो
यत्प्रदाव्यः स एवैनꣳ स्वदयति, इति ।

यद्यङ्गजातं संकीर्णमिव यजमानोऽनुतिष्ठेत्तस्य सांकर्यस्य परिहाराय वेदिदाहके दावाग्नौ सक्तूनञ्जलिना जुहुयात्। एष एवाग्निर्वैश्वानरः सर्वपुरुषसंबद्धः सर्वपुरुषापेक्षितव्यवहाराय पर्याप्तत्वात्। स एवाग्निः सक्तुहोमेन तुष्टो मिश्रचारिणमेनं यजमानं स्वदयति स्वादू करोति मिश्रणदोषरहितं करोतीत्यर्थः ॥

अथ वेदिदाहप्रसङ्गेन बुद्धिस्थमन्यदपि किंचिद्दाहरूपं कर्मान्तरं विधत्ते—

अह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेद्यदि दहति पुण्यसमं भवति यदि न दहति पापसमम्, इति।

एकाष्टका नाम माघकृष्णाष्टमी। सा चाह्नां विधानी प्रतिपदादितिथीनां प्रवर्तयित्री संवत्सरनामकस्य पुरुषस्य पत्नीत्वात्। अत एवान्यत्र श्रूयते— "एषा वै संवत्सरस्य पत्नी यदेकाष्टका" इति। अथवा गवामयने संवत्सरसत्रे यान्यहान्यनुष्ठेयानि कर्माणि तेषामियं प्रवर्तयित्री तदारम्भकालत्वात्। अत एवान्यत्र श्रूयते—"संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्" इति। द्विप्रस्थः शरावः। तथाविधशरावचतुष्टयपरिमितद्रव्यनिर्मितमपूपमेकाष्टकायां पक्त्वा तेनात्यन्तमुष्णेनापूपेन परेद्युः प्रातररण्ये कक्षं दहेत्। अपूपस्योपर्युल्मुकं प्रक्षिप्य तस्योपरि जीर्णतृणं प्रक्षिपेत्। तदेतत्सर्वं कक्षमध्ये कर्तव्यम्। तथा कृते सति यद्ययमपूपाग्निः कृत्स्नं कक्षं दहति तदानीं यत्कार्यमुद्दिश्येदं दहनं कृतं तत्कार्यं पुण्यसमं भवति सम्यक्पारं गच्छतीत्यर्थः। अदाहे तु पापसमं तत्कार्यं विनश्यति ॥

कक्षदहनेन यदेतदभिवृद्धिज्ञानं तदेतद्गवामयनादिप्रौढकर्मारम्भे परीक्षणीयमित्येतद्दर्शयति—

एतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुप यन्ति, इति।

एतेन कक्षदाहरूपेण निर्विघ्नसंपूर्तिज्ञानेन निश्चित्य दीर्घं संवत्सरसत्रादिकं प्रौढं कर्म पूर्वे महर्षयः प्रारभन्ते ॥

अथायं नो नभसेत्याद्युपस्थानमन्त्रत्रयं व्याख्यातुं प्रस्तौति—

यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारं

विद्वान्यजते सममुष्मिँल्लोक इष्टापूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता तान्य एवं विद्वान्यजते सममुष्मिँल्लोक इष्टापूर्तेन गच्छते, इति ।

इष्टं श्रौतं कर्म पूर्तं स्मार्तं कर्म तदुभयफलेन स्वर्गलोके संगच्छते । कोऽसौ योऽग्न्यादीनामुपद्रष्ट्रादिरूपतां ज्ञात्वा यजते तस्येयमिष्टापूर्तफलसंगतिः ॥

अथ मन्त्रान्व्याचष्टे—

अयं नो नभसा पुर इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति स त्वं नो नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति देव सꣳस्फानेत्याहासौ वा आदित्यो देवः सꣳस्फान आदित्यमेव तदाहैतन्मे गोपायेति॥, इति ॥

पुरोदेशे नभसा ज्वालया युक्तोऽग्निर्दृश्यतेऽतोऽग्निर्नभसा पुर इतिशब्दाभ्यां विवक्ष्यते । तादृशमग्निमेव प्रत्युपस्थाता मदीयमेतत्कर्मफलं गोपायेति प्रार्थितवान्भवति । नभसि संचारेण तत्पालकत्वाद्वायुरेव नभसस्पतिः । रश्मिभिः सर्वत्राभिवर्धमानत्वादादित्य एव देवः संस्फानः । अत्राऽऽयुर्दा इति मन्त्र उरुꣳ हि राजेत्यस्मादनुवाकात्पूर्वं द्रष्टव्यः । यत्कुसीदमित्यादिमन्त्रास्तु तस्मादूर्ध्वं द्रष्टव्याः ॥

अत्र विनियोगसंग्रहः—

आयुस्त्ववभृथप्रेप्सोर्होम आहवनीयके ।
यत्कु वेदिं दहेत्तत्र विश्व सक्त्वाहुतिर्भवेत् ॥
अयं त्रिभिरुपस्थानं षण्मन्त्रा अष्टमे स्थिताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ तृतीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः । )

---

एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण । मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम । नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि । अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् । देवानामेष उपनाह आसीदपां गर्भ ओषधीषु न्यक्तः । सोमस्य द्रप्समवृणीत पूषा ( १ ) बृहन्नद्रिरभवत्तदेषाम् । पिता वत्सानां पतिरघ्नियानामथो पिता महतां गर्गराणाम् । वत्सो जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य रेतः । त्वां गावोऽवृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः । वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो वि भजा वसूनि । व्यृद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्त एष ह त्वै समृद्धेन यजते यस्यैतानि क्रियन्ते ( २ ) ॥

( पूषा क्रियन्त एषोऽष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

( अथ तृतीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः। )

एतम्। युवानम्। परीति। वः। ददामि। तेन। क्रीडन्तीः। चरत। प्रियेण। मा। नः। शाप्त। जनुषा। सुभागा इति सु—भागाः। रायः। पोषेण। समिति। इषा। मदेम। नमः। महिम्ने। उत। चक्षुषे। ते। मरुताम्। पितः। तत्। अहम्। गृणामि। अन्विति। मन्यस्व। सुयजेति सु—यजा। यजाम। जुष्टम्। देवानाम्। इदम्। अस्तु। हव्यम्। देवानाम्। एषः। उपनाह इत्युप—नाहः। आसीत्। अपाम्। गर्भः। ओषधीषु। न्यक्त इति नि—अक्तः। सोमस्य। द्रप्सम्। अवृणीत। पूषा (१)। बृहन्। अद्रिः। अभवत्। तत्। एषाम्। पिता। वत्सानाम्। पतिः। अघ्नियानाम्। अथो इति। पिता। महताम्। गर्गराणाम्। वत्सः। जरायु। प्रतिधुगिति प्रति—धुक्। पीयूषः। आमिक्षा। मस्तु। घृतम्। अस्य। रेतः। त्वाम्। गावः। अवृणत। राज्याय। त्वाम्। हवन्त। मरुतः। स्वर्का इति सु—अर्काः। वर्ष्मन्। क्षत्रस्य। ककुभि। शिश्रियाणः। ततः। नः। उग्रः। वीति। भज। वसूनि। व्यृद्धेनेति वि—ऋद्धेन।

वै । एषः । पशुना । यजते । यस्य । एतानि । न । क्रियन्ते । एषः । ह । तु । वै । समृद्धेनेति सम्—ऋद्धेन । यजते । यस्य । एतानि । क्रि-यन्ते (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

(अथ तृतीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ।)

---

अष्टमे वेदिदाहोऽयं प्राधान्येन प्रपञ्चितः ।
अथ नवमे वृषालम्भाख्यं किंचित्कर्माभिधीयते ।

कल्पः—"वृषभे गोषु जीर्णे यूनः कर्णमाजपेत्पिशङ्गरूपस्तन्त्रस्तुरीपमित्येताभ्यामथैनं गोष्वपि सृजत्येतं युवानमिति" इति ।

पिशङ्गरूपस्तन्त्रस्तुरीपमित्येतौ नात्रत्यौ । एतं युवानमित्यत्रत्यः ।

तत्पाठस्तु—

एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण । मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम । , इति ।

हे गावो वो युष्मभ्यमेतं युवानं वृषभमहं परिददामि । तेन प्रियेण सह क्रीडन्तीश्चरत । नोऽस्मान्मा शाप्त । यतो यूयं जनुषा सुभागा जन्मनैव सुष्ठु भागवत्यस्ततोऽस्माकं शापो भवतीभिर्न कार्यः । किं तु तरुणं दत्तवानित्यनुग्रहः कार्यः । युष्माकं प्रसादाद्वयं धनपुष्ट्याऽन्नेन च संमदेम सम्यग्यथा भवति तथा हृष्टाः संभवेम ॥

कल्पः—"अथ जीर्णमालभते प्राजापत्यमैन्द्रं त्वाष्ट्रं वा नमो महिम्न इति उपाकरणेऽनुवर्तयते तृतीयया वपां जुहोति चतुर्थ्या हविः पञ्चम्या सौविष्टकृतम्" इति ।

एतं युवानमित्यनुवाकादिमपेक्ष्य तृतीयादिव्यवहारः ।

तत्रोपाकरणमन्त्रपाठस्तु—

( वृषालम्भाख्यकर्माभिधानम् )

नमो महिम्न उत चक्षुषे ते मरुतां पित-
स्तदहं गृणामि। अनु मन्यस्व सुयजा
यजाम जुष्टं देवानामिदमस्तु हव्यम्।, इति।

हे मरुतां पितर्देवानां जनक प्रजापते त्वदीयाय सृष्ट्यादिरूपाय महिम्ने नमः। उतापि च चक्षुषे दृष्टिरूपाय सर्वगोचरज्ञानाय त्वदीयाय नमः। तन्मदीयं विवक्षितमहं गृणामि तुभ्यं ब्रवीमि। तच्च मदुक्तं त्वमनुमन्यस्व। सुयजा शोभनेन यज्ञसाधनेन वृषभेण वयं यजाम। इदं वृषभरूपं हव्यं देवानां जुष्टं प्रियमस्तु॥

वपाहोममन्त्रपाठस्तु—

देवानामेष उपनाह आसीदपां गर्भ
ओषधीषु न्यक्तः। सोमस्य द्रप्समवृ-
णीत पूषा बृहन्नद्रिरभवत्तदेषाम्।, इति।

एष वृषभो देवानामुपनाहो बन्धनहेतुरासीत्। दाम्ना बलीवर्दा इवास्मिन्वृषभे देवाः प्रीत्यतिशयेन सक्ता इत्यर्थः। स च वृषभो हुतः सन्मेघेष्वपां संबन्धी गर्भो भूत्वा पुनरोषधीषु न्यक्तो वृष्टिरूपेणाधोमुखः पतितः। सोऽयं जलरूपो गर्भः कथं संपन्न इति तदुच्यते—पूषा सोमस्य द्रप्समवृणीताऽऽदित्यः सलिलात्मनश्चन्द्रस्य द्रप्सं रश्मिभिर्गृहीतवान्। तच्च द्रप्सरूपं जलमेषां रश्मीनां संबन्धी बृहत्प्रौढोऽद्रिः पर्वतसदृशो मेघोऽभवत्। देवानां प्रिय एष वृषभ आहुतिरूपेण वह्नौ हुत आदित्यं प्राप्य रश्मिरूपेण चन्द्रसंबन्धि जलं भूमौ वर्तमानं गृहीत्वा मेघरूपतामवलम्ब्य मेघोदरे जलरूपो गर्भो भूत्वा वृष्टिरूपेणौषधीष्वधः पतित इत्यर्थः। अनेनाग्नौ प्रास्ताऽऽहुतिः सम्यगित्यादिश्रुत्यर्थः संगृहीतो भवति॥

हृदयाद्यङ्गहोममन्त्रपाठस्तु—

पिता वत्सानां पतिरघ्नियानामथो पिता महतां
गर्गराणाम्। वत्सो जरायु प्रतिधुक्पीयूष
आमिक्षा मस्तु घृतमस्य रेतः।, इति।

ये गवां वत्सास्तेषामयं वृषभः पिताऽघ्नियानां गवां पतिर्न केवलमिदानीं-

१ क. ङ. 'पि चक्षु'। २ क. ङ. 'र्वर्द इ'।

तनानां बालानां वत्सानां पिताऽथो अपि च महतां गर्गराणां पिता। गम्भीरध्वनियुक्ता बहवो वृषभा गर्गरास्ते च शरीरवृद्ध्या महान्तः। पूर्वं ब्रह्माग्रपादानां महान्तो वृषभाः संयतास्तेषामप्ययं पिता। किं च गवामुदरे गर्भरूपो यो वत्सो यच्च जरायुरूपं गर्भाधिकरणं यच्च प्रतिधुग्दोहनपात्रस्थं दुग्धं यच्च पीयूष ऊधस्थममृतसमानं क्षीरं या चाऽऽमिक्षा रन्धनेन निष्पन्ना यच्च मस्तु नवनीतं यदपि पक्वं घृतं तत्सर्वमस्य वृषभस्य रेत एतदीयसारभूतरसपरिणामरूपम्। एवं महाभागो वृषभो देवांस्तर्पयत्वित्यभिप्रायः॥

सौविष्टकृतमन्त्रपाठस्तु—

त्वां गावोऽवृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः। वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो वि भजा वसूनि।, इति।

हे वृषभ गावः सर्वास्त्वां राज्यायावृणतास्माकमयं राजा भवत्विति वृतवत्यः। स्वर्काः सुष्ठ्वर्चनीया मरुतो देवास्त्वां हवन्त त्वामेव हविःस्वरूपमाह्वयन्ति। क्षत्रस्य क्षत्रियजातेः ककुभि ककुत्समाने प्रधानभूते वर्ष्मञ्शरीरे शिश्रियाण आश्रित्य बलरूपेणावस्थितः क्षत्रियजातौ प्रधानभूते राजविग्रहे त्वमेव बलरूपेणावस्थितोऽसि। यथा वृषभस्य सर्वेषु पशुषु बलाधिक्यमेवं राजविग्रहस्य सर्वनियामकत्वं दृश्यत इति राजविग्रहेऽयं वृषभः स्थित इत्युपचर्यते। ततो राजसदृशस्त्वमुग्रो भूत्वा नोऽस्मदर्थं शत्रूणां वसूनि तेभ्यो विभज॥

एतं युवानमित्यादिभिर्मन्त्रैः साध्यानि यानि कर्माणि तानि विधत्ते—

व्यृद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्त एष ह त्वै समृद्धेन यजते यस्यैतानि क्रियन्ते॥, इति॥

यस्य यजमानस्यैतान्यङ्गानि क्रियन्त एष यजमानः सर्वाङ्गसमृद्धेन पशुना यागं करोति॥

अत्र विनियोगसंग्रहः—

गोयूथे जीर्णवृषभस्याऽऽलम्भं यदि वाञ्छति।
तदा युवानं वृषभं तत्रैतमिति योजयेत्॥ १॥

( पशुप्रायश्चित्तविशेषाभिधानम् )

नमो जीर्णमुपाकुर्याद्देवानां तद्रूपाहुतिः ।
पिताऽङ्गहोमस्त्वां गावः स्विष्टकृत्पश्च वर्णिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

सूर्यो॑ दे॒वो दि॑वि॒षद्भ्यो॑ धा॒ता क्ष॒त्राय॑ वा॒युः प्र॒जाभ्य॑ः । बृह॒स्पति॑स्त्वा प्र॒जाप॑तये॒ ज्योति॑ष्मतीं जुहोतु । यस्या॑स्ते॒ हरि॑तो॒ गर्भोऽथो॒ योनि॑र्हिर॒ण्ययी॑ । अङ्गा॒न्यह्रु॑ता॒ यस्यै॒ तां दे॒वैः सम॑जीगमम् । आ व॑र्तन वर्त॒य नि निव॑र्तन वर्त॒येन्द्र॑ नर्दबुद । भूम्या॒श्चत॑स्रः प्र॒दिश॒स्ताभि॒रा व॑र्तया॒ पुन॑ः । वि ते॑ भिनद्मि तक॒रीं वि योनिं॒ वि ग॒वीन्यौ॑ । वि (१) मा॒तर॑ं च पु॒त्रं च॒ वि गर्भं॑ च ज॒रायु॑ च । ब॒हिस्ते॑ अस्तु बा॒लिति॑ । उ॒रु॒द्र॒प्सो वि॒श्वरू॑प॒ इन्दु॑ः पव॑मा॒नो धीर॑ आनञ्ज॒ गर्भ॑म् । एक॑पदी द्वि॒पदी॑ त्रि॒पदी॒ चतु॑ष्पदी॒ पञ्च॑पदी॒ षट्प॑दी स॒प्तप॑द्य॒ष्टाप॑दी॒ भुव॒नाऽनु॑ प्रथता॒ꣳ स्वाहा॑ । म॒ही द्यौः पृ॑थि॒वी च॑ न

इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ( २ ) ॥

( गवीन्यौ वि चतुश्चत्वारिंशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः । )

---

सूर्यः । देवः । दिविषद्भ्य इति दिविषत्—भ्यः । धाता । क्षत्राय । वायुः । प्रजाभ्य इति प्र—जाभ्यः । बृहस्पतिः । त्वा । प्रजापतय इति प्रजा—पतये । ज्योतिष्मतीम् । जुहोतु । यस्याः । ते । हरितः । गर्भः । अथो इति । योनिः । हिरण्ययी । अङ्गानि । अह्रुता । यस्यै । ताम् । देवैः । समिति । अजीगमम् । एति । वर्तन । वर्तय । नीति । निवर्तनेति नि—वर्तन । वर्तय । इन्द्र । नर्दबुद । भूम्याः । चतस्रः । प्रदिश इति प्र—दिशः । ताभिः । एति । वर्तय । पुनः । वीति । ते । भिनद्मि । तकरीम् । वीति । योनिम् । वीति । गवीन्यौ । वीति ( १ ) । मातरम् । च । पुत्रम् । च । वीति । गर्भम् । च । जरायु । च । बहिः । ते । अस्तु । बाल् । इति । उरुद्रप्स इत्युरु—द्रप्सः । विश्व-

रूप इति विश्व—रूपः। इन्दुः। पवमानः। धीरः। आनञ्ज। गर्भम्। एकपदीत्येक—पदी। द्विपदीति द्वि—पदी। त्रिपदीति त्रि—पदी। चतुष्पदीति चतुः—पदी। पञ्चपदीति पञ्च—पदी। षट्पदीति षट्—पदी। सप्तपदीति सप्त—पदी। अष्टापदीत्यष्टा—पदी। भुवना। अन्विति। प्रथताम्। स्वाहा। मही। द्यौः। पृथिवी। च। नः। इमम्। यज्ञम्। मिमिक्षताम्। पिपृताम्। नः। भरीमभिरिति भरीम—भिः (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठके दशमोऽनुवाकः॥ १०॥

---

(अथ तृतीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः।)

---

नवमे जीर्णवृषभालम्भ उक्तोऽनुवाकके।

अथ दशमे पशुप्रायश्चित्तविशेष उच्यते॥

कल्पः—"यद्यष्टापदीत्यनुबुध्येत धाता रातिः सूर्यो देव इत्याहुती हुत्वा" इति।

यद्यतिरात्रादिषु पशुविकृतिभूतायां छाग्यां संज्ञप्तायामियमष्टापदी गर्भिणीति बुध्येत तदा द्वे आहुती जुहुयात्।

पाठस्तु—

सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः। बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु।, इति।

सूर्यो देवो दिविषदामभिवृद्ध्यर्थं धाता देवः क्षत्राय तदभिवृद्ध्यर्थं वायुः
ाजाभिवृद्ध्यर्थं बृहस्पतिः प्रजापतिप्राप्त्यर्थं ज्योतिष्मतीं त्वां जुहोतु ॥

कल्पः—" अथैनामभिमन्त्रयते यस्यास्त इति " इति ।

पाठस्तु—

यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी ।
अङ्गान्यहुता यस्यै तां देवैः समजीगमम् ।, इति ।

यस्यास्ते हरितो हृतसारो हरितवर्णो वा गर्भः, योनिर्हिरण्ययी हृतसारा
ारितवर्णा वा, यस्यै यस्या अङ्गान्यहरुताऽपिहिता(कुटिलानि) तामिमां देवैः
ंगतां करोमि ॥

कल्पः—" आ वर्तन वर्तयेति प्रदक्षिणं गर्भमावृत्य " इति ।

पाठस्तु—

आ वर्तन वर्तय नि निवर्तन वर्त-
येन्द्र नर्दबुद । भूम्याश्चतस्रः प्रदि-
शस्ताभिरा वर्तया पुनः । , इति ।

वर्तन गर्भस्य प्रवर्तक हे देव गर्भमावर्तय । हे निवर्तन गर्भस्य निर्गमकृद्देव
र्भं निवर्तय निर्गतं कुरु । हे इन्द्रेश्वर नर्दबुद गर्भस्य शब्दयितर्निशाम-
हपूर्वान्वित(?)भूम्या याश्चतस्रः प्रकृष्टा दिशस्ताभिः पुनर्गर्भमावर्तय तद्व्यासं
हुर्वित्यर्थः ॥

कल्पः—" वि ते भिनद्मीति गर्भमाच्छिनत्ति " इति ।

पाठस्तु—

वि ते भिनद्मि तकरीं वि योनिं वि
गवीन्यौ । वि मातरं च पुत्रं च
वि गर्भं च जरायु च । , इति ।

हे वशे ते तव तकरीं विभिनद्मि विच्छिनद्मि योनिं च विभिनद्मि ।
गवीन्यौ वृषणस्थानीयौ योन्यन्तर्गतगतिविशेषनिमित्तभूतौ प्रवर्तकौ मातरं पुत्रं
र्भं जरायु च विभिनद्मि विश्लेषयामि ॥

कल्पः—" बहिस्ते अस्तु बालित्यन्तरा सक्थिनी गर्भं निरस्य " इति ।

पाठस्तु—

(पशुप्रायश्चित्तविशेषाभिधानम्)

बाहिस्ते अस्तु बालिति ।, इति ।

हे (ते) बाल्बालहेतुप्राणवृत्तिरूप आत्मा बहिः सर्वव्याप्यस्त्विति विभिनद्मीति पूर्वत्र हेतुः ॥

कल्पः—"उरुद्रप्सो विश्वरूप इन्दुरिति गर्भरसाय पात्रमुपोहति" इति ।

पाठस्तु—

उरुद्रप्सो विश्वरूप इन्दुः पवमानो
धीर आनञ्ज गर्भम् ।, इति ।

उरुद्रप्सो बहुसारावयवो विश्वरूपो नानारूप इन्दुः शुक्रः पवमानः शुद्धरूपो धीरः स्थिरः । ईदृशो यः प्रजापशुरूपोऽवयवसंघात आनञ्ज गच्छतु गर्भं जननान्तरमित्यर्थः ॥

कल्पः—"एकपदी द्विपदीति पुरस्तात्स्विष्टकृतो जुहोति" इति ।

आज्यमित्यर्थः ।

पाठस्तु—

एकपदी द्विपदी त्रिपदी चतुष्पदी
पञ्चपदी षट्पदी सप्तपद्यष्टापदी
भुवनाऽनु प्रथतां स्वाहा ।, इति ।

एषा वशैकपद्यादिरूपा भुवनानि भूतजातान्यनुक्रमेण प्रथताम् ॥

कल्पः—"गर्भं पुरोडाशं चोत्तरेण गार्हपत्यस्य शामित्रस्य वा शीते भस्मन्युपोष्य[1] मही द्यौरिति शीतेन भस्मनाऽभिसमू(मु)ह्य" इति ।

पाठस्तु—

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥, इति ॥

महती द्यौः पृथिवी चेमं नो यज्ञं मिमिक्षतामासिञ्चतां नोऽस्मांश्च भरीमभिर्भरणप्रकारैः पिपृतां पालयताम् ॥

अत्र विनियोगसंग्रहः—

सूर्यो हुत्वाऽऽज्यं गर्भिण्या यस्या इत्यनुमन्त्रणम् ।
आवर्त गर्भमावृत्य वि ते गर्भं छिनत्ति हि ॥ १ ॥

---

१ क. घ. ङ. °पोष्य म° ।

( याज्यापुरोनुवाक्याभिधानम् )

बहिर्गर्भं निरस्योर्वोरन्तरा वी(रो वि)ति भाजनम् ।
एक होमो मही भस्माच्छादनं गर्भडाशयोः ॥
अनुवाके तु दशमे मन्त्रा अष्टावुदीरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती ।
उक्थं मदश्च शस्यते । अयं वां परि षिच्यते
सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये ।
अस्मे इन्द्राबृहस्पती रयिं धत्तꣳ शतग्विनम् ।
अश्वावन्तꣳ सहस्रिणम् । बृहस्पतिर्नः परि
पातु पश्चादुतोत्तरस्मादधरादघायोः । इन्द्रः
पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः
कृणोतु । वि ते विष्वग्वातजूतासो अग्ने भा-
मासः ( १ ) शुचे शुचयश्चरन्ति । तुविम्रक्षा-
सो दिव्या नवग्वा वना वनन्ति धृषता रु-
जन्तः । त्वामग्ने मानुषीरीडते विशो होत्राविदं
विविचिꣳ रत्नधातमम् । गुहा सन्तꣳ सुभग
विश्वदर्शतं तुविष्मणसꣳ सुयजं घृतश्रियम् ।
धाता ददातु नो रयिमीशानो जगतस्पतिः ।

स नः॑ पूर्णेन॑ वावनत्। धाता प्रजाया॑ उत राय ई॑शे धातेदं विश्वं॒ भुव॑नं जजान। धाता पुत्रं यज॑मानाय दाता॑ (२) तस्मा॑ उ ह॒व्यं घृतव॑द्विधेम। धाता द॑दातु नो र॒यिं प्राची॑ं जीवातुमक्षि॑ताम्। वयं देवस्य॑ धीमहि सुमतिꣳ स॒त्यरा॑धसः। धाता द॑दातु दाशुषे वसू॑नि प्रजाका॑माय मीढुषे॑ दुरोणे। तस्मै॑ देवा अमृताः सं व्य॑यन्ता॑ विश्वे॑ देवासो अदि॑तिः स॒जोषाः॑। अनु॑ नोऽद्यानु॑मतिर्यज्ञं दे॒वेषु॑ मन्यताम्। अ॒ग्निश्च॑ हव्यवाह॑नो भव॑तां दाशुषे मयः॑। अन्विद॑नुमते त्वम् (३) मन्या॑से शं च॑ नः कृधि। क्रत्वे॒ दक्षा॑य नो हिनु प्र ण आयू॑ꣳषि तारिषः। अनु॑ मन्यतामनुमन्य॑माना प्रजाव॑न्तꣳ र॒यिमक्षी॑यमाणम्। तस्यै॑ वयꣳ हेड॑सि माऽपि॑ भूम सा नो॑ देवी सुहवा शर्म॑ यच्छतु। यस्या॑मिदं प्रदिशि यद्विरोचतेऽनु॑मतिं प्रति॑ भूषन्त्यायवः॑। यस्या॑ उपस्थ॑ उर्व॑न्तरिक्षꣳ सा नो॑ देवी सुहवा शर्म॑ यच्छतु (४) राकामहꣳ सुहवा॑ꣳ सुष्टुती हु॑वे शृणोतु॑ नः सुभगा बोध॑तु त्मना॑। सीव्य॑त्वपः॑ सूच्याऽच्छि॑द्यमा-

नया ददातु वीरꣳ शतदायमुक्थ्यम् । यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳ सुभगे रराणा । सिनीवालि या सुपाणिः । कुहूमहꣳ सुभगां विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यास्ते देवि हविषा विधेम । कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्चिकेतु । सं दाशुषे किरतु भूरि वामꣳ रायस्पोषं चिकितुषे दधातु ( ५ ) ॥

( भामासो दाता त्वमन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु श्रवणं चतुर्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

अग्ने तेजस्विन्वायुर्वसव एतद्वा अपां नामधेयं वायुरसि देवा वै यद्यज्ञेन प्रजापतिर्देवासुरानायुर्दा एतं युवानꣳ सूर्यो देव इदं वामेकादश ॥ ११ ॥

अग्ने तेजस्विन्वायुरसि छन्दसां वीर्यं मातरं च षट्त्रिꣳशत् ॥ ३६ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

---

( याज्यापुरोनुवाक्याभिधानम् )

( अथ तृतीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इतीन्द्रा—बृहस्पती । उक्थम् । मदः । च । शस्यते । अयम् । वाम् । परीति । सिच्यते । सोमः । इन्द्राबृहस्पती इतीन्द्रा—बृहस्पती । चारुः । मदाय । पीतये । अस्मे इति । इन्द्राबृहस्पती इतीन्द्रा—बृहस्पती । रयिम् । धत्तम् । शतग्विनमिति शत—ग्विनम् । अश्वावन्तमित्यश्व—वन्तम् । सहस्रिणम् । बृहस्पतिः । नः । परीति । पातु । पश्चात् । उत । उत्तरस्मादित्युत्—तरस्मात् । अधरात् । अघायोरित्यघ—योः । इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिभ्य इति सखि—भ्यः । वरिवः । कृणोतु । वीति । ते । विष्वक् । वातजूतास इति वात—जूतासः । अग्ने । भामासः ( १ ) । शुचे । शुचयः । चरन्ति । तुविम्रक्षास इति तुवि—म्रक्षासः । दिव्याः । नवग्वाः । वना । वनन्ति । धृषता । रुजन्तः । त्वाम् । अग्ने । मानुषीः । ईडते । विशः । होत्राविदमिति होत्रा—विदम् । विविचिमिति वि—विचिम् । रत्नधातममिति रत्न—धातमम् । गुहा ।

सन्तम् । सुभगेति सु—भग । विश्वदर्शतमिति विश्व—दर्शतम् । तुविष्मणसम् । सुयजमिति सु—यजम् । घृतश्रियमिति घृत—श्रियम् । धाता । ददातु । नः । रयिम् । ईशानः । जगतः । पतिः । सः । नः । पूर्णेन । वावनत् । धाता । प्रजाया इति प्र—जायाः । उत । रायः । ईशे । धाता । इदम् । विश्वम् । भुवनम् । जजान । धाता । पुत्रम् । यजमानाय । दाता ( २ ) । तस्मै । उ । हव्यम् । घृतवदिति घृत—वत् । विधेम । धाता । ददातु । नः । रयिम् । प्राचीम् । जीवातुम् । अक्षिताम् । वयम् । देवस्य । धीमहि । सुमतिमिति सु—मतिम् । सत्यराधस इति सत्य—राधसः । धाता । ददातु । दाशुषे । वसूनि । प्रजाकामायेति प्रजा—कामाय । मीढुषे । दुरोण इति दुः—ओने । तस्मै । देवाः । अमृताः । समिति । व्ययन्ताम् । विश्वे । देवासः । अदितिः । सजोषा इति स—जोषाः । अन्विति । नः । अद्य । अनुमतिरित्यनु—मतिः । यज्ञम् । देवेषु । मन्यताम् । अग्निः । च । हव्यवाहन इति हव्य—वाहनः । भवताम् । दाशुषे । मयः । अन्विति । इत् । अनुमत इत्यनु—मते । त्वम् ( ३ ) । मन्या-

से। शम्। च। नः। कृधि। क्रत्वे। दक्षाय। नः। हिनु। प्रेति। नः। आयूंषि। तारिषः। अन्विति। मन्यताम्। अनुमन्यमानेत्यनु—मन्यमाना। प्रजावन्तमिति प्र-जा—वन्तम्। रयिम्। अक्षीयमाणम्। तस्यै। वयम्। हेडसि। मा। अपीति। भूम। सा। नः। देवी। सुहवेति सु—हवा। शर्म। यच्छतु। यस्याम्। इदम्। प्रदिशीति प्र—दिशि। यत्। विरोचत इति वि—रोचते। अनुमतिमित्यनु—मतिम्। प्रतीति। भूषन्ति। आयवः। यस्याः। उपस्थ इत्युप—स्थः। उरु। अन्तरिक्षम्। सा। नः। देवी। सुहवेति सु—हवा। शर्म। यच्छतु (४)। राकाम्। अहम्। सुहवामिति सु—हवाम्। सुष्टुतीति सु—स्तुती। हुवे। शृणोतु। नः। सुभगेति सु—भगा। बोधतु। त्मना। सीव्यतु। अपः। सूच्या। अच्छिद्यमानया। ददातु। वीरम्। शतदायमिति शत—दायम्। उक्थ्यम्। याः। ते। राके। सुमतय इति सु—मतयः। सुपेशस इति सु—पेशसः। याभिः। ददासि। दाशुषे। वसूनि। ताभिः। नः। अद्य। सुमना इति सु—मनाः। उपागहीति-

त्वुप—आगहि । सहस्रपोषमिति सहस्र—पोषम् । सुभग इति सु—भगे । रराणा । सिनीवालि । या । सुपाणिरिति सु—पाणिः । कुहूम् । अहम् । सु-भगामिति सु—भगाम् । विह्नापसमिति विह्नन—अपसम् । अस्मिन् । यज्ञे । सुहवामिति सु—हवाम् । जोहवीमि । सा । नः । ददातु । श्रवणम् । पितृ-णाम् । तस्याः । ते । देवि । हविषा । विधेम । कुहूः । देवानाम् । अमृतस्य । पत्नी । हव्या । नः । अस्य । हविषः । चिकेतु । समिति । दाशुषे । कि-रतु । भूरि । वामम् । रायः । पोषम् । चिकितुषे । दधातु ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके तृतीयः प्रपाठकः ॥ ३ ॥

---

(*अथ तृतीयकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः । )

---

दशमे पाशुकं गर्भप्रायश्चित्तमुदीरितम् ।

अथैकादशे याज्या[पुरोनुवाक्या]स्तत्रैन्द्राबार्हस्पत्यपुरोनुवाक्या —इन्द्रं वामास्य इति यं कामयेत राजन्यमनपोध्यो जायेतेति चरौ ।

( याज्यापुरोनुवाक्याभिधानम् )

पाठस्तु—

इदं वामास्ये हविः प्रियमिन्द्राबृह-
स्पती। उक्थं मदश्च शस्यते।, इति।

हे इन्द्राबृहस्पती इदं हविर्वामास्ये प्रियमस्तु हूयते वा। उक्थं शस्त्रं मदो हर्षहेतुः प्रतिगरश्च शस्यते युवामे(वां प्र)तीत्यर्थः॥

तत्रैव याज्या—

अयं वां परि षिच्यते सोम इन्द्राबृ-
हस्पती। चारुर्मदाय पीतये।, इति।

अयं हवीरूपः सोमो वां परिषिच्यते युवाभ्यामर्थे परित्यज्यते। हे इन्द्राबृहस्पती चारुरयं वां युवयोः पीतये मदाय च परिषिच्यते॥

तत्रैव विकल्पिता पुरोनुवाक्या—

अस्मे इन्द्राबृहस्पती रयिं धत्तꣳ शतग्वि-
नम्। अश्वावन्तꣳ सहस्रिणम्।, इति।

हे इन्द्राबृहस्पती युवामस्मभ्यं शतग्विनमश्वावन्तं सहस्रिणं च रयिं धत्तम्॥

तत्रैव याज्या—

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मा-
दधरादघायोः। इन्द्रः पुरस्तादुत मध्यतो
नः सखा सखिभ्यो वरिवः कृणोतु।, इति।

बृहस्पतिर्नोऽस्मान्पश्चादुतापि चोत्तरस्मादधराच्चाघायोर्हिंसकात्पातु। इन्द्रश्च पुरस्तादुत मध्यतो नः पातु। सखा सखिभ्योऽस्मभ्यं सखा बृहस्पतिरिन्द्रश्च वरिवः सुखं कृणोतु॥

यस्याऽऽहिताग्नेरन्यैरग्निभिरग्नयः सꣳसृज्यन्त इत्यत्र विविचीष्टौ पुरोनुवाक्या—

वि ते विष्वग्वातजूतासो अग्ने भामासः
शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या
नवग्वा वना वनन्ति धृषता रुजन्तः।, इति।

हेऽग्ने शुचे ते शुचयो दीप्तयो विष्वक्सर्वतो विचरन्ति। कीदृशो वातजू-

१ ख. घ. ङ. च. 'दृश्यो वा'।

तासो वायुना प्रेरिता भामासोऽन्याग्निमिश्रणेन क्रोधनशीलास्तुविम्रक्षासो बहूनां शोधका दिव्या द्युलोकस्थानार्हा नवग्वा नूतनगतयो नित्याभिनवा इत्यर्थः । धृषता रुजन्तो धर्षणेन बलात्कारेण वैगुण्यभङ्गं कुर्वन्तः । तथाविधा दीप्तिविशेषा वनाऽस्मदीयानि वननीयानि हवींषि वनान्ति संभजन्ताम् ॥

तत्रैव याज्यामाह—

त्वामग्ने मानुषीरीडते विशो होत्राविदं विवि-
चिꣳ रत्नधातमम् । गुहा सन्तꣳ सुभग विश्व-
दर्शतं तुविष्मणसꣳ सुयजं घृतश्रियम् ।, इति ।

हे सुभग सौभाग्ययुक्ताग्ने मानुषीर्विशो मनुष्यरूपाः प्रजास्त्वामीडते स्तुवन्ति । कीदृशं त्वां होत्राविदं होमविशेषाभिज्ञं विविचिं मिश्रितानामग्नीनां विवेचकं रत्नधातमं रत्नमण्यादीनां धनानामतिशयेन संपादकं गुहा गोप्येषु मन्त्रेषु स्थानेषु वा सन्तं वर्तमानं विश्वस्य प्रदर्शयितारं तुविष्मणसं सुप्रवृद्धमनस्कं सुयजं सुष्ठु यष्टुं शक्यं घृतश्रियं घृतसेविनम् ॥

अथ देविकाख्यानां हविषां याज्यानुवाक्या उच्यन्ते । तानि हवींषि देविका निर्वपेत्प्रजाकाम इत्यादौ विहितानि । तेषां स्वरूपं तत्रैवाऽऽम्नातम्—" धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुम् " इति ।

तत्र प्रथमे हविषि पुरोनुवाक्यामाह—

धाता ददातु नो रयिमीशानो जगत-
स्पतिः । स नः पूर्णेन वावनत् ।, इति ।

धाता विश्वस्य धारयिता जगतस्पतिर्जगतः पालक ईशानः परमेश्वरो नोऽस्मभ्यं रयिं धनं ददातु । स परमेश्वरो नोऽस्मान्पूर्णेन समृद्धेन धनेन वावनत्संभजतां संयोजयत्वित्यर्थः ॥

तत्रैव याज्यामाह—

धाता प्रजाया उत राय ईशे धातेदं विश्वं
भुवनं जजान । धाता पुत्रं यजमानाय
दाता तस्मा उ हव्यं घृतवद्विधेम ।, इति ।

अयं धाता प्रजायाः पुत्रादेरीश ईष्टे स्वामी भवति । उतापि च राय ईशे धनस्यापि स्वामी भवति । धाता सर्वमिदं भुवनं प्राणिजातं जजानो

( याज्यापुरोनुवाक्याभिधानम् )

त्पादितवान्। स च धाता यजमानाय पुत्रं दास्यति। तस्मा उ तथाविधायैव देवाय हव्यमिदं घृतवद्विधेम घृतयुक्तं करवाम ॥

अथ तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह—

धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम्।
वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः।, इति।

स च धाता जीवातुमक्षितां जीवनाय पर्याप्तामक्षीणां प्राचीं प्रकर्षेणास्मास्वनुकूलां रयिं नोऽस्मभ्यं ददातु। सत्यराधसः सत्येन यज्ञेनाऽऽराधका वयं देवस्य सुमतिमनुग्रहयुक्तं चित्तं धीमहि ध्यायेम प्रार्थयाम इत्यर्थः ॥

अथ तत्रैव विकल्पितामन्यां याज्यामाह—

धाता ददातु दाशुषे वसूनि प्रजाकामाय
मीढुषे दुरोणे। तस्मै देवा अमृताः सं
व्ययन्तां विश्वे देवासो अदितिः सजोषाः।, इति।

स धाता दाशुषे हविर्दत्तवते यजमानाय वसूनि ददातु। कीदृशाय प्रजाकामाय दुरोणे स्वगृहे मीढुषे देवानामाज्येन सेचितवते। अमृता मरणरहिता विश्वे देवासः सर्वे देवाः सजोषाः समानप्रीतिरदितिर्देवाश्च तस्मै तथाविधयजमानार्थं संव्ययन्तां तद्गृहे संवृत्यावतिष्ठन्ताम् ॥

अथ द्वितीयहविषः पुरोनुवाक्यामाह—

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम्। अग्निश्च
हव्यवाहनो भवतां दाशुषे मयः।, इति।

अद्यास्मिन्नियमनुमतिशब्दाभिधेया देवता नोऽस्माकमिमं यज्ञं देवेष्वनुमन्यतां देवानामग्रे प्रशंसत्वित्यर्थः। हव्यवाहनोऽग्निश्च दाशुषे हविर्दत्तवते यजमानाय मयो भवतां सुखं भावयतु ॥

तत्रैव याज्यामाह—

अन्विदनुमते त्वं मन्यासै शं च नः कृधि। क्रत्वे
दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः।, इति।

हेऽनुमते त्वमन्विदन्वेव मन्यासै सर्वथेदमनुमन्यस्वेत्यर्थः। किं च नोऽस्मभ्यं शं कृधि सुखं कुरु। किंच नोऽस्माकं दक्षाय क्रत्वे दक्षक्रतौ समृद्ध-

---

१ ख. घ. ङ. च. ऐवित'। २ क. घ. ङ. च. 'तिश्च देवास्तस्मै।

यागे हि नु प्रीतियुक्ता भव । किं च नोऽस्माकमायूंषि चिरकालजीवनानि प्रतारिषः प्रकर्षेण संपादय ॥

अथ तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह—

अनु मन्यतामनुमन्यमाना प्रजावन्तꣳ रयि-
मक्षीयमाणम् । तस्यै वयꣳ हेडसि माऽपि
भूम सा नो देवी सुहवा शर्म यच्छतु ।, इति ।

अनुमन्यमाना सेयमनुमतिर्देवी प्रजावन्तं पुत्रादियुक्तमक्षीयमाणं क्षयरहितम् । एवंभूतं रयिं धनं(न)पोषमनुमन्यताम् । वयं तस्यै तस्या अनुमतेर्देव्या हेडसि क्रोधे स्थिता मा भूम । अपिशब्दादौदासीन्येऽपि मा भूम किंत्वनुग्रह एव भूयास्म । सा च देवी सुहवा सुष्टवाह्वातुं शक्या सती नोऽस्मभ्यं शर्म यच्छतु सुखं ददातु ॥

अथ तत्रैव विकल्पितामन्यां याज्यामाह—

यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रति
भूषन्त्यायवः । यस्या उपस्थ उर्वन्तरिक्षꣳ
सा नो देवी सुहवा शर्म यच्छतु ।, इति ।

यज्जगद्विरोचते विविधं भासते तदिदं जगद्यस्यामनुमतिदेव्यां वर्तते । कीदृश्यां प्रदिशि प्रकर्षेण दिशत्याज्ञापयतीति प्रदिक्तस्याम् । अनुमत्याज्ञाधीनमशेषं जगदित्यर्थः । तामिमामनुमतिं प्रति आयवो गन्तारो यजमाना भूषन्ति हविर्भिरलं कुर्वन्ति । किंच यस्या उपस्थः शरीरैकदेशस्तत्स्थानीयमुर्वन्तरिक्षं महदिदमाकाशं विश्वव्यापित्वेन तस्या अवस्थितत्वात् । सा न इत्यादि पूर्ववत् ॥

अथ तृतीयस्य हविषः पुरोनुवाक्यामाह—

राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु नः
सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याऽच्छि-
द्यमानया ददातु वीरꣳ शतदायमुक्थ्यम् ।, इति ।

सुहवां सुखेनाऽऽह्वातुं शक्यां राकां देवीमहं सुष्टुती शोभनया स्तुत्या हुव आह्वयामि । सुभगा सौभाग्ययुक्ता सा देवी नोऽस्माकमाह्वानं शृणोतु । श्रुत्वा च बुध्यतामस्मदभिप्रेतमात्मनैव । किंचाच्छिद्यमानयाऽविच्छिन्नया

सूचीसदृश्याऽनुग्रहबुद्ध्याऽपः कर्म सीव्यतु निबिडं करोतु निर्दोषं करोत्वित्यर्थः। ततः शतदायं बहुधनमुक्थ्यं स्तोत्रशस्त्रादिसहितं वीरं पुत्रं ददातु ॥

तत्रैव याज्यामाह—

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि
दाशुषे वसूनि । ताभिर्नो अद्य सुमना
उपागहि सहस्रपोषꣳ सुभगे रराणा ।, इति ।

हे राके तव याः सुमतयः सुपेशसः शोभनक्रियायुक्ताः सन्ति । किं च याभिः सुमतिभिर्दाशुषे यजमानाय वसूनि ददासि, अद्या(द्य)स्मिन्यज्ञे सौमनस्ययुक्ता सती ताभिः 'सुमतिभिरनुग्रहरूपाभिर्नोऽस्मानुपागह्यनुगृहाण । सुभग इति देव्याः संबोधनम् । किं कुर्वती देवी, सहस्रपोषं रराणा सहस्रसंख्यायुक्तां पुष्टिं ददती ॥

अथ चतुर्थे हविषि याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति—

सिनीवालि या सुपाणिः ।, इति ।

सिनीवालि पृथुष्टुक इति पुरोनुवाक्या । या सुपाणिः स्वङ्गुरिरिति याज्या । एतच्चोभयमग्निना रयिमश्नवदित्यनुवाके व्याख्यातम् ॥

अथ पञ्चमस्य हविषः पुरोनुवाक्यामाह—

कुहूमहꣳ सुभगां विद्मनापसमस्मिन्यज्ञे
सुहवां जोहवीमि । सा नो ददातु श्रवणं
पितॄणां तस्यास्ते देवि हविषा विधेम ।, इति ।

कुहूशब्दाभिधेयां देवतामहमस्मिन्यज्ञे जोहवीमि भृशमाह्वयामि । कीदृशीं, सुभगां सौभाग्ययुक्तां विद्मनापसं विदितकर्माणं सुहवां सुखेनाऽऽह्वातुं शक्याम् । सा कुहूर्देवी नः पितॄणामस्मदीयानां पूर्वेषां श्रवणं श्रोतुं योग्यं यशो ददातु । हे देवि तस्यास्ते तथाविधायास्तव हविषा विधेम परिचर्यां करवाम ॥

तत्रैव याज्यामाह—

कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य
हविषश्चिकेतु । सं दाशुषे किरतु भूरि
वामꣳ रायस्पोषं चिकितुषे दधातु ॥, इति ॥

इयं कुहूर्देवी नोऽस्मदीयस्यास्य हविषश्चिकेतु सारं जानातु । कीदृशी कुहूर्देवानां संबन्धि यदमृतं दर्शपूर्णमासादिहवीरूपं तस्य पत्नी पालयित्री । हव्याऽऽह्वानपृच्छार्हा । तादृशी देवी दाशुषे यजमानाय भूरि भूयिष्ठं वामं वननीयं पारलौकिकं फलं संकिरतु सम्यग्ददातु । किं च चिकितुषे त्वदीयमहिमानं ज्ञातवते यजमानाय रायस्पोषं दधातु धनपुष्टिं संपादयतु ॥

अत्र विनियोगसंग्रहः—

भवेदिदं वामित्यैन्द्राबार्हस्पत्ये चतुष्टयम् ।
वि ते विविचिमग्याग धातेत्येतच्चतुष्टयम् ॥ १ ॥
देविकास्वाद्ययागे स्यादन्वित्यनुमते चरौ ।
चतुष्टयं स्याद्राकां तु राकादेव्याश्चरौ तथा ॥
सिनी या सु सिनीवाल्याः कुहूं कुह्वाश्च विंशतिः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयसंहिताभाष्ये तृतीयकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

( वशागर्भदर्शननिमित्तपूर्वोक्तमन्त्रव्याख्यानम् )

( अथ तृतीयाष्टके चतुर्थः प्रपाठकः । )

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते सूर्यो देवो दिविषद्भ्य इत्याह बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्धमपि वपति रक्षांसि वा एतत्पशुं सचन्ते यदेकदेवत्य आलब्धो भूयान्भवति यस्यास्ते हरितो गर्भ इत्याह देवत्रैवैनां गमयति रक्षसामपहत्या आ वर्तन वर्तयेत्याह ( १ ) ब्रह्मणैवैनमा वर्तयति वि ते भिनद्मि तकरीमित्याह यथायजुरेवैतदुरुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा वै पशव इन्दुः प्रजयैवैनं पशुभिः समर्धयति दिवं वै यज्ञस्य व्यृद्धं गच्छति पृथिवीमतिरिक्तं तद्यन्न शमयेदार्तिमार्छेद्यजमानो मही द्यौः पृथिवी च न इति ( २ ) आह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धं चातिरिक्तं च शमयति नाऽऽर्तिमार्छति यजमानो भस्मनाऽभि समूहति स्वगाकृत्या अथो अनयोर्वा एष गर्भोऽनयोरेवैनं दधाति यदवद्येदति तद्रे:

चयेद्यन्नावद्येत्पशोरालब्धस्य नावं द्येत्पुरस्ता-
न्नाभ्यां अन्यदवद्येदुपरिष्टादन्यत्पुरस्ताद्वै नाभ्यै
( ३ ) प्राण उपरिष्टादपानो यावानेव पशुस्त-
स्यावं द्यति विष्णवे शिपिविष्टाय जुहोति यद्वै
यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्त-
द्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधा-
त्यतिरिक्तस्य शान्त्यां अष्टाप्रूड्ढिरण्यं दक्षिणाऽ-
ष्टापदी ह्येषाऽऽत्मा नवमः पशोराप्त्यां अन्तर-
कोश उष्णीषेणाऽऽविष्टितं भवत्येवमिव हि
पशुरुल्बमिव चर्मेव माꣳसमिवास्थीव यावा-
नेव पशुस्तमाप्त्वाऽवं रुन्धे यस्यैषा यज्ञे
प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान्भवति (४) ॥

( वर्तयेत्याह न इति वै नाभ्या उल्बमिवैकविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ तृतीयाष्टके चतुर्थः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

---

हरिः ॐ ।

वीतिं । वै । एतस्यं । यज्ञः । ऋध्यते । यस्यं ।
हविः । अतिरिच्यंत इत्यंति—रिच्यंते । सूर्यः । देवः ।

दिविषद्भ्य इति दिविषत्—भ्यः । इति । आह ।
बृहस्पतिना । च । एव । अस्य । प्रजापतिनेति
प्रजा—पतिना । च । यज्ञस्य । व्यृद्धमिति वि—ऋ-
द्धम् । अपीति । वपति । रक्षांसि । वै । एतत् ।
पशुम् । सचन्ते । यत् । एकदेवत्य इत्येक—देवत्यः ।
आलब्ध इत्या—लब्धः । भूयान् । भवति । यस्याः ।
ते । हरितः । गर्भः । इति । आह । देवत्रेति देव—
त्रा । एव । एनाम् । गमयति । रक्षसाम् । अपहत्या
इत्यप—हत्यै । एति । वर्तेन । वर्तय । इति । आह
( १२ ) । ब्रह्मणा । एव । एनम् । एति । वर्तयति ।
वीति । ते । भिनद्मि । तकरीम् । इति । आह ।
यथायजुरिति यथा—यजुः । एव । एतत् । उरुद्रप्स
इत्युरु—द्रप्सः । विश्वरूप इति विश्व—रूपः । इन्दुः ।
इति । आह । प्रजेति प्र—जा । वै । पशवः । इन्दुः ।
प्रजयेति प्र—जया । एव । एनम् । पशुभिरिति प-
शु—भिः । समिति । अर्धयति । दिवम् । वै । य-
ज्ञस्य । व्यृद्धमिति वि—ऋद्धम् । गच्छति । पृथि-
वीम् । अतिरिक्तमित्यति—रिक्तम् । तत् । यत् ।
न । शमयेत् । आर्तिम् । एति । ऋच्छेत् । यज-
मानः । मही । द्यौः । पृथिवी । च । नः । इति

( २ )। आह । द्यावापृथिवीभ्यामिति द्यावा—पृथिवीभ्याम् । एव । यज्ञस्य । व्यृद्धमिति वि—ऋद्धम् । च । अतिरिक्तमित्यति—रिक्तम् । च । शमयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । भस्मना । अभि । समिति । ऊहति । स्वगाकृत्या इति स्वगा—कृत्यै । अथो इति । अनयोः । वै । एषः । गर्भः । अनयोः । एव । एनम् । दधाति । यत् । अवद्येदित्यव—द्येत् । अतीति । तत् । रेचयेत् । यत् । न । अवद्येदित्यव—द्येत् । पशोः । आलब्धस्येत्या—लब्धस्य । न । अवेति । द्येत् । पुरस्तात् । नाभ्याः । अन्यत् । अवद्येदित्यव—द्येत् । उपरिष्टात् । अन्यत् । पुरस्तात् । वै । नाभ्यै ( ३ )। प्राण इति प्र—अनः । उपरिष्टात् । अपान इत्यप—अनः । यावान् । एव । पशुः । तस्य । अवेति । द्यति । विष्णवे । शिपिविष्टायेति शिपि—विष्टाय । जुहोति । यत् । वै । यज्ञस्य । अतिरिच्यत इत्यति—रिच्यते । यः । पशोः । भूमा । या । पुष्टिः । तत् । विष्णुः । शिपिविष्ट इति शिपि—विष्टः । अतिरिक्त इत्यति—रिक्ते । एव । अतिरिक्तमित्यति—रिक्तम् । दधाति । अतिरिक्तस्येत्यति—रिक्तस्य ।

शान्त्यै। अष्टाप्रूडित्यष्टा—प्रूट्। हिरण्यम्। दक्षिणा। अष्टापदीत्यष्टा—पदी। हि। एषा। आत्मा। नवमः। पशोः। आप्त्यै। अन्तरकोश इत्यन्तर—कोशे। उष्णीषेण। आविष्टितमित्या—विष्टितम्। भवति। एवम्। इव। हि। पशुः। उल्बम्। इव। चर्म। इव। मांसम्। इव। अस्थि। इव। यावान्। एव। पशुः। तम्। आप्त्वा। अवेति। रुन्धे। यस्य। एषा। यज्ञे। प्रायश्चित्तिः। क्रियते। इष्ट्वा। वसीयान्। भवति (४) ॥

इति [१]कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

(अथ तृतीयकाण्डे चतुर्थः प्रपाठकः।)

---

(तत्र प्रथमोऽनुवाकः।)

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके तृतीयेऽपि सोमशेषः कियानपि।
उक्तः कर्मान्तरं किंचिदपि तत्रोपवर्णितम् ॥ २ ॥
प्रपाठके चतुर्थे तु किंचिन्नैमित्तिकं तथा।
पश्विष्टिर्दर्विहोमाश्च वाच्याः काम्याश्च केचन ॥ ३ ॥

तत्राऽऽद्येनानुवाकेन वशागर्भस्य दर्शननिमित्ताः पूर्वोक्ता मन्त्रा व्याख्यायन्ते।

तत्र प्रथममन्त्रगतयोर्बृहस्पतिप्रजापतिशब्दयोस्तात्पर्यं दर्शयति—

---

१ ख. च. °पि होम°।

वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते सूर्यो देवो दिविषद्भ्य इत्याह बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्धमपि वपति, इति ।

यस्य यजमानस्य हविरतिरिच्यतेऽधिकं भवति । वशायाः शरीरमेकं हविष्ट्वेन संकल्पितं तत्र गर्भे सति वपाद्याधिक्यं हविरतिरेक इत्युच्यते । ईदृशातिरेकवत एतस्य यजमानस्य यज्ञो व्यृध्यत एव विगुण एव भवति । तत्र सूर्यो देव इतिमन्त्रेण होमे सत्येतन्मन्त्रोक्ताभ्यां बृहस्पतिप्रजापतिभ्यां यज्ञस्य व्यृद्धमपि वपति वैगुण्यं समादधाति ॥

अनुमन्त्रणमन्त्रे देवैः समजीगममित्यस्यांशस्य तात्पर्यं दर्शयति—

रक्षाꣳसि वा एतत्पशुꣳ सचन्ते यदेकदेवत्य आलब्धो भूयान्भवति यस्यास्ते हरितो गर्भ इत्याह देवत्रैवैनां गमयति रक्षसामपहत्यै, इति ।

एकदेवत्य आलब्ध एकां देवतामुद्दिश्योपाकृतः पशुर्गर्भधारणेन भूयान्भवतीति यदेतेन वैकल्येन रक्षांसि समवयन्ति तत्परिहाराय यस्यास्त इत्यभिमन्त्रणेन कृतेन तां देवैः समजीगममित्युक्तत्वाद्देवेष्वेवैनां वशां प्रापितवान्भवति । ततो रक्षांस्यपहन्यन्ते ॥

लौकिकस्य गर्भपर्यावर्तनस्य व्यावृत्तये मन्त्रेणैव तत्पर्यावर्तनमित्येतद्दर्शयति—

आ वर्तन वर्तयेत्याह ब्रह्मणैवैनमा वर्तयति, इति ॥

उल्बच्छेदनमन्त्रस्य स्पष्टार्थतां दर्शयति—

वि ते भिनद्मि तकरीमित्याह यथायजुरेवैतत्[1], इति ॥

रसधारणार्थपात्रोपोहनमन्त्रगतस्येन्दुशब्दस्य तात्पर्यं दर्शयति—

उरुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा वै पशव इन्दुः प्रजयैवैनं पशुभिः समर्धयति, इति ।

---

१ ख. 'ति । द्रप्सधा' ।

( वशागर्भदर्शननिमित्तपूर्वोक्तमन्त्रव्याख्यानम् )

इदि परमैश्वर्य इत्यस्माद्धातोरुत्पन्न इन्दुशब्दः । प्रजानां पशूनां चैश्वर्यरूपत्वादिन्दुत्वम् । अत इन्दुशब्दप्रयोगेण प्रजादिभिरेनं रसं समृद्धं करोति ॥

तस्याभिसमूहनमन्त्रे द्युशब्दस्य पृथिवीशब्दस्य च तात्पर्यं दर्शयति—

दिवं वै यज्ञस्य व्यृद्धं गच्छति पृथिवीमतिरिक्तं तद्यन्न शमयेदार्तिमार्छेद्यजमानो मही द्यौः पृथिवी च न इत्याह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धं चातिरिक्तं च शमयति नाऽऽर्तिमार्छति यजमानः, इति ।

यज्ञस्य संबन्धि यदङ्गं व्यृद्धं न्यूनं तद्दिवमेव गच्छति । यदतिरिक्तं तत्पृथिवीं गच्छति । तथा सति तद्यद्युभयं न शमयेत्तदा यजमान आर्तिं प्राप्नुयात् । अतो मन्त्रे द्यौः पृथिवीतिप्रयोगात्ताभ्यां तदुभयं शमयित्वा यजमान आर्तिं न प्राप्नोति ॥

अथ विधत्ते—

भस्मनाऽभि समूहति स्वगाकृत्या अथो अनयोर्वा एष गर्भोऽनयोरेवैनं दधाति, इति ।

कथं नाम द्यावापृथिवीभ्यां गर्भोऽयमात्मसात्क्रियेतेति विचार्य तस्यै स्वगाकृत्यै शीतेन भस्मना गर्भमाच्छादयेत् । किंचैष गर्भोऽनयोर्द्यावापृथिव्योरेव समुत्पन्नः । अतोऽनेन मन्त्रेण भस्माच्छादने सत्यनयोर्द्यावापृथिव्योरेनं गर्भं स्थापयतीति ॥

यदुक्तं सूत्रकारेण—" पशोर्दैवतान्यवद्यन्गर्भस्य पुरस्तान्नाभ्या अन्यदवदाय दैवतेष्ववदधात्युपरिष्टादन्यत्सौविष्टकृतेषु इति, तदेतद्विधत्ते—

यदवद्येदति तद्रेचयेद्यन्नावद्येत्पशोरालब्धस्य नाव द्येत्पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत्पुरस्ताद्वै नाभ्यै प्राण उपरिष्टादपानो यावानेव पशुस्तस्याव द्यति, इति ।

यदि गर्भस्य हृदयाद्यङ्गमवद्येत्तदा पशुहृदयाद्यपेक्षया हविरतिरिक्तं भवेत् । यदि तद्दोषपरिहाराय नावद्येत्तदानीमालब्धस्य पशोरवदानं न कृतं स्यात् ।

१ क. ख. च. 'द्यद्यु' ।

अत उभयदोषपरिहाराय नाभ्याः पुरस्तात्किंचिदङ्गमवद्येदुपरिष्टाच्चान्यत्किंचिदवद्येत् । एवं सति यावानेव पशुस्तत्सर्वमवत्तं भवति । तत्कथमिति तदुच्यते—तिरश्चां हि नाभ्याः पुरस्तात्प्राणो मुखे संचरति । अपान उपरिष्टात्पुच्छदेशे संचरति । अत उभयावदानेन सर्वावदानसिद्धिः ॥

कल्पः—"गर्भस्य दक्षिणं पूर्वपादं प्रच्छिद्य विष्णुं शिपिविष्टं यजति" इति, तदेतद्विधत्ते—

विष्णवे शिपिविष्टाय जुहोति यद्वै यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यतिरिक्तस्य शान्त्यै , इति ।

यज्ञो वै विष्णुः पशवः शिपिरिति श्रुत्यन्तरात्पशुस्वामी कश्चिद्यज्ञदेवः शिपिविष्टो विष्णुस्तस्मै जुहुयात् । यज्ञस्य संबन्धि यदङ्गमुपाकृतादतिरिक्तं भवति यश्च पशोर्भूमा बहुत्वं हविराधिक्यहेतुर्या च पशोः शरीरे पुष्टिराधिक्यहेतुस्तत्सर्वं शिपिविष्टस्य विष्णोरधीनम् । अतो विष्णुमुद्दिश्य तद्धोमे सत्यतिरिक्तहेतावेवातिरिक्तं स्थापितं भवति । तच्चातिरेकदोषस्य शान्त्यै भवति ॥

देयां दक्षिणां विधत्ते—

अष्टाप्रूड्ढिरण्यं दक्षिणाऽष्टापदी ह्येषाऽऽत्मा नवमः पशोराप्त्यै , इति ।

अष्टाभिर्बिन्दुभिर्लाञ्छितमष्टाप्रूत्तादृशं हिरण्यं दद्याद्यस्मादियं वशा सगर्भा साऽष्टाभिः पादैर्युक्ता । आत्मा पशोर्देहो यस्मादतिरिक्तो नवमस्तस्मादष्टाभिर्बिन्दुभिर्युक्तं हिरण्यमष्टाभिः पादैर्युक्तेन पशुना च सदृशं भवतीति पशुप्राप्त्यै संपद्यते ॥

यदुक्तं सूत्रकारेण—" अष्टाप्रूड्ढिरण्यमुष्णीषेणाऽऽवेष्ट्य कोशेऽवधाय द्वितीयेऽवधाय तृतीयेऽवदधाति " इति, तदेतद्विधत्ते—

अन्तरकोश उष्णीषेणाऽऽविष्टितं भवत्येवमिव हि पशुरुल्बमिव चर्मेव माꣳसमिवास्थीव यावानेव पशुस्तमाप्त्वाऽव रुन्धे , इति ।

( भूत्यादिकामस्य वशालम्भनार्थमन्त्राणामभिधानम् )

बाह्यकोशमारभ्य योऽयमभ्यन्तरस्तृतीयः कोशस्तस्मिन्कोशे तद्धिरण्यमुष्णीषेण सर्वतो वेष्टनीयम्। यथैव तद्धिरण्यं चतुर्भिर्वेष्टितं तथैव गर्भरूपः पशुरपि चतुर्भिर्वेष्टितो भवति। तत्कथमिति तदुच्यते—उल्बं बहिर्वेष्टनं तस्याभ्यन्तरे चर्म तस्याभ्यन्तरे मांसं ततस्तस्याभ्यन्तरेऽस्थि अस्थ्नोऽभ्यन्तरे पशोर्जीवः। एवं हिरण्यस्य पशुसादृश्ये सति तद्दानेन यावान्संपूर्णः पशुस्तं प्राप्य स्वाधीनं करोति॥

इदानीमेतत्साङ्गं कर्म विधत्ते—

यस्यैषा यज्ञे प्रायश्चित्तिः क्रि-
यत इष्ट्वा वसीयान्भवति॥, इति॥

यस्य यजमानस्य यज्ञे वशागर्भमपराधं निमित्तीकृत्य यथोक्तहोमरूपा प्रायश्चित्तिः क्रियते स यजमानः प्रायश्चित्तेन प्रकृतेन यज्ञेनेष्ट्वा वसुमत्तरो भवति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके
प्रथमोऽनुवाकः॥ १॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः। )

---

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम्। आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते प्राणं वायवे स्वाहा किक्किटा ते चक्षुः सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याꣳ स्वाहा किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा (१)।

त्वं तुरीया वशिनी वशाऽसि सकृद्यत्त्वा मनसा गर्भ आऽशयत् । वशा त्वं वशिनी गच्छ देवान्त्सत्याः सन्तु यजमानस्य कामाः । अजाऽसि रयिष्ठा पृथिव्यां सीदोर्ध्वाऽन्तरिक्षमुप तिष्ठस्व दिवि ते बृहद्भाः । तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् । मनसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाजो भूयास्म ( २ ) ॥

( सरस्वत्यै स्वाहा मनुस्त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः । )

---

एति । वायो इति । भूष । शुचिपा इति शुचि—पाः । उपेति । नः । सहस्रम् । ते । नियुत इति नि—युतः । विश्ववारेति विश्व—वार । उपो इति । ते । अन्धः । मद्यम् । अयामि । यस्य । देव । दधिषे । पूर्वपेयमिति पूर्व—पेयम् । आकूत्या इत्या—कूत्यै । त्वा । कामाय । त्वा । समृध इति सम्—

( भूत्यादिकामस्य वशालम्भनार्थमन्त्राणामभिधानम् )

ऋधे । त्वा । किक्किटा । ते । मनः । प्रजापतय इति प्रजा—पतये । स्वाहा । किक्किटा । ते । प्राणमिति प्र—अनम् । वायवे । स्वाहा । किक्किटा । ते । चक्षुः । सूर्याय । स्वाहा । किक्किटा । ते । श्रोत्रम् । द्यावापृथिवीभ्यामिति द्यावा—पृथिवीभ्याम् । स्वाहा । किक्किटा । ते । वाचम् । सरस्वत्यै । स्वाहा । (१) । त्वम् । तुरीया । वशिनी । वशा । असि । सकृत् । यत् । त्वा । मनसा । गर्भः । एति । अशयत् । वशा । त्वम् । वशिनी । गच्छ । देवान् । सत्याः । सन्तु । यजमानस्य । कामाः । अजा । असि । रयिष्ठेति रयि—स्था । पृथिव्याम् । सीद । ऊर्ध्वा । अन्तरिक्षम् । उपेति । तिष्ठस्व । दिवि । ते । बृहत् । भाः । तन्तुम् । तन्वन् । रजसः । भानुम् । अन्विति । इहि । ज्योतिष्मतः । पथः । रक्ष । धिया । कृतान् । अनुल्बणम् । वयत । जोगुवाम् । अपः । मनुः । भव । जनय । दैव्यम् । जनम् । मनसः । हविः । असि । प्रजापतेरिति प्रजा—पतेः । वर्णः । गात्राणाम् । ते । गात्रभाज इति गात्र—भाजः । भूयास्म (२) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

( अथ तृतीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः। )

---

वशागर्भनिमित्तोऽयं होमोऽस्मिन्प्रथमे श्रुतः ॥

अथ द्वितीयानुवाके भूत्यादिकामस्य वशालम्भार्थं मन्त्रा वक्तव्याः।

कल्पः—" वायव्यामालभेत भूतिकाम इत्युक्तानि दैवतानि वायव्यामुपाकरोत्या वायो भूष शुचिपा इति " इति।

पाठस्तु—

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम्।, इति।

हे वायो त्वमागत्य पशुं भूषालंकुरु। हे शुचिपाः शुद्धहविःपालक त्वं नोऽस्मानुपगच्छ। हे विश्ववार विश्वव्यापक ते सहस्रं नियुतः सन्ति। नियुच्छब्देन वायुवाहनभूता अश्वा उच्यन्ते। ते तवान्धः पशुरूपमन्नं मद्यं हर्षकरं तस्मादुपो समीपे त्वामयामि प्राप्नोमि। तद्धे देव यस्य पशोः संबन्धि हविः पूर्वपेयं सोमसदृशमिति मनो दधिषे मनो धृतवानसि तादृशेन हविषा त्वामयामीत्यन्वयः॥

कल्पः—"आकूत्यै त्वा कामाय त्वेति पर्यग्नौ क्रियमाणे जुहोति " इति।

पाठस्तु—

आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते प्राणं वायवे स्वाहा किक्किटा ते चक्षुः सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याꣳ स्वाहा किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा।, इति।

हे पशो, आकूत्यै मदीयसंकल्पसिद्ध्यर्थं त्वां प्राप्य तथा कामायाभीष्टपालनार्थं त्वां प्राप्य तथा समृधे समृद्धिसिद्ध्यर्थं त्वां प्राप्य [1]किक्किटाकारपूर्वकं ते मनः प्रीणयित्वेदमाज्यद्रव्यं प्रजापतये स्वाहा हुतमस्तु। किक्किटेत्यनुकरणशब्दः। मनुष्या हि पशूनामाभिमुख्यार्थं मुखमध्ये स्वजिह्वाग्रमूर्ध्वमाकुञ्च्य

---

१ क. घ. ङ. ञ. स्वाहु।

( भूत्यादिकामस्य वशालम्भनार्थमन्त्राणामभिधानम् )

कंचिद्ध्वनिविशेषं कुर्वन्ति सोऽयं ध्वनिः किक्किटाशब्देनानुक्रियते । आकूत्या इत्यादिकमुपरितनमन्त्रेष्वनुषज्य सर्वं पूर्ववद्व्याख्येयम् ॥

कल्पः—" त्वं तुरीयेत्युदीचीं नीयमानामनुमन्त्रयते " इति ।

पाठस्तु—

त्वं तुरीया वशिनी वशाऽसि सकृद्यत्त्वा
मनसा गर्भ आऽशयत् । वशा त्वं वशिनी गच्छ
देवान्त्सत्याः सन्तु यजमानस्य कामाः ।, इति ।

हे वशे त्वं तुरीयोपरितनमन्त्रे लोकत्रयस्य वक्ष्यमाणत्वात्तदपेक्षया चतुर्थी वशिनी । वश इन्द्रियनियमः । वृषभसंयोगापेक्षाया अभावात् । वशोऽस्या अस्तीति वशिनी । वशाऽसि वन्ध्या भवसि । तदेतद्वशिनीत्वं वशात्वं प्रतिपादयति । यद्यस्मात्कारणात्पुरुषाभिलाषयुक्तेन मनसा सकृदेव गर्भस्त्वामाशयत्त्वामागत्य त्वदुदरे शयनं कृतवान्, तस्माद्द्वितीयतृतीयादिपुरुषसंयोगेच्छारहितत्वात्त्वं वशिनी । अपत्यान्तरराहित्याद्वशा । तादृशी त्वं हवीरूपेण देवान्गच्छ । तेन च गमनेन यजमानस्य कामाः सत्याः सन्तु ॥

कल्पः—" अजाऽसि रयिष्ठेति निहन्यमानाम् " इति ।

अनुमन्त्रयत इत्यनुवर्तते ।

पाठस्तु—

अजाऽसि रयिष्ठा पृथिव्या सीदोर्ध्वाऽ-
न्तरिक्षमुप तिष्ठस्व दिवि ते बृहद्भाः ।, इति ।

हे पशो त्वमजाऽसि जातितश्छागी भवसि । रयिष्ठा धने स्थिता हविःस्वरूपत्वेन देवानां धनभूताऽसि । तादृशी त्वमादौ पृथिव्यां सीदोपविश । तत ऊर्ध्वोन्नीता सत्यन्तरिक्षमुपतिष्ठस्व प्राप्नुहि । दिवि ते बृहद्भाः प्रौढं तेजः । एवं त्रिषु लोकेषु तिष्ठ ॥

कल्पः—" तन्तुं तन्वन्निति वपां जुहोति " इति ।

पाठस्तु—

तन्तुं तन्वन्रजसो भानुमन्विहि ज्योति-
ष्मतः पथो रक्ष धिया कृतान् ।, इति ।

हे पशो रजसो रजआत्मकस्य हविषस्तन्तुं तन्वन्विस्तारं कुर्वद्भानुमन्विहि

आदित्यमनुगच्छ। किं च धिया कृतान्प्रज्ञया संपादिताञ्ज्योतिष्मतः प्रकाशवतः पथोऽस्मदीयस्वर्गमार्गान्रक्ष ॥

कल्पः—" अनुल्बणं वयत जोगुवामप इति हविः " इति। जुहोतीत्यनुवर्तते।

पाठस्तु—

अनुल्बणं वयत जोगुवामपो मनु-
र्भव जनया दैव्यं जनम्।, इति।

हे हृदयादीनि पश्वङ्गानि जोगुवां निर्विघ्नेन समाप्त्यर्थं त्वरमाणानामस्माकमपः कर्मानुल्बणमनतिरिक्तं वयत कुरुत। हे पशो मनुर्भव मनुरिवोत्पादको भव। ततो दैव्यं जनं जनय। अयं च यजमानो जन्मान्तरे यथा देवजनो भवति तथोत्पादय ॥

कल्पः—" मनसो हविरसीति हविःशेषान्प्राश्नन्ति " इति।

पाठस्तु—

मनसो हविरसि प्रजापतेर्वर्णो गात्राणां
ते गात्रभाजो भूयास्म ॥, इति ॥

हे पशो त्वं मनसो मन्तव्यस्य देवस्य हविरसि प्रजापतेर्वर्णः स्वरूपमसि तेनोत्पादितत्वात्। तादृशस्य तव गात्राणामङ्गानां प्राशनाद्वयं गात्रभाजः पुष्टाङ्गा भूयास्म ॥

अत्र विनियोगसंग्रहः—

आ वायो इत्युपाकुर्यादाकूत्यै पञ्चभिर्हुतिः।
त्वं गच्छन्तीं मन्त्रयित्वा हन्यमानामजेति च ॥ १ ॥
तन्तुं वपाहुतिस्तद्वदनुल्बेति हविर्हुतिः।
मन शेषान्भक्षयन्ति मन्त्रा एकादशेरिताः ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः। )

---

इमे वै सहाऽऽस्तां ते वायुर्व्यवात्ते गर्भ-

मदधातां तꣳ सोमः प्राजनयदग्निरग्रसत स एतं प्रजापतिराग्नेयमष्टाकपालमपश्यत्तं निरवपत्तेनैवेनामग्नेरधि निरक्रीणात्तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपालं पुरस्तान्निर्वपेदग्नेरेवैनामधि निष्क्रीयाऽऽलभते यत् ( १ ) वायुर्व्यवात्तस्माद्वायव्या यदिमे गर्भमदधातां तस्माद्द्यावापृथिव्या यत्सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया यदनयोर्वियत्योर्वागवदत्तस्मात्सारस्वती यत्प्रजापतिरग्नेरधि निरक्रीणात्तस्मात्प्राजापत्या सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन ( २ ) भागधेयेनोप धावति स एवैनं भूतिं गमयति द्यावापृथिव्यामा लभेत कृषमाणः प्रतिष्ठाकामो दिव एवास्मै पर्जन्यो वर्षति व्यस्यामोषधयो रोहन्ति समर्धुकमस्य सस्यं भवत्यग्नीषोमीयामा लभेत यः कामयेतान्नवानन्नादः स्यामित्यग्निनैवान्नमव रुन्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति सारस्वतीमा लभेत यः ( ३ ) ईश्वरो वाचो वदितोः सन्वा-

चं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन्वाचं दधाति प्राजापत्यामा लंभेत यः कामयेतानभिजित-मभि जयेयमिति प्रजापतिः सर्वा देवता देव-ताभिरेवानभिजितमभि जयति वायव्ययोपा-करोति वायोरेवैनामवरुध्याऽऽ लभत आकू-त्यै त्वा कामाय त्वा (४) इत्याह यथाय-जुरेवैतत्किंक्किटाकारं जुहोति किंक्किटाकारेण वै ग्राम्याः पशवो रमन्ते प्राऽऽरण्याः पतन्ति य-त्किंक्किटाकारं जुहोति ग्राम्याणां पशूनां धृत्यै पर्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाꣳ सु-वर्गं लोकं गमयति त्वं तुरीया वशिनी वशाऽ-सीत्याह देवत्रैवैनां गमयति सत्याः सन्तु यज-मानस्य कामा इत्याहैष वै कामः (५) यज-मानस्य यदनार्त उदृचं गच्छति तस्मादेवमा-हाजाऽसि रयिष्ठेत्याहैष्वेवैनां लोकेषु प्रति ष्ठापयति दिवि ते बृहद्भा इत्याह सुवर्ग एवा-स्मै लोके ज्योतिर्दधाति तन्तुं तन्वन्रजसो भानुमन्विहीत्याहेमानेवास्मै लोकाञ्ज्योतिष्म-तः करोत्यनुल्बणं वयत जोगुवामप इति

( ६ ) आह यदेव यज्ञ उल्बणं क्रियते तस्यै-
वैषा शान्तिर्मनुर्भव जनया दैव्यं जनमित्याह
मानव्यो वै प्रजास्ता एवाऽऽद्याः कुरुते मनसो
हविरसीत्याह स्वगाकृत्यै गात्राणां ते गात्रभा-
जो भूयास्मेत्याहाऽऽशिषमेवैतामा शास्ते तस्यै
वा एतस्या एकमेवादेवयजनं यदालब्धाया-
मभ्रः ( ७ ) भवति यदालब्धायामभ्रः स्या-
दप्सु वा प्रवेशयेत्सर्वां वा प्राश्नीयाद्यदप्सु
प्रवेशयेद्यज्ञवेशसं कुर्यात्सर्वामेव प्राश्नीयादि-
न्द्रियमेवाऽऽत्मन्धत्ते सा वा एषा त्रयाणामे-
वावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमे-
धिनस्त एवैतया यजेरन्तेषामेवैषाऽऽप्ता ( ८ )॥

( यत्स्वेनं सारस्वतीमा लभेत यः कामाय त्वा कामोऽप
इत्यभ्रो द्विचत्वारिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

इमे इति । वै । सह । आस्ताम् । ते इति । वायुः ।
वीति । अवात् । ते इति । गर्भम् । अदधाताम् ।
तम् । सोमः । प्रेति । अजनयत् । अग्निः । अग्र-

सत । सः । एतम् । प्रजापतिरिति प्रजा—पतिः । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । अपश्यत् । तम् । निरिति । अवपत् । तेन । एव । एनाम् । अग्नेः । अधि । निरिति । अक्रीणात् । तस्मात् । अपीति । अन्यदेवत्यामित्यन्य—देवत्याम् । आलभमान इत्या—लभमानः । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । पुरस्तात् । निरिति । वपेत् । अग्नेः । एव । एनाम् । अधीति । निष्क्रीयेति निः—क्रीय । एति । लभते । यत् (१) । वायुः । व्यवादिति वि—अवात् । तस्मात् । वायव्या । यत् । इमे इति । गर्भम् । अदधाताम् । तस्मात् । द्यावापृथिव्येति द्यावा—पृथिव्या । यत् । सोमः । प्रेति । अजनयत् । अग्निः । अग्रसत । तस्मात् । अग्नीषोमीयेत्यग्नी—सोमीया । यत् । अनयोः । वियत्योरिति वि—यत्योः । वाक् । अवदत् । तस्मात् । सारस्वती । यत् । प्रजापतिरिति प्रजा—पतिः । अग्नेः । अधीति । निरक्रीणादिति निः—अक्रीणात् । तस्मात् । प्राजापत्येति प्राजा—पत्या । सा । वै । एषा । सर्वदेवत्येति सर्व—देवत्या । यत् । अजा । वशा । वायव्याम् । एति । लभेत । भूति-

( काम्यपश्वालम्भनविधिः )

काम इति भूति—कामः। वायुः। वै। क्षेपिष्ठा। देवता। वायुम्। एव। स्वेन (२)। भागधेयेनेति भाग—धेयेन। उपेति। धावति। सः। एव। एनम्। भूतिम्। गमयति। द्यावापृथिव्यामिति द्यावा—पृथिव्याम्। एति। लभेत। कृषमाणः। प्रतिष्ठाकाम इति प्रतिष्ठा—कामः। दिवः। एव। अस्मै। पर्जन्यः। वर्षति। वीति। अस्याम्। ओषधयः। रोहन्ति। समर्धुकमिति सम्—अर्धुकम्। अस्य। सस्यम्। भवति। अग्नीषोमीयामित्यग्नी—सोमीयाम्। एति। लभेत। यः। कामयेत। अन्नवानित्यन्न—वान्। अन्नाद इत्यन्न—अदः। स्याम्। इति। अग्निना। एव। अन्नम्। अवेति। रुन्धे। सोमेन। अन्नाद्यमित्यन्न—अद्यम्। अन्नवानित्यन्न—वान्। एव। अन्नाद इत्यन्न—अदः। भवति। सारस्वतीम्। एति। लभेत। यः (३)। ईश्वरः। वाचः। वदितोः। सन्। वाचम्। न। वदेत्। वाक्। वै। सरस्वती। सरस्वतीम्। एव। स्वेन। भागधेयेनेति भाग—धेयेन। उपेति। धावति। सा। एव। अस्मिन्। वाचम्। दधाति। प्राजापत्यामिति प्राजा—पत्याम्। एति। लभेत। यः। कामयेत।

अनभिजितमित्यनभि—जितम् । अभीति । जये- यम् । इति । प्रजापतिरिति प्रजा—पतिः । सर्वाः । देवताः । देवताभिः । एव । अनभिजितमित्यनभि—जितम् । अभीति । जयति । वायव्यया । उपाकरोतीत्युप—आकरोति । वायोः । एव । एनाम् । अवरुध्येत्यव—रुध्य । एति । लभते । आकूत्या इत्या—कूत्यै । त्वा । कामाय । त्वा ( ४ ) । इति । आह । यथायजुरिति यथा—यजुः । एव । एतत् । किक्किटाकारमिति किक्किटा—कारम् । जुहोति । किक्किटाकारेणेति किक्किटा—कारेण । वै । ग्राम्याः । पशवः । रमन्ते । प्रेति । आरण्याः । पतन्ति । यत् । किक्किटाकारमिति किक्किटा—कारम् । जुहोति । ग्राम्याणाम् । पशूनाम् । धृत्यै । पर्यग्नाविति परि—अग्नौ । क्रियमाणे । जुहोति । जीवन्तीम् । एव । एनाम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । त्वम् । तुरीया । वशिनी । वशा । असि । इति । आह । देवत्रेति देव—त्रा । एव । एनाम् । गमयति । सत्याः । सन्तु । यजमानस्य । कामाः । इति । आह । एषः । वै । कामः ( ५ ) । यजमानस्य । यत् । अनार्तिः ।

उदृचमित्युत्—ऋचम् । गच्छति । तस्मात् । एवम् ।
आह । अजा । असि । रयिष्ठेति रयि—स्था । इति ।
आह । एषु । एव । एनाम् । लोकेषु । प्रतीति ।
स्थापयति । दिवि । ते । बृहत् । भाः । इति ।
आह । सुवर्ग इति सुवः—गे । एव । अस्मै ।
लोके । ज्योतिः । दधाति । तन्तुम् । तन्वन् ।
रजसः । भानुम् । अन्विति । इहि । इति । आह ।
इमान् । एव । अस्मै । लोकान् । ज्योतिष्मतः ।
करोति । अनुल्बणम् । वयत । जोगुवाम् । अपः ।
इति ( ६ ) । आह । यत् । एव । यज्ञे ।
उल्बणम् । क्रियते । तस्य । एव । एषा । शान्तिः ।
मनुः । भव । जनय । दैव्यम् । जनम् ।
इति । आह । मानव्यः । वै । प्रजा इति
प्र—जाः । ताः । एव । आद्याः । कुरुते । मनसः ।
हविः । असि । इति । आह । स्वगाकृत्या इति
स्वगा—कृत्यै । गात्राणाम् । ते । गात्रभाज इति
गात्र—भाजः । भूयास्म । इति । आह । आशिष-
मित्या—शिषम् । एव । एताम् । एति । शास्ते ।
तस्यै । वै । एतस्याः । एकम् । एव । अदेवयजन-
मित्यदेव—यजनम् । यत् । आलब्धायामित्या—

लब्धायाम् । अभ्रः ( ७ ) । भवति । यत् । आलब्धायामित्या—लब्धायाम् । अभ्रः । स्यात् । अप्स्वित्यप्—सु । वा । प्रवेशयेदिति प्र—वेशयेत् । सर्वाम् । वा । प्रेति । अश्नीयात् । यत् । अप्स्वित्यप्—सु । प्रवेशयेदिति प्र—वेशयेत् । यज्ञवेशसमिति यज्ञ—वेशसम् । कुर्यात् । सर्वाम् । एव । प्रेति । अश्नीयात् । इन्द्रियम् । एव । आत्मन् । धत्ते । सा । वै । एषा । त्रयाणाम् । एव । अवरुद्धेत्यव—रुद्धा । संवत्सरसद इति संवत्सर—सदः । सहस्रयाजिन इति सहस्र—याजिनः । गृहमेधिन इति गृह—मेधिनः । ते । एव । एतया । यजेरन् । तेषाम् । एव । एषा । आप्ता ( ८ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( अथ तृतीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः । )

---

मन्त्राः काम्यपशोरत्र द्वितीये समुदीरिताः ।

अथ तृतीये तद्विधिरुच्यते । तत्राऽऽदौ तं पशुमालभमानस्य पूर्वं कर्तव्यमष्टाकपालं पुरोडाशं विधातुं प्रस्तौति—

इमे वै सहाऽऽस्तां ते वायुर्व्यवात्ते गर्भमदधातां तꣳ सोमः प्राजनयदग्निरग्रसत

( काम्यपश्वालम्भनविधिः )

स एतं प्रजापतिराग्नेयमष्टाकपालमपश्यत्तं निरवपत्तेनैवैनामग्नेरधि निरक्रीणात्, इति।

इमे द्यावापृथिव्यौ पुरा सहाऽऽस्तामवियुक्ते अभूताम्। ते च सहस्थिते उभे वायुर्व्यवाद्वियुक्ते अकरोत्। ते च पुनर्वायुना संपरिष्वक्ते सत्यौ वशारूपं गर्भं धारितवत्यौ। तं च गर्भं सोम उत्कर्षादजनयत्। उत्पादितं तमेतमग्निर्ग्रसितवान्। ततः प्रजापतिरग्नेरुत्कोचरूपेण पुरोडाशं निरुप्य तस्मादग्नेरेतां वशां निष्क्रीतवान्॥

इदानीं विधत्ते—

तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपालं पुरस्तान्निर्वपेदग्नेरेवैनामधि निष्क्रीयाऽऽलभते, इति।

यस्मादग्नेः सकाशात्प्रजापतिना वशा निष्क्रीता तस्माद्वशाया यद्यप्यग्नेरन्या देवता तथाऽपि तदालम्भात्पूर्वमाग्नेयं पुरोडाशं कुर्यात्। तेन पुरोडाशेनाग्नेः सकाशाद्वशां निष्क्रीय तदालम्भे प्रवृत्तो भवति॥

काऽसावन्यदेवत्येत्याकाङ्क्षायां तद्योग्यान्देवताविशेषान्दर्शयति—

यद्वायुर्व्यवात्तस्माद्वायव्या यदिमे गर्भमदधातां तस्माद्द्यावापृथिव्या यत्सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया यदनयोर्वियत्योर्वागवदत्तस्मात्सारस्वती यत्प्रजापतिरग्नेरधि निरक्रीणात्तस्मात्प्राजापत्या सा वा एषा सर्वदेवत्या यदजा वशा, इति।

कारकत्वस्य पूर्वं दर्शितत्वात्तत्तद्देवतात्वं युक्तम्। संश्लिष्टे द्यावापृथिव्यौ यदा वियुज्येते तदा वेणुदलविभागध्वनिः समुत्पन्नस्तदिदं वाचो वदनम्। तस्यांदुपकारित्वात्सरस्वत्यत्र देवता। तदेवं वायुद्यावापृथिव्यग्नीषोमसरस्वतीप्रजापतीनामत्र देवतात्वात्सेयमजा वन्ध्या सर्वदेवत्येत्युच्यते॥

तत्रैश्वर्यसिद्धये देवताविशेषं विधत्ते—

वायव्यामा लभेत भूतिकामो वायुर्वै क्षेपि-

---

१ क. घ. ङ. च. तेन पुं।

ष्ठा देवता वायुमेव स्वेन भागधेयेनोप धा-
वति स एवैनं भूतिं गमयति, इति ॥

कृषीवलस्य सस्यसमृद्धिरूपां प्रतिष्ठां कामयमानस्य देवतां विधत्ते—

द्यावापृथिव्यामा लभेत कृषमाणः प्रतिष्ठा-
कामो दिव एवास्मै पर्जन्यो वर्षति व्यस्यामो-
षधयो रोहन्ति समर्धुकमस्य सस्यं भवति, इति।

विविधं रोहन्त्युत्पद्यन्ते। ततोऽस्य यजमानस्य सस्यं समृद्धिशीलं भवति ॥

अन्नसमृद्धिं तद्भोगसामर्थ्यं च कामयमानस्य देवतां विधत्ते—

अग्नीषोमीयामा लभेत यः कामयेता-
न्नवानन्नादः स्यामित्यग्निनैवान्नमव रुन्धे
सोमेनान्नाद्यमन्नवानेवान्नादो भवति, इति।

अन्नाद्यमन्नभक्षणसामर्थ्यम् ॥

राजादिसभारञ्जनयोग्यां वाचं कामयमानस्य देवतां विधत्ते—

सारस्वतीमा लभेत य ईश्वरो वाचो
वदितोः सन्वाचं न वदेद्वाग्वै सरस्वती
सरस्वतीमेव स्वेन भागधेयेनोप धा-
वति सैवास्मिन्वाचं दधाति, इति।

वेदशास्त्रपारगतत्वाद्वाचं वदितुं समर्थः सन्नपि सभाकम्पादिप्रतिबन्धेन यो न वदेत्तस्यायं विधिः ॥

यत्फलमुपायान्तरेण न संपादितं तत्संपादनकामस्य देवतां विधत्ते—

प्राजापत्यामा लभेत यः कामयेतानभिजित-
मभि जयेयमिति प्रजापतिः सर्वा देवता
देवताभिरेवानभिजितमभि जयति, इति ॥

आ वायो भूषेत्येतामृचं विनियुङ्क्ते—

वायव्ययोपाकरोति वायोरेवै-
नामवरुध्याऽऽलभते, इति ।

( काम्यपश्वालम्भनविधिः )

एनां वशामवरुध्य संपाद्य ॥

होममन्त्राणां स्पष्टार्थतां दर्शयति—

आकूत्यै त्वा कामाय त्वे-
त्याह यथायजुरेवैतत्, इति ॥

जिह्वाग्राकुञ्चननिष्पाद्याः पशुप्रिया ये ध्वनिविशेषास्तत्पूर्वकं होमं विधत्ते—

किक्किटाकारं जुहोति किक्किटाकारेण वै ग्राम्याः
पशवो रमन्ते प्राऽऽरण्याः पतन्ति यत्किक्कि-
टाकारं जुहोति ग्राम्याणां पशूनां धृत्यै, इति।

आकूत्या इतिमन्त्रमुच्चार्य जिह्वाग्रेण ध्वनिविशेषं कृत्वा पश्चाज्जुहुयात्। तेन ध्वनिना गोमहिषादयो ग्राम्याः पशवः क्रीडन्ते। आरण्यास्तु मृगाः प्रकर्षेण पलायन्ते। अतोऽयं ध्वनिर्ग्राम्यपशुधृत्यै भवति ॥

अस्याऽऽज्यहोमस्य कालं विधत्ते—

पर्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाꣳ सु-
वर्गं लोकं गमयति त्वं तुरीया वशिनी वशाऽ-
सीत्याह देवत्रैवैनां गमयति, इति।

उल्मुकेन पशोः प्रदक्षिणावृत्तिः पर्यग्निकरणं तद्यदाऽनुष्ठीयते तदैवायं होमस्तथा सति जीवनयुक्तामेनां स्वर्गं प्रापयति। मन्त्रेषु मनआदीनां प्रजापत्यादिषु हुतत्वाभिधानात् ॥

नीयमानपश्वनुमन्त्रणमन्त्रे देवान्गच्छेत्यस्याभिप्रायं दर्शयति—

सत्याः सन्तु यजमानस्य कामा इत्या-
हैष वै कामो यजमानस्य यदनार्त
उदृचं गच्छति तस्मादेवमाह, इति।

अयं यज्ञोऽनार्तो विघ्नरहित उदृचमुत्तमामृचं समाप्तिं गच्छतीति यदेष एव यजमानस्य मुख्यः कामस्तत्समाप्त्या फलस्यावश्यंभावात्। तस्मादध्वर्युः कामाः सत्याः सन्त्वित्येवं ब्रूते ॥

हन्यमानानुमन्त्रणमन्त्रे पृथिव्यां सीदेत्यादेस्तात्पर्यं दर्शयति—

अजाऽसि रयिष्ठेत्याहैष्वेवैनां
लोकेषु प्रति ष्ठापयति, इति ॥

चरमस्य मन्त्रभागस्य तात्पर्यं दर्शयति—

दिवि ते बृहद्भा इत्याह सुवर्ग एवा-
स्मै लोके ज्योतिर्दधाति , इति ।

अस्मै यजमानार्थं स्वर्गे प्रकाशमुत्पादयति ॥

वपाहोममन्त्रे पथ इति लोका विवक्षिता इति दर्शयति—

तन्तुं तन्वन्रजसो भानुमन्विहीत्याहेमा-
नेवास्मै लोकाञ्ज्योतिष्मतः करोति, इति ॥

हविर्होममन्त्रस्य तात्पर्यं दर्शयति—

अनुल्बणं वयत जोगुवामप इत्याह यदेव
यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिः , इति ।

विधिमतिक्रम्यानुष्ठितमङ्गमुल्बणम् । अनुल्बणशब्दोच्चारणेन तस्य शान्ति-र्भवति ॥

तस्य मन्त्रस्योत्तरभागे मनुशब्दप्रयोगस्य तात्पर्यमाह—

मनुर्भव जनया दैव्यं जनमित्याह मानव्यो
वै प्रजास्ता एवाऽऽद्याः कुरुते , इति ।

स्वायंभुवस्य मनोः प्रजापतिरूपत्वात्प्रजापतिसृष्टा दैव्यजनादयः सर्वाः प्रजा मानव्यो भवन्ति । अतोऽनेन मन्त्रभागेन(ण) ताः सर्वा आद्या भोग्याः कुरुते ॥

हविःशेषप्राशनमन्त्र(न्त्रे) [हविःशेष]स्योदरगतं(त्वं) कर्तुं मनःशब्दप्रयोग इति दर्शयति—

मनसो हविरसीत्याह स्वगाकृत्यै , इति ॥

तस्मिन्मन्त्र उत्तरभागस्याऽऽशीःपरत्वं दर्शयति—

गात्राणां ते गात्रभाजो भूयास्मे-
त्याहाऽऽशिषमेवैतामा शास्ते , इति ॥

एतस्या वशाया आलम्भे वर्जनीयं दिनं दर्शयति—

तस्यै वा एतस्या एकमेवादेवयजनं
यदालब्धायामभ्रो भवति , इति ।

(जयाख्यमन्त्रहोमाभिधानम्)

अस्यां वशायामालब्धायां सत्यां गगने मेघावरणेन यदुर्दिनं भवति तदेवैकं दिनमेतस्या वशाया देवयागानर्हम्। तस्माद्यदा मेघो न भविष्यतीति निश्चयो मनसि जायते तदानीमेवैतामालभेत॥

तथा कृतेऽपि प्रमादादभ्रदर्शने सति नैमित्तिकं प्रयोगविशेषमाह—

यदालब्धायामभ्रः स्यादप्सु वा
प्रवेशयेत्सर्वां वा प्राश्नीयात्, इति।

तत्र जलप्रवेशः पूर्वः पक्षः। सर्वस्याः प्राशनं राद्धान्तः॥

तदुभयं स्पष्टी करोति—

यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्यात्सर्वामेव
प्राश्नीयादिन्द्रियमेवाऽऽत्मन्धत्ते, इति।

यज्ञवेशसं यज्ञविघातम्। यजमानः सर्वप्राशनेनेन्द्रियमात्मनि धारयति। एतदेवाभिमेत्य सूत्रकारेणोक्तम्—सर्वां वा यजमान एवान्वहं प्राश्नीयादिति॥

एतस्यां वशायां मुख्याधिकारिणो दर्शयति—

सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्त
एवैतया यजेरन्तेषामेवैषाऽऽप्ता॥, इति॥

सेयं वशा त्रयाणामेवाधिकारिणामधीता। कस्य कस्येति तदुच्यते—गवामयनादिरूपं संवत्सरसत्रं योऽनुतिष्ठति सोऽयं संवत्सरसत्तस्य। सहस्रसंख्याकदक्षिणायुक्तेन यज्ञेन यो यजते सोऽयं सहस्रयाजी तस्य। संवत्सरसदर्वाचीनेष्वपि सत्रेषु यो गृहपतित्वेन दीक्षितो भवति सोऽयं गृहमेधी तस्य। त एव त्रयोऽधिकारिण एतया वशया यजेरंस्तेषामेवैषा वशा युक्ता॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके
तृतीयोऽनुवाकः॥ ३॥

---

(अथ तृतीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः।)

---

चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च वि-

ज्ञातं च विज्ञानं च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथंतरं च प्रजापतिर्जया-निन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव देवासुराः संयत्ता आसन्त्स इन्द्रः प्रजा-पतिमुपाधावत्तस्मा एताञ्जयान्प्रायच्छत्तान-जुहोत्ततो वै देवा असुरानजयन्यदजयन्तज्ज-यानां जयत्वं स्पर्धमानेनैते होतव्या जयत्येव तां पृतनाम् ( १ ) ॥

( उप पञ्चविंशतिश्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

चित्तम् । च । चित्तिः । च । आकूतमित्या—कूतम् । च । आकूतिरित्या—कूतिः । च । विज्ञात-मिति वि—ज्ञातम् । च । विज्ञानमिति वि—ज्ञानम् । च । मनः । च । शक्करीः । च । दर्शः । च । पूर्ण-मास इति पूर्ण—मासः । च । बृहत् । च । रथंतर-मिति रथं—तरम् । च । प्रजापतिरिति प्रजा—पतिः ।

( जयाख्यमन्त्रहोमाभिधानम् )

जयान् । इन्द्राय । वृष्णे । प्रेति । अयच्छत् । उग्रः ।
पृतनाज्येषु । तस्मै । विशः । समिति । अनमन्त ।
सर्वाः । सः । उग्रः । सः । हि । हव्यः । बभूव ।
देवासुरा इति देव—असुराः । संयत्ता इति सं—यत्ताः ।
आसन् । सः । इन्द्रः । प्रजापतिमिति प्रजा—प-
तिम् । उपेति । अधावत् । तस्मै । एतान् ।
जयान् । प्रेति । अयच्छत् । तान् । अजुहोत् ।
ततः । वै । देवाः । असुरान् । अजयन् । यत् ।
अजयन् । तत् । जयानाम् । जयत्वमिति जय—
त्वम् । स्पर्धमानेन । एते । होतव्याः । जयति ।
एव । ताम् । पृतनाम् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः । )

---

अजा वशा या तु काम्या तद्विधिः स्यात्तृतीयके ॥

अथ यदुक्तं सूत्रकारेण "जयानभ्यातानान्राष्ट्रभृत इति ब्राह्मणव्याख्याता अस्मिन्ब्रह्मन्नित्यभ्यातानेष्वनुषजति" इति । तत्र चतुर्थेऽनुवाके जया उच्यन्ते । तत्राऽऽदौ जयसंज्ञकांस्त्रयोदश मन्त्रान्पठति—

चित्तं च चित्तिश्चाऽऽकूतं चाऽऽकूतिश्च विज्ञातं
च विज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमा-
सश्च बृहच्च रथंतरं च प्रजापतिर्जयानिन्द्राय

वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः
समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव, इति ।

सामान्याकारेण निर्विकल्पकज्ञानेन प्रतीतं वस्तु चित्तम् । वक्ष्यमाणापेक्षया समुच्चयार्थश्चशब्दः । इदं चित्तं मयि ममास्त्विति शेषः । एवमुत्तरत्र योज्यम् । चित्तिर्निर्विकल्पकज्ञानम् । आकूतं संकल्पितं वस्तु । आकूतिः संकल्पः । विज्ञातं विशेषाकारेण निश्चितं वस्तु । विज्ञानं तन्निश्चयः । मनो ज्ञानसाधनमन्तःकरणम् । शक्करीश्चक्षुरादिबाह्येन्द्रियशक्तयः । दर्शपूर्णमासौ यागविशेषौ । बृहद्रथंतरे सामनी । पृतनाज्येषु सङ्ग्रामाभिगमनेषूग्रः प्रजापतिर्वृष्णे वर्षयित्र इन्द्राय जयाञ्जयहेतून्मन्त्रानेतान्प्रायच्छत् । तस्मा इन्द्राय विशः प्रजाः सर्वाः समनमन्त सम्यगानता विधेया अभवन् । स चेन्द्रः स्वासु प्रजासूग्रः शिक्षकोऽभवत् । हि यस्मात्स इन्द्रो हव्यो होमयोग्यो बभूव तत्तस्मिन्निन्द्रे प्रजापतेरनुग्रहो युक्तः ॥

अथैतैर्मन्त्रैर्होमं विधातुं प्रस्तौति—

देवासुराः संयत्ता आसन्त्स इन्द्रः प्र-
जापतिमुपाधावत्तस्मा एताञ्जयान्प्रा-
यच्छत्तानजुहोत्ततो वै देवा असुरानज-
यन्यदजयन्तज्जयानां जयत्वम् , इति ।

जयन्त्येभिरिति जयाः ॥

अथ विधत्ते—

स्पर्धमानेनैते होतव्या जयत्येव तां पृतनाम् ॥, इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो-
ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो-

(अभ्यातानमन्त्राभिधानम्)

दिवश्चन्द्रमा नक्षंत्राणां बृहस्पतिर्ब्रह्मंणो मित्रः सत्यानां वरुंणोऽपाꣳ संमुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिंपति तन्माऽवतु सोम ओषंधीनाꣳ सविता प्रंसवानाꣳ रुद्रः पंशूनां त्वष्टा रूपाणां विष्णुः पर्वंतानां मरुतो गणानामधिंपतयस्ते माऽवन्तु पितंरः पितामहाः परेऽवरे ततांस्ततामहा इह माऽवत । अस्मिन्ब्रह्मंन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुंरोधायांमस्मिन्कर्मंन्नस्यां देवहूंत्याम् (१) ॥

(अवरे सप्तदंश च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

(अथ तृतीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ।)

---

अग्निः । भूतानाम् । अधिंपतिरित्यधिं–पतिः । सः । मा । अवतु । इन्द्रंः । ज्येष्ठानाम् । यमः । पृथिव्याः । वायुः । अन्तरिक्षस्य । सूर्यः । दिवः । चन्द्रमाः । नक्षंत्राणाम् । बृहस्पतिः । ब्रह्मंणः । मित्रः । सत्यानाम् । वरुंणः । अपाम् । समुद्रः । स्रोत्यानाम् । अन्नम् । साम्राज्यानामिति सां–राज्यानाम् । अधिंपतीत्यधिं–पति । तत् ।

मा । अवतु । सोमः । ओषधीनाम् । सविता । प्रसवानामिति प्र—सवानाम् । रुद्रः । पशूनाम् । त्वष्टा । रूपाणाम् । विष्णुः । पर्वतानाम् । मरुतः । गणानाम् । अधिपतय इत्यधि—पतयः । ते । मा । अवन्तु । पितरः । पितामहाः । परे । अवरे । ततः । ततामहाः । इह । मा । अवत । अस्मिन् । ब्रह्मन् । अस्मिन् । क्षत्रे । अस्याम् । आशिषीत्या—शिषि । अस्याम् । पुरोधायामिति पुरः—धायाम् । अस्मिन् । कर्मन् । अस्याम् । देवहूत्यामिति देव—हूत्याम् (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ तृतीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः । )

---

जयाख्यमन्त्रतद्धोमाश्चतुर्थे समुदीरिताः ॥

अथ पञ्चमेऽभ्यातानाः उच्यन्ते। तन्मन्त्रपाठस्तु—

अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳ समुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिपति तन्माऽवतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणाना-

( अभ्यातानमन्त्राभिधानम् )

मधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत । अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याम् ॥, इति ॥

अयमग्निर्भूतानां प्राणिनामधिपतिः स्वामी। स तादृशो मामवतु। अधिपतिः स माऽवत्वित्येतत्पदचतुष्टयं वक्ष्यमाणेषु षष्ठ्यन्तेषु वाक्यशेषत्वेनानुवर्तते। ज्येष्ठानां वृद्धतमानां लोकपालानामिन्द्रोऽधिपतिः। यमशब्देनाग्निविशेष उच्यते। अग्निर्वाव यम इति श्रुत्यन्तरात्। अग्निवायुसूर्यचन्द्रबृहस्पतयः पृथिव्यन्तरिक्षद्युनक्षत्रब्राह्मणजातीनामधिपतयः प्रसिद्धाः। मित्रः सत्यवचनानामधिपतिः। वरुणः कूपादिगतानां स्थिराणा[मपा]मधिपतिः। समुद्रः स्रोत्यानां नदीप्रवाहगतानामपामधिपतिः। अन्नं साम्राज्यानां सार्वभौमराजभोग्यानां द्रव्याणां स्वामी। अनुवर्त्यमानस्य लिङ्गव्यत्ययं द्योतयितुमधिपति तन्माऽवत्वित्याम्नातम्। सोमसवितृरुद्रत्वष्टार ओषध्यनुज्ञाप*शुरूपाणामधिपतयः प्रसिद्धाः। विष्णुः पर्वतानां गोवर्धनादीनामधिपतिः। मरुतो गणानामादित्यवस्वादिगणदेवतानां स्वामिनः। अत्रानुषज्यमानस्य वचनव्यत्ययं द्योतयितुमधिपतयस्ते माऽवन्त्वित्याम्नातम्। पितर इत्यादीनि यजुर्मन्त्राणां पदानि। पितृपितामहशब्दौ जीवद्विषयौ। ततततामहशब्दौ मृतविषयौ। सपिण्डता तु पुरुषात्सप्तमाद्विनिवर्तते। ततः सप्तमादूर्ध्वा ये विप्रकृष्टास्ते परे। ततोऽर्वाचीनाः संनिकृष्टा अवरे। हे पित्रादयो यूयमिहैव तेषु तेषु विषयेषु मामवत रक्षत। कुत्र कुत्रेति तदुच्यते—अस्मिन्ब्रह्मन्नस्यां ब्राह्मणजातावस्मिन्क्षत्रेऽस्यामाशिष्याशासनीये, प्रजापश्वादिरूपेऽस्मिन्फलेऽस्यां पुरोधायां पुरस्करणरूपेऽस्मिन्प्राधान्येऽस्मिन्कर्मणि क्रियमाणेऽस्मिन्ननुष्ठानविशेषेऽस्यां देवहूत्यां देवान्प्रति यदेतदस्मदीयमाह्वानं तस्मिन्नाह्वाने। एतेषु सर्वेषु विषयेषु मां रक्षत। पितर इत्यादिके चरममन्त्रे समाम्नातमस्मिन्ब्रह्मन्नित्यादिकं पूर्वेषु सप्तदशमन्त्रेष्वनुषञ्जनीयम्। तथा सत्यग्निर्भूतानामधिपतिः स माऽवत्वस्मिन्ब्रह्मन्निन्द्रो ज्येष्ठानामधिपतिः स माऽवत्वस्मिन्ब्रह्मन्, इत्येवं सर्वत्र पाठः संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ९ ॥

---

* सर्वपुस्तकेषु पशुस्वरूपाणामिति वर्तते तत्प्रामादिकम्।

(अथ तृतीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः।)

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन्तानभ्यातन्वत यद्देवानां कर्माऽऽसीदार्ध्यत तद्यदसुराणां न तदार्ध्यत येन कर्मणेर्त्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणा यद्विश्वे देवाः समभरन्तस्मादभ्याताना वैश्वदेवा यत्प्रजापतिर्जयान्प्रायच्छत्तस्माज्जयाः प्राजापत्याः (१) यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृतांꣳ राष्ट्रभृत्त्वं ते देवा अभ्यातानैरसुरानभ्यातन्वत जयैरजयन्राष्ट्रभृद्भी राष्ट्रमाऽददत यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्यातानत्वं यज्जयैरजयन्तज्जयानां जयत्वं यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृतांꣳ राष्ट्रभृत्त्वं ततो देवा अभवन्पराऽसुरा यो भ्रातृव्यवान्त्स्यात्स एताञ्जुहुयादभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयैर्जयति राष्ट्रभृद्भी राष्ट्रमा दत्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति (२) ॥

(प्राजापत्याः सोऽष्टादश च।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

(अथ तृतीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ।)

---

देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एतान् । अभ्यातानानित्यभि—आतानान् । अपश्यन् । तान् । अभ्यातन्वतेत्यभि—आतन्वत । यत् । देवानाम् । कर्म । आसीत् । आर्ध्यत । तत् । यत् । असुराणाम् । न । तत् । आर्ध्यत । येन । कर्मणा । ईर्त्सेत् । तत्र । होतव्याः । ऋध्नोति । एव । तेन । कर्मणा । यत् । विश्वे । देवाः । समभरन्नितिं सम्—अभरन् । तस्मात् । अभ्यातानाः इत्यभि—आतानाः । वैश्वदेवा इतिं वैश्व—देवाः । यत् । प्रजापतिरितिं प्रजा—पतिः । जयान् । प्रेति । अयच्छत् । तस्मात् । जयाः । प्राजापत्या इतिं प्राजा—पत्याः (१) । यत् । राष्ट्रभृद्भिरितिं राष्ट्रभृत्—भिः । राष्ट्रम् । एति । अदंदत । तत् । राष्ट्रभृतामितिं राष्ट्र—भृताम् । राष्ट्रभृत्त्वमितिं राष्ट्रभृत्—त्वम् । ते । देवाः । अभ्यातानैरित्यभि—आतानैः । असुरान् । अभ्यातन्वतेत्यभि—आतन्वत । जयैः । अजयन् । राष्ट्रभृद्भिरितिं राष्ट्रभृत्—भिः । राष्ट्रम् । एति । अददत । यत् । देवाः । अभ्यातानैरित्यभि—आतानैः । असुरान् । अभ्यातन्वतेत्य-

भि—आतंन्वत । तत् । अभ्यातानानामित्यंभि—आतानानांम् । अभ्यातानत्वमित्यंभ्यातान—त्वम् । यत् । जयैंः । अजंयन् । तत् । जयांनाम् । जयत्वमितिं जय—त्वम् । यत् । राष्ट्रभृद्भिरितिं राष्ट्रभृत्—भिः । राष्ट्रम् । एतिं । अदंदत । तत् । राष्ट्रभृतामितिं राष्ट्र—भृतांम् । राष्ट्रभृत्त्वमितिं राष्ट्रभृत्—त्वम् । ततंः । देवाः । अभंवन् । परेतिं । असुंराः । यः । भ्रातृंव्यवानिति भ्रातृंव्य—वान् । स्यात् । सः । एतान् । जुहुयात् । अभ्यातानैरित्यंभि—आतानैंः । एव । भ्रातृंव्यान् । अभ्यातंनुत इत्यंभि—आतंनुते । जयैंः । जयति । राष्ट्रभृद्भिरितिं राष्ट्रभृत्—भिः । राष्ट्रम् । एतिं । दत्ते । भवंति । आत्मनां । परेतिं । अस्य । भ्रातृंव्यः । भवति ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः । )

---

अभ्यातानाभिधा मन्त्राः पञ्चमे समुदीरिताः ॥
अथ षष्ठे तद्धोमविधिरभिधीयते । तत्र होमं विधातुं प्रस्तौति—

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन्तान्-

( अभ्यातानहोमाभिधानम् )

भ्यातन्वत यद्देवानां कर्माऽऽसीदार्ध्यत
तद्यदसुराणां न तदार्ध्यत , इति।

अभ्यातानाख्यान्मन्त्रान्कर्मसमृद्धिहेतून्दृष्ट्वा तानाभिमुख्येनाऽऽनीय देवा अजुहवुस्तेन देवानां कर्म समृद्धमासीत् । तद्धोमाभावादसुराणां कर्म न समृद्धम् ॥

अथ विधत्ते—

येन कर्मणेर्त्सेत्तत्र होतव्या ऋध्नो-
त्येव तेन कर्मणा , इति।

ईर्त्सेदृद्धिमिच्छेत् । ऋध्नोत्येव समृद्धिं प्राप्नोत्येव ॥

अथ भ्रातृव्यवतः समुच्चितानामभ्यातानजयराष्ट्रभृतां होमं विधत्ते—

यद्विश्वे देवाः समभरन्तस्मादभ्यातानाा वैश्वदेवा
यत्प्रजापतिर्जयान्प्रायच्छत्तस्माज्जयाः प्राजा-
-पत्या यद्राष्ट्रभृद्भी राष्ट्रमाददत तद्राष्ट्रभृतां राष्ट्र-
भृत्त्वं ते देवा अभ्यातानैरसुरानभ्यातन्वत ..
जयैरजयन्राष्ट्रभृद्भी राष्ट्रमाऽददत यद्देवा अभ्या-
तानैरसुरानभ्यातन्वत तदभ्यातानानामभ्या-
तानत्वं यज्जयैरजयन्तज्जयानां जयत्वं यद्राष्ट्र-
भृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृतां राष्ट्र-
भृत्त्वं ततो देवा अभवन्पराऽसुराः , इति।

यस्मात्सर्वेऽपि देवाः पूर्वोक्तप्रकारेणाभ्यातानमन्त्रान्समभरन्संपादितवन्तस्त-स्मादेते वैश्वदेवा इत्युच्यन्ते । यस्मात्प्रजापतिर्जयानिन्द्राय प्रायच्छत्तस्मात्ते प्राजापत्या इत्युच्यन्ते । यस्मादुपरितनानुवाकाम्नातै राष्ट्रभृत्संज्ञकैर्मन्त्रैरसुरसं-बन्धिराष्ट्रं देवाः स्वीकृतवन्तस्तस्मात्ते राष्ट्रभृत उच्यन्ते । देवास्तु प्रथममभ्या-तानैरसुरान्वशीकृत्य जयैर्विनष्टैश्वर्यान्कृत्वा राष्ट्रभृद्भिस्तदीयं निवासस्थान-मपहृतवन्तः । अभ्यातन्वत एभिरित्यभ्यातानत्वम् । जयन्त्येभिरिति जयत्वम् । राष्ट्रं भ्रियते स्वी क्रियत एभिरिति राष्ट्रभृत्त्वम् । समुच्चितैरेतैस्त्रिभिर्होमैर्देवा विजयिनोऽभवन् । असुरास्तु पराभूताः ॥

अथ विधत्ते—

यो भ्रातृव्यवान्त्स्यात्स एताञ्जुहुया-
दभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयै-
र्जयति राष्ट्रभृद्भी राष्ट्रमा दत्ते भवत्या-
त्मना पराऽस्य भ्रातृव्यो भवति, इति ।

अभ्याततिर्वशीकारः । जयोऽन्यदीयैश्वर्यनाशनम् । राष्ट्रादानं तदीयभूमेरपहारः । तत्त्रिविधफलसिद्ध्यर्थं त्रिविधान्समुचित्य जुहुयात् ॥

अथ मीमांसा ।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

येनेत्सेर्त्कर्मणा तत्र जयहोमोऽखिलार्थता ।
वैदिकेष्वेव वा सर्वशेषोऽसंकोचकत्वतः ॥
होम आहवनीये स्यात्कृष्यादिषु न सोऽस्ति हि ।
तेनानारभ्यपाठेऽपि वैदिकेष्वेव ते जयाः ॥

अनारभ्य श्रूयते—" येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्तद्द्राष्ट्रभृतो जुहोत्यभ्यातानाञ्जुहोति " इति । ईर्त्सेदृद्धिमिच्छेत् । चित्तं च स्वाहेत्यादयो जयाः । ऋताषाडित्यादयो राष्ट्रभृतः । अग्निर्भूतानामित्यादयोऽभ्यातानाः । तत्र वैदिककर्मणीव लौकिककृष्यादिकर्मण्यप्यृद्धेरिष्यमाणत्वात्संकोचे कारणाभावाज्जयादिहोमः सर्वशेष इति चेन्मैवम् । यदाहवनीये *जुहति तेन सोऽस्याभीष्टः प्रीत इति वाक्येन होममुद्दिश्याऽऽहवनीयविधानात्कृष्यादौ तदभावाद्वैदिकेष्वेव जयादिहोमः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽ-
प्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता
इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा, ताभ्यः

---

* " जुहोति " इति क. पुस्तकस्थं पाठान्तरम् ।

स्वाहा संहितो विश्वसामा सूर्यो गन्धर्व-
स्तस्य मरीचयोऽप्सरस आयुवः सुषुम्नः सूर्य-
रश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो
बेकुरयो भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य
दक्षिणा अप्सरसः स्तवाः प्रजापतिर्विश्वकर्मा
मनः ( १ ) गन्धर्वस्तस्यर्क्सामान्यप्सरसो
वह्नय इषिरो विश्वव्यचा वातो गन्धर्वस्त-
स्याऽऽपोऽप्सरसो मुदा भुवनस्य पते यस्य
त उपरि गृहा इह च । स नो रास्वाज्यानिꣳ
रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ।
परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्स-
रसो भुवः सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो
गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो दूरेहेतिर-
मृडयः ( २ ) मृत्युर्गन्धर्वस्तस्य प्रजा अप्स-
रसो भीरुवश्चारुः कृपणकाशी कामो गन्धर्व-
स्तस्याऽऽधयोऽप्सरसः शोचयन्तीर्नाम स इदं
ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै
स्वाहा ताभ्यः स्वाहा स नो भुवनस्य पते
यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै
क्षत्राय महि शर्म यच्छ ( ३ ) ॥

( मनोऽमृडयः षट्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः । )

---

ऋताषाट् । ऋतधामेत्यृत—धामा । अग्निः । गन्धर्वः । तस्य । ओषधयः । अप्सरसः । ऊर्जः । नाम । सः । इदम् । ब्रह्म । क्षत्रम् । पातु । ताः । इदम् । ब्रह्म । क्षत्रम् । पान्तु । तस्मै । स्वाहा । ताभ्यः । स्वाहा । सꣳहित इति सं—हितः । विश्वसामेति विश्व—सामा । सूर्यः । गन्धर्वः । तस्य । मरीचयः । अप्सरसः । आयुव इत्या—युवः । सुषुम्न इति सु—सुम्नः । सूर्यरश्मिरिति सूर्य—रश्मिः । चन्द्रमाः । गन्धर्वः । तस्य । नक्षत्राणि । अप्सरसः । बेकुरयः । भुज्युः । सुपर्ण इति सु—पर्णः । यज्ञः । गन्धर्वः । तस्य । दक्षिणाः । अप्सरसः । स्तवाः । प्रजापतिरिति प्रजा—पतिः । विश्वकर्मेति विश्व—कर्मा । मनः ( १ ) । गन्धर्वः । तस्य । ऋक्सामानीत्यृक्—सामानि । अप्सरसः । वह्नयः । इषिरः । विश्वव्यचा इति विश्व—व्यचाः । वातः । गन्धर्वः । तस्य । आपः । अप्सरसः । मुदाः । भुवनस्य ।

पते । यस्यं । तें । उपरिं । गृहाः । इह । च । सः । नः । रास्व । अज्यानिम् । रायः । पोषम् । सुवीर्य॑मिति॑ सु—वीर्यम् । संवत्सरीणामिति॑ सं—वत्सरीणाम् । स्वस्तिम् । परमेष्ठी । अधिपतिरित्यधि॑—पतिः । मृत्युः । गन्धर्वः । तस्यं । विश्वम् । अप्सरसः । भुवः । सुक्षितिरिति॑ सु—क्षितिः । सुभूतिरिति सु—भूतिः । भद्रकृदिति॑ भद्र—कृत् । सुवर्वानिति सुवः—वान् । पर्जन्यः । गन्धर्वः । तस्यं । विद्युत इति॑ वि—द्युतः । अप्सरसः । रुचः । दूरेहेतिरिति॑ दूरे—हेतिः । अमृडयः (२) । मृत्युः । गन्धर्वः । तस्यं । प्रजा इति॑ प्र—जाः । अप्सरसः । भीरुवः । चारुः । कृपणकाशीति॑ कृपण—काशी । कामः । गन्धर्वः । तस्यं । आधय इत्या—धयः । अप्सरसः । शोचयन्तीः । नाम । सः । इदम् । ब्रह्म । क्षत्रम् । पातु । ताः । इदम् । ब्रह्म । क्षत्रम् । पान्तु । तस्मै । स्वाहा । ताभ्यः । स्वाहा । सः । नः । भुवनस्य । पते । यस्यं । ते । उपरिं । गृहाः । इह । च । उरु । ब्रह्मणे । अस्मै । क्षत्राय । महिं । शर्म । यच्छ (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

(अथ तृतीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ।)

---

अभ्याताना जयै राष्ट्रभृद्भिः षष्ठे तु वर्णिताः ।

अथ सप्तमे राष्ट्रभृन्मन्त्रा उच्यन्ते । तेषां विनियोगविशेषमग्निकाण्डे सूत्रकारो दर्शयति—"षड्भिः पर्यायैर्द्वादश राष्ट्रभृतो जुहोत्यृताषाडृतधामेति पर्यायमनुद्रुत्य तस्मै स्वाहेति प्रथमाहुतिं जुहोति ताभ्यः स्वाहेत्युत्तरामेवमितरान्पञ्च पर्यायान्विभजति भुवनस्य पत इति पर्यायाणां सप्तम्याहुतीनां त्रयोदश्येतेन व्याख्यातं भुवनस्य पत इति रथमुखे पञ्चाऽऽहुतीर्जुहोति दश वो" इति ।

अत्राऽऽद्येषु षट्पर्यायेषु प्रथमं पर्यायमाह—

ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषध-
योऽप्सरस ऊर्जो नाम स इदं ब्रह्म
क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु
तस्मै स्वाहा ताभ्यः स्वाहा, इति ।

ऋतेन सत्येन सह सर्वमनृतमभिभवतीत्यृताषाट् । ऋतशब्दवाच्यं धाम स्थानं यस्यासावृतधामा । तादृशोऽग्निनामकः कश्चिद्गन्धर्वस्तस्यौषधिदेवता अप्सरसः प्रियभार्याः । ऊर्ज इति तासां नामधेयम् । ऊर्जयन्ति बलवन्तं प्राणवन्तं वा कुर्वन्तीत्यूर्जः । स गन्धर्व इदं ब्रह्म बृहत्क्षत्रं फलसमर्थमिदं कर्म हविर्वा पातु रक्षतु फलपर्यवसन्नं करोतु । ताश्चाप्सरस इदं ब्रह्म क्षत्रं च पान्तु तथा रक्षन्तु । तस्मै गन्धर्वाय स्वाहा हुतमस्तु । ताभ्योऽप्सरोभ्य इदं स्वाहा हुतमस्तु ॥

अथ द्वितीयपर्यायमाह—

सꣳहितो विश्वसामा सूर्यो गन्धर्व-
स्तस्य मरीचयोऽप्सरस आयुवः, इति ।

संधीयते सर्वमनुसंधीयतेऽनेनेति संहितः । विश्वानि सामान्यवसितान्यस्मिन्निति विश्वसामा । तादृशः सूर्यनामकः कश्चिद्गन्धर्वस्तस्य मरीचिदेवताः प्रिया भार्या आयुव इति तासां नामधेयम् । आयन्ति शीघ्रमागच्छन्तीत्यायुवः । नाम स इदं ब्रह्मेत्यादिकं सर्वत्रानुषञ्जनीयम् ॥

अथ तृतीयपर्यायमाह—

---

१ ख. °त्येन प° । २ ख. च । ३ क. तस्मै । ४ क. ध. ङ. च. स्वाहु । ५ क. ख. ङ. स्वाहु ।

( राष्ट्रभृन्मन्त्राभिधानम् )

सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य
नक्षत्राण्यप्सरसो बेकुरयः , इति ।

शोभनं सुम्नं सुखमस्येति सुषुम्नः । सूर्यस्येव रश्मिर्यस्यासौ सूर्यरश्मिः । चन्द्रमोनामकः कश्चिद्गन्धर्वस्तस्य नक्षत्रसदृशानि शरीराणि भार्यास्ताश्च बेकुरिनामिकाः । चित्तविकारहेतुत्वाद्बेकुरय इत्युच्यन्ते ॥

अथ चतुर्थपर्यायमाह—

भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य
दक्षिणा अप्सरसः स्तवाः, इति ।

भुनक्ति पालयति विश्वमिति भुज्युः । पक्षिवदाकाशवशगामित्वात्सुपर्णस्तादृशो यज्ञनामकः कश्चिद्गन्धर्वस्तस्य च दक्षिणारूपा देवता भार्यास्ताश्च स्तूयन्त इति व्युत्पत्त्या स्तवा इत्युच्यन्ते ॥

अथ पञ्चमं पर्यायमाह—

प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्त-
स्यर्क्सामान्यप्सरसो वह्नयः, इति ।

प्रजानां पालकः प्रजापतिः । विश्वं कर्म करणीयं यस्यासौ विश्वकर्मा । तादृशो मनोनामकः कश्चिद्गन्धर्वस्तस्य च ऋक्सामदेवता भार्यास्ताश्च सौन्दर्यं वहन्तीति वह्नय इत्युच्यन्ते ॥

अथ षष्ठं पर्यायमाह—

इषिरो विश्वव्यचा वातो गन्धर्व-
स्तस्याऽऽपोऽप्सरसो मुदाः, इति ।

इष्यमाणवस्तुसंपन्नत्वादिषिरः । विश्वं विशेषेणाञ्चति गच्छतीति विश्वव्यचाः । तादृशो वातनामकः कश्चिद्गन्धर्वस्तस्याब्देवता भार्यास्ताश्च हर्षयुक्तत्वान्मुदा इत्युच्यन्ते ॥

अथ पर्यायेषु सप्तमं त्रयोदशाहुत्यर्थं मन्त्रमाह—

भुवनस्य पते यस्य त उपरि गृहा इह
च । स नो रास्वाज्यानिꣳ रायस्पोषꣳ
सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ।, इति ।

---

क. 'ग्रगा' ।

भुवनस्य सर्वलोकस्य पते हे पालक यस्य तवोपर्यन्तरिक्षद्युलोकयोरिह च पृथिव्यां गृहाः सन्ति स त्वं नोऽस्मभ्यमज्यानिं रास्व वयोहान्यभावं देहि। तथा रायस्पोषं धनपुष्टिं सुवीर्यं शोभनपुत्रं संवत्सरीणां, स्वस्तिं संवत्सरजीवनपरिमितां समृद्धिं च देहि ॥

अथोत्तरस्मिन्पर्यायपञ्चके प्रथमं पर्यायमाह—

परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य
विश्वमप्सरसो भुवः, इति ।

परमे सर्वोत्तमस्थाने तिष्ठतीति परमेष्ठी । अधिकत्वेन फलपाताऽधिपतिः। तादृशो मृत्युनामकः कश्चिद्गन्धर्वस्तस्य विश्वाभिमानिन्यो देवता भार्यास्ताश्च भवन्ति सर्वदा वर्तन्त इति भुव इत्युच्यन्ते ॥

अथ द्वितीयं पर्यायमाह—

सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो
गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचः,इति ।

शोभना क्षितिर्भूमिर्यस्यासौ सुक्षितिः समीचीननिवासस्थान इत्यर्थः । शोभना भूतिरैश्वर्यं यस्यासौ सुभूतिः। भद्रं कल्याणं यजमानाय करोतीति भद्रकृत् । सुवः स्वाधीनः स्वर्गलोकोऽस्यास्तीति सुवर्वान् । तादृशः पर्जन्यनामकः कश्चिद्गन्धर्वस्तस्य च विद्युद्देवता भार्यास्ताश्च दीप्यमानत्वाद्रुच इत्युच्यन्ते ॥

अथ तृतीयं पर्यायमाह—

दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य
प्रजा अप्सरसो भीरुवः, इति ।

दूरेऽप्यवस्थितस्य प्रहारसाधनं हेतिर्यस्यासौ दूरेहेतिः । नामश्रवणमात्रेण सुखनिवर्तकत्वादमृडयस्तादृशो मृत्युनामकः कश्चिद्गन्धर्वस्तस्य प्रजाभिमानिदेवता भार्यास्ताश्च बिभ्यति मृत्योरिति भीरुव इत्युच्यन्ते ॥

अथ चतुर्थं पर्यायमाह—

चारुः कृपणकाशी कामो गन्धर्वस्त-
स्याऽऽधयोऽप्सरसः शोचयन्तीर्नाम स
इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं
पान्तु तस्मै स्वाहा ताभ्यः स्वाहा. इति ।

( राष्ट्रभृन्मन्त्राणां काम्यप्रयोगाभिधानम् )

रमणीयचरणोपेतत्वाद्रमणीयशरीरत्वाद्वा चारुः । कृपणेष्विन्द्रियार्थेषु प्रकाशयति मनो दीपयतीति कृपणकाशी । तादृशः कामनामकः कश्चिद्गन्धर्वस्तस्य विषयाभिलाषनिमित्तचित्तक्लेशाभिमानिदेवता भार्यास्ताश्चापेक्षितविषयप्राप्त्यभावेन जनाञ्शोकयुक्तान्कुर्वन्तीति शोचयन्तीरित्युच्यन्ते । नाम स इदं ब्रह्मेत्यादेस्तु सर्वत्रानुषङ्गद्योतनाय पुनः पाठः ।

अथात्र पञ्चमं पर्यायरूपं द्वाविंशाहुतिसाधनं मन्त्रमाह—

स नो भुवनस्य पते यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ ॥, इति ॥

भुवनस्य सर्वलोकस्य हे पते पालक यस्य तवोपरितनलोकद्वये पृथिव्यां च गृहाः सन्ति स त्वं नोऽस्मभ्यमुरु विपुलं शर्म सुखं यच्छ । तथैवास्मै ब्रह्मणे ब्राह्मणजातियुक्ताय क्षत्राय समर्थाय च महि शर्म यच्छ महत्सुखं देहि ॥

अत्र विनियोगसंग्रहः—

अथ त्रयोदश जयाश्चित्तं चेत्यादयः श्रुताः ।
अग्निरभ्यातानमन्त्रा अष्टादश यथाश्रुताः ॥
ऋता राष्ट्रभृतस्तद्वद्द्वाविंशतिरुदीरिताः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणैवास्मै राष्ट्रमव रुन्धे राष्ट्रमेव भवत्यात्मने होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमव रुन्धे वसिष्ठः समानानां भवति ग्रामकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्र१

सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानव रुन्धे ग्रामी (१) एव भवत्यधिदेवने जुहोत्यधिदेवन एवास्मै सजातानव रुन्धे त एनमवरुद्धा उप तिष्ठन्ते रथमुख ओजस्कामस्य होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवास्मा ओजोऽव रुन्ध ओजस्व्येव भवति यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या यावन्तोऽस्य रथाः स्युस्तान्ब्रूयाद्युङ्ग्ध्वमिति राष्ट्रमेवास्मै युनक्ति (२) आहुतयो वा एतस्याक्लृप्ता यस्य राष्ट्रं न कल्पते स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभि जुहुयादाहुतीरेवास्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनु कल्पते सङ्ग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे खलु वा एते व्यायच्छन्ते ये सङ्ग्रामꣳ संयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ सङ्ग्रामं मान्धुक इध्मः (३) भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रति वेष्टयन्ति य उन्माद्येत्तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतस्तस्मै

स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनांञ्छ-
मयति नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष
इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व
एवैनान् (४) आयतने शमयत्यभिचरता
प्रतिलोमꣳ होतव्याः प्राणानेवास्य प्रतीचः
प्रति यौति तं ततो येन केन च स्तृणुते
स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै
निर्ऋतिगृहीतं निर्ऋतिगृहीत एवैनं निर्ऋत्या
ग्राहयति यद्वाचः क्रूरं तेन वषट्करोति वाच
एवैनं क्रूरेण प्र वृश्चति ताजगार्तिमार्छति
यस्य कामयेतान्नाद्यम् (५) आ ददीयेति
तस्य सभायामुत्तानो निपद्य भुवनस्य पत
इति तृणानि सं गृह्णीयात्प्रजापतिर्वै भुवनस्य
पतिः प्रजापतिनैवास्यान्नाद्यमा दत्त इदमह-
ममुष्याऽऽमुष्यायणस्यान्नाद्यꣳ हरामीत्याहान्ना-
द्यमेवास्य हरति षड्भिर्हरति षड्वा ऋतवः
प्रजापतिनैवास्यान्नाद्यमादायर्तवोऽस्मा अनु प्र
यच्छन्ति (६) यो ज्येष्ठबन्धुरपभूतः स्यात्तꣳ
स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा
तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं

वर्ष्मणैवैनं वर्ष्म समानानां गमयति चतुःश- रावो भवति दिक्ष्वेव प्रति तिष्ठति क्षीरे भवति रुचमेवास्मिन्दधात्युद्धरति शृतत्वाय सर्पिष्वा- न्भवति मेध्यत्वाय चत्वार आर्षेयाः प्राश्नन्ति दिशामेव ज्योतिंषि जुहोति ( ७ ) ॥

( ग्रामी युनक्तीध्मः स्व एवैनाननाद्यं यच्छन्त्येकान्नपञ्चाशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः । )

---

'' राष्ट्रकामायेति राष्ट्र—कामाय । होतव्याः । राष्ट्र- म् । वै । राष्ट्रभृत इति राष्ट्र—भृतः । राष्ट्रेण । एव । अस्मै । राष्ट्रम् । अवेति । रुन्धे । राष्ट्रम् । एव । भवति । आत्मने । होतव्याः । राष्ट्रम् । वै । राष्ट्र- भृत इति राष्ट्र—भृतः । राष्ट्रम् । प्रजेति प्र—जा । राष्ट्रम् । पशवः । राष्ट्रम् । यत् । श्रेष्ठः । भवति । राष्ट्रेण । एव । राष्ट्रम् । अवेति । रुन्धे । वसिष्ठः । समानानाम् । भवति । ग्रामकामायेति ग्राम—का- माय । होतव्याः । राष्ट्रम् । वै । राष्ट्रभृत इति रा- ष्ट्र—भृतः । राष्ट्रम् । सजाता इति स—जाताः ।

राष्ट्रेण। एव। अस्मै। राष्ट्रम्। सजातानिति स-जातान्। अवेति। रुन्धे। ग्रामी (१)। एव। भवति। अधिदेवन इत्यधि-देवने। जुहोति। अधिदेवन इत्यधि-देवने। एव। अस्मै। सजातानिति स-जातान्। अवेति। रुन्धे। ते। एनम्। अवरुद्धा इत्यव-रुद्धाः। उपेति। तिष्ठन्ते। रथमुख इति रथ-मुखे। ओजस्कामस्येत्योजः-कामस्य। होतव्याः। ओजः। वै। राष्ट्रभृत इति राष्ट्र-भृतः। ओजः। रथः। ओजसा। एव। अस्मै। ओजः। अवेति। रुन्धे। ओजस्वी। एव। भवति। यः। राष्ट्रात्। अपभूत इत्यप-भूतः। स्यात्। तस्मै। होतव्याः। यावन्तः। अस्य। रथाः। स्युः। तान्। ब्रूयात्। युङ्ग्ध्वम्। इति। राष्ट्रम्। एव। अस्मै। युनक्ति (२)। आहुतय इत्या-हुतयः। वै। एतस्य। अक्लृप्ताः। यस्य। राष्ट्रम्। न। कल्पेत। स्वरथस्येति स्व-रथस्य। दक्षिणम्। चक्रम्। प्रवृह्येति प्र-वृह्य। नाडीम्। अभीति। जुहुयात्। आहुतीरित्या-हुतीः। एव। अस्य। कल्पयति। ताः। अस्य। कल्पमानाः। राष्ट्रम्। अन्विति। कल्पते। संग्राम इति सं-ग्रामे। संयत्त इति सं-यत्ते। हो-

तव्यां । राष्ट्रम् । वै । राष्ट्रभृत इति राष्ट्र—भृतः । राष्ट्रे । खलु । वै । एते । व्यायच्छन्त इति वि—आयच्छन्ते । ये । संग्राममिति सं—ग्रामम् । संयन्तीति सं—यन्ति । यस्य । पूर्वस्य । जुह्वति । सः । एव । भवति । जयति । तम् । संग्राममिति सं—ग्रामम् । मान्धुकः । इध्मः ( ३ ) । भवति । अङ्गाराः । एव । प्रतिवेष्टमाना इति प्रति—वेष्टमानाः । अमित्राणाम् । अस्य । सेनाम् । प्रतीति । वेष्टयन्ति । यः । उन्माद्येदित्युत्—माद्येत् । तस्मै । होतव्याः । गन्धर्वाप्सरस इति गन्धर्व—अप्सरसः । वै । एतम् । उदिति । मादयन्ति । यः । उन्माद्यतीत्युत्—माद्यति । एते । खलु । वै । गन्धर्वाप्सरस इति गन्धर्व—अप्सरसः । यत् । राष्ट्रभृत इति राष्ट्र—भृतः । तस्मै । स्वाहा । ताभ्यः । स्वाहा । इति । जुहोति । तेन । एव । एनान् । शमयति । नैयग्रोधः । औदुम्बरः । आश्वत्थः । प्लाक्षः । इति । इध्मः । भवति । एते । वै । गन्धर्वाप्सरसामिति गन्धर्व—अप्सरसाम् । गृहाः । स्वे । एव । एनान् ( ४ ) । आयतन इत्या—यतने । शमयति । अभिचरतेत्यभि—चरता । प्रतिलोममिति प्रति—लोमम् । होतव्याः । प्राणा-

निर्ति प्र—अनान् । एव । अस्य । प्रतीचः । प्रतीति । यौति । तम् । ततः । येन । केन । च । स्तृणुते । स्वकृत इति स्व—कृते । इरिणे । जुहोति । प्रदर इति प्र—दरे । वा । एतत् । वै । अस्यै । निर्ऋतिगृहीतमिति निर्ऋति—गृहीतम् । निर्ऋतिगृहीत इति निर्ऋति—गृहीते । एव । एनम् । निर्ऋत्येति निः—ऋत्या । ग्राहयति । यत् । वाचः । क्रूरम् । तेन । वषट् । करोति । वाचः । एव । एनम् । क्रूरेण । प्रेति । वृश्चति । ताजक् । आर्तिम् । एति । ऋच्छति । यस्य । कामयेत । अन्नाद्यमित्यन्न—अद्यम् (५) । एति । ददीय । इति । तस्य । सभायाम् । उत्तान इत्युत्—तानः । निपद्येति नि—पद्य । भुवनस्य । पते । इति । तृणानि । समिति । गृह्णीयात् । प्रजापतिरिति प्रजा—पतिः । वै । भुवनस्य । पतिः । प्रजापतिनेति प्रजा—पतिना । एव । अस्य । अन्नाद्यमित्यन्न—अद्यम् । एति । दत्ते । इदम् । अहम् । अमुष्य । आमुष्यायणस्य । अन्नाद्यमित्यन्न—अद्यम् । हरामि । इति । आह । अन्नाद्यमित्यन्न—अद्यम् । एव । अस्य । हरति । षड्भिरिति षट्—भिः । हरति । षट् । वै । ऋतवः । प्रजाप-

तिनेति प्रजा—पतिना । एव । अस्य । अन्नाद्यमित्यन्न—अद्यम् । आदायेत्या—दाय । ऋतवः । अस्मै । अनु । प्रेति । यच्छन्ति (६)। यः । ज्येष्ठबन्धुरिति ज्येष्ठ—बन्धुः । अपभूत इत्यप—भूतः । स्यात् । तम् । स्थले । अवसाय्येत्यव—साय्य । ब्रह्मौदनमिति ब्रह्म—ओदनम् । चतुःशरावमिति चतुः—शरावम् । पक्त्वा । तस्मै । होतव्याः । वर्ष्म । वै । राष्ट्रभृत इति राष्ट्र—भृतः । वर्ष्म । स्थलम् । वर्ष्मणा । एव । एनम् । वर्ष्म । समानानाम् । गमयति । चतुःशराव इति चतुः—शरावः । भवति । दिक्षु । एव । प्रतीति । तिष्ठति । क्षीरे । भवति । रुचम् । एव । अस्मिन् । दधाति । उदिति । हरति । शृतत्वायेति शृत—त्वाय । सर्पिष्वान् । भवति । मेध्यत्वायेति मेध्य—त्वाय । चत्वारः । आर्षेयाः । प्रेति । अश्नन्ति । दिशाम् । एव । ज्योतिषि । जुहोति (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(अथ तृतीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ।)

---

अनुवाके सप्तमेऽस्मिन्नुक्ता राष्ट्रभृतोऽखिलाः ।

(राष्ट्रभृन्मन्त्राणां काम्यप्रयोगाभिधानम्)

अथाष्टमे तेषां काम्याः प्रयोगा उच्यन्ते ।

तत्रैकं प्रयोगं विधत्ते—

राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणै-
वास्मै राष्ट्रमव रुन्धे राष्ट्रमेव भवति, इति ।

य एते पूर्वानुवाकोक्ता राष्ट्रभृत्संज्ञका मन्त्रास्तेषां राष्ट्रप्राप्तिहेतुत्वाद्राष्ट्रमित्युपचर्यते । अतस्तन्मन्त्रहोमलक्षणेन राष्ट्रेणैव यजमानार्थमध्वर्युर्भूमिविशेषरूपं राष्ट्रं संपादयति । स च यजमानो राष्ट्रं प्राप्नोत्येव । अतो राष्ट्रप्राप्तिकामयजमानार्थमेते मन्त्रा होतव्याः ॥

अथ प्रजापश्वादिनाऽऽत्मोत्कर्षार्थं तैरेव मन्त्रैर्होमं विधत्ते—

आत्मने होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा
राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव
राष्ट्रमव रुन्धे वसिष्ठः समानानां भवति, इति ।

मन्त्राणां पूर्ववत्साधनत्वाद्राष्ट्रत्वम् । सत्यपि भूमिविशेषरूपे राष्ट्रे प्रजापशुश्रैष्ठ्यानामभावे सति भोगासंभवाद्भूमिवद्भोगहेतुत्वेन प्रजादीनामपि राष्ट्रत्वम् । अतो राष्ट्ररूपमन्त्रेण राष्ट्रेण प्रजादिरूपात्मोत्कर्षरूपं राष्ट्रमवरुन्धे । तथा सति समानानामन्येषां स्वयमेवातिशयेन निवासहेतुर्भवति ॥

अथ ग्रामप्राप्तये होमं विधत्ते—

ग्रामकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो
राष्ट्रꣳ सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ स-
जातानव रुन्धे ग्राम्येव भवति, इति ।

स्वेन सहोत्पन्ना ज्ञातय एकग्रामनिवासिनश्च सजातास्तेषु सर्वेषु सत्सु राष्ट्रं संपूर्णं भवतीति तेषां राष्ट्रत्वमतो मन्त्ररूपेण राष्ट्रेण सजातरूपं राष्ट्रमवरुन्धे ग्रामस्वामी भवत्येव ॥

तस्य होमस्य देशविशेषं विधत्ते—

अधिदेवने जुहोत्यधिदेवन एवास्मै सजाता-
नव रुन्धे त एनमवरुद्धा उप तिष्ठन्ते, इति ।

[illegible] पूतेन क्रीडन्त्यस्मिन्स्थाने इत्यधिदेवनं तत्र होमे सति

तस्मिन्नेव स्थाने ये सजाताः समागतास्तान्सर्वानधीनान्करोति । ते चाधीनाः सन्त एव सेवन्ते ॥

अथ बललाभाय होमं विधत्ते—

रथमुख ओजस्कामस्य होतव्या ओजो
वै राष्ट्रभृत ओजो रथ ओजसैवास्मा
ओजोऽव रुन्ध ओजस्व्येव भवति , इति ।

रथस्य यदीषाग्रं तदग्नेरुपरि धारयित्वा तत्र जुहुयात् । राष्ट्रभृन्मन्त्राणां रथस्य च क्रतुहेतुत्वादोजस्त्वम् । अतस्तदुभयरूपेणौजसैव यजमानस्य बलमधीनं करोति । ततो बलवान्भवत्येव ॥

अथ राष्ट्राद्भ्रष्टस्य तत्प्राप्तये होमं विधत्ते—

यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या
यावन्तोऽस्य रथाः स्युस्तान्ब्रूयाद्यु-
ङ्ग्ध्वमिति राष्ट्रमेवास्मै युनक्ति, इति ।

अस्य राष्ट्रभ्रष्टस्य सतोऽपि यावन्तो रथाः सन्ति तान्सर्वानश्वैर्योजयध्वमिति प्रैषं ब्रूयात् । अनेन प्रैषेण होमेन चास्मै भ्रष्टाय राष्ट्रं संपादयति ॥

यदा लब्धमपि राष्ट्रमिष्टसाधनसमर्थं न भवति तदा प्रयोगविशेषं विधत्ते—

आहुतयो वा एतस्याक्लृप्ता यस्य राष्ट्रं न
कल्पते स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडी-
मभि जुहुयादाहुतीरेवास्य कल्पयति ता
अस्य कल्पमाना राष्ट्रमनु कल्पते, इति ।

न कल्पते भोगे क्षमं यस्य न भवति, एतस्य पूर्वा आहुतयः स्वकार्यक्षमा न भवन्ति तदानीमयं स्वकीयरथस्य यद्दक्षिणं चक्रं तदग्नेरुपरि धारयित्वा तस्य चक्रस्य रन्ध्राभिमुखत्वेन जुहुयात् । तदानीमस्याऽऽहुतीः कल्पयत्येव स्वकार्यक्षमा एव करोति । ताश्च क्षमाः सत्यो राष्ट्रं भोगे क्षमं कुर्वन्ति । अतस्ता आहुतीरनु राष्ट्रं क्षमं भवतीत्युच्यते ॥

अथ युद्धे प्रवृत्ते जयार्थिनो होमं विधत्ते—

सङ्ग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे

खलु वा एते व्यायच्छन्ते ये संग्रामꣳ संयन्ति यस्य पूर्वस्य जुहोति स एव भवति जयति तꣳ संग्रामम्, इति।

ये युद्धं प्राप्नुवन्ति एते राष्ट्रे निमित्तभूते सति कलहं कुर्वन्ति । तेषां च कलहं कुर्वतां मध्ये प्रथमं होमे प्रवृत्तस्य यस्यैता राष्ट्रभृतो जुहोति स एव समर्थो भवति न त्वन्यः । समर्थत्वाच्च तं संग्रामं जयति ॥

श्रौताग्निं प्रज्वलयितुं काष्ठविशेषं विधत्ते—

मान्धुक इध्मो भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रति वेष्टयन्ति, इति।

मधूकवृक्षस्य संबन्धी काष्ठविशेषो मान्धुकः । तेन प्रत्यमित्रं पृथगग्निमुपसमाधाय जुहुयात् । तत्र मधूककाष्ठजन्या येऽङ्गारास्त एवास्य यजमानस्य विरोधिपुरुषाणां सेनां प्रत्येकं वेष्टयन्ति । परकीये कटकेऽग्निबाधा जायते । पुरुषाणां वा शरीरेषु ज्वरादिसंतापो जायत इत्यर्थः ॥

अथोन्मादपरिहाराय होमं विधत्ते—

य उन्माद्येत्तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनाञ्छमयति, इति।

यः पुरुष उन्मत्तो भवत्येतं गन्धर्वाप्सरस एवोन्मत्तं कुर्वन्ति । राष्ट्रभृन्मन्त्राश्च गन्धर्वाप्सरसस्तद्देवत्यत्वाद्गन्धर्वानुद्दिश्य तस्मै स्वाहेति अप्सरस उद्दिश्य ताभ्यः स्वाहेति जुहुयात् । तेन होमेनोभयविधानुन्मादयितॄञ्शान्तान्करोति ॥

अत्रापि पूर्ववदग्निं प्रज्वालयितुं काष्ठविशेषान्विकल्पितान्दर्शयति—

नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व एवैनानायतने शमयति, इति।

एते व्याख्याताः । वेदवाक्यो लोकप्रसिद्धिं दर्शयति ॥

( देविकाख्यपञ्चविधहविरुत्कर्षकरणपूर्वकबहुविधकाम्यप्रयोगाभिधानम् )

चतुर्दिक्संबन्धिवह्निस्थानीयाश्चत्वारो ब्राह्मणा अतस्तैः प्राशितमग्नावेव हुतं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

देविका निर्वपेत्प्रजाकामश्छन्दांꣳसि वै
देविकाश्छन्दांꣳसीव खलु वै प्रजाश्छन्दोभिरे-
वास्मै प्रजाः प्र जनयति प्रथमं धातारं करोति
मिथुनी एव तेन करोत्यन्वेवास्मा अनुमतिर्म-
न्यते राते राका प्र सिनीवाली जनयति प्रजा-
स्वेव प्रजातासु कुह्वा वाचं दधात्येता एव
निर्वपेत्पशुकामश्छन्दांꣳसि वै देविकाश्छदांꣳ-
सि ( १ ) इव खलु वै पशवश्छन्दोभिरेवास्मै
पशून्प्र जनयति प्रथमं धातारं करोति प्रैव तेन
वापयत्यन्वेवास्मा अनुमतिर्मन्यते राते राका
प्र सिनीवाली जनयति पशूनेव प्रजातान्कुह्वा
प्रति ष्ठापयत्येता एव निर्वपेद्ग्रामकामश्छन्दांꣳ-
सि वै देविकाश्छन्दांꣳसीव खलु वै ग्रामश्छ-
न्दोभिरेवास्मै ग्रामम् ( २ ) अव रुन्धे मध्य-
तो धातारं करोति मध्यत एवैनं ग्रामस्य दधा-

(देविकाख्यपञ्चविधहविरुत्कर्षकरणपूर्वकबहुविधकाम्यप्रयोगाभिधानम्)

त्येता एव निर्वपेज्ज्योगामयावी छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतमभि मन्यन्ते यस्य ज्योगामयति छन्दोभिरेवैनमगदं करोति मध्यतो धातारं करोति मध्यतो वा एतस्याक्लृप्तं यस्य ज्योगामयति मध्यत एवास्य तेन कल्पयत्येता एव निः (३) वपेद्यं यज्ञो नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोप नमन्ति यं यज्ञो नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं यज्ञो नमत्येता एव निर्वपेदीजानश्छन्दाꣳसि वै देविका यातयामानीव खलु वा एतस्य छन्दाꣳसि य ईजान उत्तमं धातारं करोति (४) उपरिष्टादेवास्मै छन्दाꣳस्ययातयामान्यव रुन्ध उपैनमुत्तरो यज्ञो नमत्येता एव निर्वपेद्यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छदाꣳसि खलु वा एतं नोप नमन्ति यं मेधा नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नमत्येता एव निर्वपेत् (५) रुक्कामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक्छन्दो-

भिरेवास्मिन्रुचं दधाति क्षीरे भवन्ति रुचमे-
वास्मिन्दधाति मध्यतो धातारं करोति मध्यत
एवैनꣳ रुचो दधाति गायत्री वा अनुमतिस्त्रि-
ष्टुग्राका जगती सिनीवाल्यनुष्टुप्कुहूर्धाता वष-
ट्कारः पूर्वपक्षो राकाऽपरपक्षः कुहूरमावास्या
सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाताऽष्टौ
(६) वसवोऽष्टाक्षरा गायत्र्येकादश रुद्रा
एकादशाक्षरा त्रिष्टुब्द्वादशाऽऽदित्या द्वादशा-
क्षरा जगती प्रजापतिरनुष्टुब्धाता वषट्कार
एतद्वै देविकाः सर्वाणि च छन्दाꣳसि सर्वाश्च
देवता वषट्कारस्ता यत्सह सर्वा निर्वपेदीश्वरा
एनं प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयं
निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं न प्र दहन्त्य-
थो यस्मै कामाय निरुप्यन्ते तमेवाऽऽभिरु-
पाऽऽप्नोति (७) ॥

( शुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसि ग्रामं कल्पयत्येता एव निरुप्तं धातारं करोति मेधा नमत्येता एव निर्वपेदष्टौ दहन्ति नव च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

(देविकाख्यपञ्चविधहविरुत्कर्षकरणपूर्वकबहुविधकाम्यप्रयोगाभिधानम्)

(अथ तृतीयाष्टके चतुर्थप्रपाठके नवमोऽनुवाकः ९)

---

देविकाः । निरिति । वपेत् । प्रजाकाम इति प्रजा—काम: । छन्दांꣳसि । वै । देविकाः । छन्दांꣳसि । इव । खलु । वै । प्रजा इति प्र—जाः । छन्दोभिरिति छन्दः—भिः । एव । अस्मै । प्रजा इति प्र—जाः । प्रेति । जनयति । प्रथमम् । धातारम् । करोति । मिथुनी । एव । तेन । करोति । अन्विति । एव । अस्मै । अनुमतिरित्यनु—मतिः । मन्यते । राते । राका । प्रेति । सिनीवाली । जनयति । प्रजास्विति प्र—जासु । एव । प्रजातास्विति प्र—जातासु । कुहा । वाचम् । दधाति । एताः । एव । निरिति । वपेत् । पशुकाम इति पशु—कामः । छन्दांꣳसि । वै । देविकाः । छन्दांꣳसि (१) । इव । खलु । वै । पशवः । छन्दोभिरिति छन्दः—भिः । एव । अस्मै । पशून् । प्रेति । जनयति । प्रथमम् । धातारम् । करोति । प्रेति । एव । तेन । वापयति । अन्विति । एव । अस्मै । अनुमतिरित्यनु—मतिः । मन्यते । राते । राका । प्रेति । सिनीवाली । जनयति । पशून् । एव । प्रजातानिति प्र—जातान् । कुहा ।

प्रतीति। स्थापयति। एताः । एव। निरिति।
वपेत्। ग्रामकाम इति ग्राम—कामः। छन्दांसि।
वै। देविकाः। छन्दांसि । इव । खलु। वै।
ग्रामः। छन्दोभिरिति छन्दः—भिः। एव। अस्मै।
ग्रामम् (२)। अवेति। रुन्धे। मध्यतः। धाता-
रम्। करोति। मध्यतः। एव। एनम्। ग्रामस्य।
दधाति। एताः। एव। निरिति। वपेत्। ज्योगा-
मयावीति ज्योक्—आमयावी। छन्दांसि। वै।
देविकाः। छन्दांसि। खलु। वै। एतम्। अभीति।
मन्यन्ते। यस्य। ज्योक्। आमयति। छन्दोभिरिति
छन्दः—भिः। एव। एनम्। अगदम्। करोति।
मध्यतः। धातारम्। करोति। मध्यतः। वै। एत-
स्य। अक्लृप्तम्। यस्य। ज्योक्। आमयति। मध्य-
तः। एव। अस्य। तेन। कल्पयति। एताः। एव।
निरिति (३)। वपेत्। यम्। यज्ञः। न। उप-
नमेदित्युप—नमेत्। छन्दांसि। वै। देविकाः।
छन्दांसि। खलु। वै। एतम्। न। उपेति।
नमन्ति। यम्। यज्ञः। न। उपनमतीत्युप—नमति।
प्रथमम्। धातारम्। करोति। मुखतः। एव। अस्मै।
छन्दांसि। दधाति। उपेति। एनम्। यज्ञः।

नमति । एताः । एव । निरिति । वपेत् । ईजानः ।
छन्दांसि । वै । देविकाः । यातयामानीति यात—
यामानि । इव । खलु । वै । एतस्य । छन्दांसि ।
यः । ईजानः । उत्तममित्युत्—तमम् । धातारम् ।
करोति ( ४ ) । उपरिष्टात् । एव । अस्मै । छन्दां-
सि । अयातयामानीत्ययात—यामानि । अवेति ।
रुन्धे । उपेति । एनम् । उत्तर इत्युत्—तरः । यज्ञः ।
नमति । एताः । एव । निरिति । वपेत् । यम् ।
मेधा । न । उपनमेदित्युप—नमेत् । छन्दांसि ।
वै । देविकाः । छन्दांसि । खलु । वै । एतम् ।
न । उपेति । नमन्ति । यम् । मेधा । न । उपन-
मतीत्युप—नमति । प्रथमम् । धातारम् । करोति ।
मुखतः । एव । अस्मै । छन्दांसि । दधाति । उपेति ।
एनम् । मेधा । नमति । एताः । एव । निरिति ।
वपेत् (५) । रुक्काम इति रुक्—कामः । छन्दांसि ।
वै । देविकाः । छन्दांसि । इव । खलु । वै ।
रुक् । छन्दोभिरिति छन्दः—भिः । एव । अस्मिन् ।
रुचम् । दधाति । क्षीरे । भवन्ति । रुचम् । एव ।
अस्मिन् । दधति । मध्यतः । धाता-
रम् । करोति । मध्यतः । एव । एनम् । रुचः ।

दधाति । गायत्री । वै । अनुमतिरित्यनु—मतिः । त्रिष्टुक् । राका । जगती । सिनीवाली । अनुष्टुबित्यनु—स्तुप् । कुहूः । धाता । वषट्कार इति वषट्—कारः । पूर्वपक्ष इति पूर्व—पक्षः । राका । अपरपक्ष इत्यपर—पक्षः । कुहूः । अमावास्येत्यमा—वास्या । सिनीवाली । पौर्णमासीति पौर्ण—मासी । अनुमतिरित्यनु—मतिः । चन्द्रमाः । धाता । अष्टौ (६) । वसवः । अष्टाक्षरेत्यष्टा—अक्षरा । गायत्री । एकादश । रुद्राः । एकादशाक्षरेत्येकादश—अक्षरा । त्रिष्टुप् । द्वादश । आदित्याः । द्वादशाक्षरेति द्वादश—अक्षरा । जगती । प्रजापतिरिति प्रजा—पतिः । अनुष्टुबित्यनु—स्तुप् । धाता । वषट्कार इति वषट्—कारः । एतत् । वै । देविकाः । सर्वाणि । च । छन्दांसि । सर्वाः । च । देवताः । वषट्कार इति वषट्—कारः । ताः । यत् । सह । सर्वाः । निर्वपेदिति निः—वपेत् । ईश्वराः । एनम् । प्रदह इति प्र—दहः । द्वे इति । प्रथमे इति । निरुप्येति निः—उप्य । धातुः । तृतीयम् । निरिति । वपेत् । तथो इति । एव । उत्तरे इत्युत्—तरे । निरिति । वपेत् । तथा । एनम् । न । प्रेति । दहन्ति । यथो इति ।

यस्मै । कामाय । निरुप्यन्त इति निः—उप्यन्ते ।
तम् । एव । आभिः । उपेति । आप्नोति (७) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके,
चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ तृतीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः । )

---

अष्टमे राष्ट्रभृद्धोमास्तत्तत्कामाय वर्णिताः ।

अथ नवमे देविकाख्यानां राजसूयप्रकरणोत्पन्नानां धात्रे पुरोडाशमित्यादीनां पञ्चहविषामुत्कर्षं कृत्वा बहुविधकाम्यप्रयोगो निरूप्यते ।

तत्रैकं प्रयोगं विधत्ते—

देविका निर्वपेत्प्रजाकामश्छन्दाꣳसि वै
देविकाश्छन्दाꣳसीव खलु वै प्रजाश्छ-
न्दोभिरेवास्मै प्रजाः प्र जनयति, इति ।

दीव्यन्त्यपेक्षितं फलविशेषं प्रकाशयन्तीति धात्रादयः पञ्चेष्टयो देविकाः । अनुमत्यादयः स्त्रीरूपत्वाद्देव्यस्तदीयत्वादेता देविकाः । गायत्री वा अनुमतिरित्यादिच्छन्दोरूपत्वमनुमत्यादीनामुच्यते । तद्द्वारा देविका अपि छन्दांस्येव । यथा छन्दांसि फलहेतुत्वात्सुखकराणि एवं प्रजा अपि सुखहेतुत्वाच्छन्दःसमानाः । अतो देविकारूपैश्छन्दोभिरेव यजमानार्थं प्रजा उत्पादयति ॥

धात्रादीनां पञ्चानां प्रजोत्पत्तौ दृश्यगुणयोगं प्रशंसति—

प्रथमं धातारं करोति मिथुनी एव तेन
करोत्यन्वेवास्मा अनुमतिर्मन्यते राते
राका प्र सिनीवाली जनयति प्रजास्वेव
प्रजातासु कुह्वा वाचं दधाति , इति ।

पञ्चानां देवानां मध्ये धातारं प्रथमं करोतीति यत्तेन यजमानं स्वपत्न्या सह मिथुनी करोत्येव । अनुमतिरस्मै यजमानाय तन्मिथुनीकरणमनुमन्यते

एव । राका प्रजां ददाति । सिनीवाली गर्भस्थां प्रजामुत्पादयति । उत्पन्नासु प्रजासु कुहूदेवताद्वारेण वाचं दधाति संभाषणाभ्यासं करोतीत्यर्थः ॥

अथ फलान्तराय विधत्ते—

एता एव निर्वपेत्पशुकामश्छन्दाꣳसि वै देवि-
काश्छन्दाꣳसीव खलु वै पशवश्छन्दोभि-
रेवास्मै पशून्प्र जनयति प्रथमं धातारं करोति
प्रैव तेन वापयत्यन्वेवास्मा अनुमतिर्मन्यते
राते राका प्र सिनीवाली जनयति पशू-
नेव प्रजातान्कुह्वा प्रति ष्ठापयति , इति ।

प्रथमेन धात्रा गवादिषु बीजावापः संपद्यते । प्रजातानां पशूनां तृणोदकादिपोषणेन प्रतिष्ठापनं कुह्वा क्रियते । शेषं पूर्ववत् ॥

फलान्तराय विधत्ते—

एता एव निर्वपेद्ग्रामकामश्छन्दाꣳसि वै देवि-
काश्छन्दाꣳसीव खलु वै ग्रामश्छन्दोभिरे-
वास्मै ग्राममव रुन्धे मध्यतो धातारं
करोति मध्यत एवैनं ग्रामस्य दधाति, इति ।

अनुमतिराकाभ्यामूर्ध्वं सिनीवालीकुहूभ्यामधस्तान्मध्यं तत्र धातारं स्थापयेत् । तेनैनं यजमानं ग्रामस्य मध्य एवाऽऽधिपत्ये स्थापयति ॥

फलान्तराय विधत्ते—

एता एव निर्वपेज्ज्योगामयावी छन्दाꣳसि
वै देविकाश्छन्दाꣳसि खलु वा एतमभि
मन्यन्ते यस्य ज्योगामयति छन्दोभिरेवै-
नमगदं करोति मध्यतो धातारं करोति
मध्यतो वा एतस्याक्लृप्तं यस्य ज्योगाम-
यति मध्यत एवास्य तेन कल्पयति, इति ।

यस्य पुरुषस्य ज्योगिचरकालमामयति, व्याधिबाधा भवतीत्यर्थः [illegible]

भिमन्यन्तेऽभिक्रुध्यन्ति । अतो देविकानिर्वापतुष्टैश्छन्दोभिरेवैनं रोगरहितं करोति । अत्रापि पूर्ववद्धातारं मध्यतः कुर्यात् । यस्य दीर्घव्याधिस्तस्योदरमध्ये यत्किंचिदन्नृतमसामर्थ्यं भवति । अतस्तेन धातुर्मध्यस्थापनेनास्य रोगिण उदरमध्य एव कल्पयति सामर्थ्यं जनयति ॥

अथ ज्योतिष्टोमादियज्ञप्राप्तये विधत्ते—

एता एव निर्वपेद्यं यज्ञो नोपनमेच्छ-
न्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा
एतं नोप नमन्ति यं यज्ञो नोपनमति
प्रथमं धातारं करोति मुखत एवास्मै
छन्दाꣳसि दधात्युपैनं यज्ञो नमति, इति ।

यं पुरुषं केनापि विघ्नेन यज्ञो न प्राप्नोति, एनं(तं) पुरुषं यज्ञसाधनानि च्छन्दांस्येव प्रथमं न प्राप्नुवन्ति । तत्र धातुः प्रथमं स्थापने सत्यनुकूलत्वेन प्रथमत एव यजमानार्थं छन्दांसि धृतानि भवन्ति । छन्दःस्वनुकूलेषु सत्सु यज्ञ एनं प्राप्नोति ॥

प्राप्तयज्ञस्योत्तरयज्ञसिद्ध्यर्थं विधत्ते—

एता एव निर्वपेदीजानश्छन्दाꣳसि वै
देविका यातयामानीव खलु वा एतस्य
छन्दाꣳसि य ईजान उत्तमं धातारं
करोत्युपरिष्टादेवास्मै छन्दाꣳस्ययातयामा-
न्यव रुन्ध उपैनमुत्तरो यज्ञो नमति, इति ।

यः पुरुष ईजानः पूर्वमिष्टवान्भवति, एतस्य च्छन्दांसि पूर्वयज्ञे व्यापृतत्वाद्गतसाराणीव भवन्ति । तत्र चरमस्थाने धातुः करणेनोपरिष्टात्करिष्यमाणयज्ञे छन्दांस्यगतसाराणि संपादयति । तत उत्तरो यज्ञ एनमुपनमति पुनरपि प्रतिष्ठां गच्छतीत्यर्थः ॥

अथ मेधाप्राप्तये विधत्ते—

एता एव निर्वपेद्यं मेधा नोपनमेच्छ-
न्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा

एतं नोप नमन्ति यं मेधा नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नमति, इति।

ग्रन्थधारणशक्तिर्मेधा। एतद्वाक्यं यज्ञमाप्तिवाक्यवद्व्याख्येयम् ॥

अथ कान्तिप्राप्तये विधत्ते—

एता एव निर्वपेद्रुक्कामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक्छन्दोभिरेवास्मिन्रुचं दधाति क्षीरे भवन्ति रुचमेवास्मिन्दधति मध्यतो धातारं करोति मध्यत एवैनꣳ रुचो दधाति, इति।

कान्तेः प्रियत्वेन च्छन्दःसाम्यम्। अत्र चरूणां चतुर्णां पाकसाधनं क्षीरं धातुर्मध्यतः करणेन कान्तेर्मध्यत एव यजमानं स्थापयति ॥

गायत्र्यादिच्छन्दोरूपेणानुमत्यादिदेवताः प्रशंसति—

गायत्री वा अनुमतिस्त्रिष्टुग्राका जगती सिनीवाल्यनुष्टुप्कुहूर्धाता वषट्कारः, इति।

गायत्र्यादिच्छन्दांसि यथाऽभीष्टं साधयन्त्येवमनुमत्यादीनामभीष्टसाधनत्वाद्गायत्र्यादिरूपत्वम् ॥

अनेनैव न्यायेन पूर्वपक्षादिरूपत्वं दर्शयति—

पूर्वपक्षो राकाऽपरपक्षः कुहूरमावास्या सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाता, इति।

पूर्णे राका निशाकर इत्युक्तत्वात्पूर्णचन्द्रमण्डलोपेता राका। सा च शुक्लपक्षस्वरूपा। नष्टेन्दुकला कुहूरित्युक्तत्वाच्चन्द्रकलालेशेनापि हीना कुहूः। सा च कृष्णपक्षस्वरूपा। सा दृष्टेन्दुः सिनीवालीत्युक्तत्वाच्चतुर्दशीमिश्रिता कृष्णपक्षवर्ती सिनीवाली। सा चात्रामावास्यारूपत्वेन विवक्षिता। कलाहीने साऽनुमतिरित्युक्तत्वाच्चतुर्दशीमिश्रा शुक्लपक्षवर्त्यनुमतिः। सा चात्र पौर्णमासीतिथिरूपत्वेन विवक्षिता। उक्तयोः पक्षयोस्तिथ्योश्च निष्पादकौ [illegible] [illegible] रूपेण विवक्षितः ॥

( [illegible]पञ्चविधहविरुत्कर्षकरणपूर्वकबहुविधकाम्यप्रयोगाभिधानम् )

इत्थं पूर्वपक्षादिरूपेण प्रशस्य पुनर्वस्वादिरूपेण प्रशंसति—

अष्टौ वसवोऽष्टाक्षरा गायत्र्येकादश रुद्रा एका-
दशाक्षरा त्रिष्टुब्द्वादशाऽऽदित्या द्वादशाक्षरा
जगती प्रजापतिरनुष्टुब्धाता वषट्कारः, इति।

या अनुमत्यादयो गायत्र्यादिभावमापादितास्तासां संख्यासाम्याद्वस्वादिरूपत्वम्। या कुहूरनुष्टुप्त्वेन निरूपिता सा प्रजापतिरूपा। 'अनुष्टुभो वा इमानि भूतानि जायन्ते' इति शाखान्तरे प्रजापतिवदनुष्टुभः सर्वोत्पादकत्वश्रवणात्। वषट्कारवन्मुख्यत्वेन धातुस्तद्रूपत्वम् ॥

प्रशंसां निगमयति—

एतद्वै देविकाः सर्वाणि च छन्दाᳩ-
सि सर्वाश्च देवता वषट्कारः, इति।

यत्प्रशंसार्थं गायत्री वा अनुमतिरित्यादिनिरूपणमेतदेव देविकानां सर्वच्छन्दोरूपत्वं सर्वदेविकारूपत्वं वषट्काररूपत्वं च ॥

अथ पञ्चानामेतेषां त्रेधा निर्वापं विधत्ते—

ता यत्सह सर्वा निर्वपेदीश्वरा एनं
प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयं
निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं न
प्र दहन्त्यथो यस्मै कामाय निरु-
प्यन्ते तमेवाऽऽभिरुपाऽऽप्नोति॥, इति ॥

ता देविकाः पञ्चापि सह निरुप्ताः सत्य 'एनं यजमानं प्रदग्धुमीश्वराः। तस्मादनुमत्या राकायाश्च चरुद्वयं निरुप्य ततस्तृतीयत्वेन धातुः पुरोडाशं निर्वपेत्। तत ऊर्ध्वं सिनीवाल्याः कुह्वाश्च [च]रुद्वयं निर्वपेत्। तथा सत्येनं यजमानं देविका न प्रदहन्ति। अथ यस्मै कामाय निरुप्यन्ते तं काममाभिर्देवताभिः प्राप्नोत्येव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

( अथ तृतीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदे शं चतुष्पदे । वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या । आवः क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः । यत्सायंप्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उप धत्ते ( १ ) यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यत्सायंप्रातर्जुहोत्यहोरात्राण्येवाऽऽप्त्वेष्टकाः कृत्वोप धत्ते दश समानत्र जुहोति दशाक्षरा विराड्विराजमेवाऽऽप्त्वेष्टकां कृत्वोप धत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनम् ( २ ) रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्छति यजमानो यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं

जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम
आहुतिं जुहोति तादृगेव तदहुतमस्य वास्तो-
ष्पतीयꣳ स्यात् ( ३ ) दक्षिणो युक्तो भवति
सव्योऽयुक्तोऽथ वास्तोष्पतीयं जुहोत्युभयमे-
वाकरपरिवर्गमेवैनꣳ शमयति यदेकया जुहुया-
द्दर्विहोमं कुर्यात्पुरोनुवाक्यामनूच्य याज्यया
जुहोति सदेवत्वाय यद्धुत आदध्याद्रुद्रं गृहा-
नन्वारोहयेद्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा
यज्ञवेशसं वाऽऽदहनं वा तादृगेव तदयं ते
योनिर्ऋत्विय इत्यरण्योः समारोहयति ( ४ )
एष वा अग्नेर्योनिः स्व एवैनं योनौ समारो-
हयत्यथो खल्वाहुर्यदरण्योः समारूढो नश्ये-
दुदस्याग्निः सीदेत्पुनराधेयः स्यादिति या ते
अग्ने यज्ञिया तनूस्तयेह्या रोहेत्यात्मन्त्समारो-
हयते यजमानो वा अग्नेर्योनिः स्वायामेवैनं
योन्याꣳ समारोहयते ( ५ ) ॥

( भक्तेऽर्वाचीनꣳ स्यात्समारोहयति पञ्चचत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके
चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

( प्रयाणं करिष्यतोऽग्निहोत्रिणोऽग्निसमारोपणाभिधानम् )

( अथ तृतीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः । )

---

वास्तोः । पते । प्रतीति । जानीहि । अस्मान् ।
स्वावेश इति सु—आवेशः । अनमीवः । भव । नः ।
यत् । त्वा । ईमहे । प्रतीति । तत् । नः । जुषस्व ।
शम् । नः । एधि । द्विपद इति द्वि—पदे । शम् ।
चतुष्पद इति चतुः—पदे । वास्तोः । पते । शग्म-
या । सꣳसदेति सं—सदा । ते । सक्षीमहि । रण्वया ।
गातुमत्येति गातु—मत्या । आवः । क्षेमे । उत ।
योगे । वरम् । नः । यूयम् । पात । स्वस्तिभिरिति
स्वस्ति—भिः । सदा । नः । यत् । सायंप्रातरिति
सायं—प्रातः । अग्निहोत्रमित्यग्नि—होत्रम् । जुहोति ।
आहुतीष्टका इत्याहुति—इष्टकाः । एव । ताः । उपे-
ति । धत्ते ( १ ) । यजमानः । अहोरात्राणीत्यहः—
रात्राणि । वै । एतस्य । इष्टकाः । यः । आहिताग्नि-
रित्याहित—अग्निः । यत् । सायंप्रातरिति सायं—
प्रातः । जुहोति । अहोरात्राणीत्यहः—रात्राणि ।
एव । आप्त्वा । इष्टकाः । कृत्वा । उपेति ।
धत्ते । दश । समानत्र । जुहोति । दशाक्षरेति दश—
अक्षरा । विराडिति वि—राट् । विराजमिति वि—
राजम् । एव । आप्त्वा । इष्टकाम् । कृत्वा । उपेति ।

धत्ते । अथो इति । विराजीति वि—राजि । एव । यज्ञम् । आप्नोति । चित्यंश्चित्य इति चित्यः—चित्यः । अस्य । भवति । तस्मात् । यत्र । दर्श । उषित्वा । प्रयातीति प्र—याति । तत् । यज्ञवास्त्विति यज्ञ—वास्तु । अवास्तु । एव । तत् । यत् । ततः । अर्वाचीनम् (२)। रुद्रः । खलु । वै। वास्तोष्पतिरिति वास्तोः—पतिः । यत् । अहुत्वा । वास्तोष्पतीयमिति वास्तोः—पतीयम् । प्रयायादिति प्र—यायात् । रुद्रः। एनम् । भूत्वा । अग्निः । अनूत्थायेत्यनु—उत्थाय । हन्यात् । वास्तोष्पतीयमिति वास्तोः—पतीयम् । जुहोति । भागधेयेनेति भाग—धेयेन । एव । एनम्। शमयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । यत् । युक्ते । जुहुयात् । यथा । प्रयात इति प्र—याते । वास्तौ । आहुतिमित्या—हुतिम् । जुहोति । तादृक् । एव । तत् । यत् । अयुक्ते । जुहुयात् । यथा । क्षेमे । आहुतिमित्या—हुतिम् । जुहोति । तादृक् । एव । तत् । अहुतम् । अस्य । वास्तोष्पतीयमिति वास्तोः—पतीयम् । स्यात् ( ३ ) । दक्षिणः । युक्तः । भवति । सव्यः । अयुक्तः । अथ । वास्तोष्पतीयमिति वास्तोः—पतीयम् । जुहोति ।

उभयम् । एव । अकः । अपरिवर्गमित्यपरि—वर्गम् । एव । एनम् । शमयति । यत् । एकया । जुहुयात् । दर्विहोममिति दर्वि—होमम् । कुर्यात् । पुरोनुवाक्यामिति पुरः—अनुवाक्याम् । अनूच्येत्यनु—उच्य । याज्यया । जुहोति । सदेवत्वायेति सदेव—त्वाय । यत् । हुते । आदध्यादित्या—दध्यात् । रुद्रम् । गृहान् । अन्वारोहयेदित्यनु—आरोहयेत् । यत् । अवक्षाणानीत्यव—क्षाणानि । असंप्रक्षाप्येत्यसं—प्रक्षाप्य । प्रयायादिति प्र—यायात् । यथा । यज्ञवेशसमिति यज्ञ—वेशसम् । वा । आदहनमित्या—दहनम् । वा । तादृक् । एव । तत् । अयम् । ते । योनिः । ऋत्वियः । इति । अरण्योः । समारोहयतीति सम्—आरोहयति (४) । एषः । वै । अग्नेः । योनिः । स्वे । एव । एनम् । योनौ । समारोहयतीति सम्—आरोहयति । अथो इति । खलु । आहुः । यत् । अरण्योः । समारूढ इति सम्—आरूढः । नश्येत् । उदिति । अस्य । अग्निः । सीदेत् । पुनराधेय इति पुनः—आधेयः । स्यात् । इति । या । ते । अग्ने । यज्ञिया । तनूः । तया । एति । इहि ॥ एति । रोह । इति । आत्मन् । समा-

रोहयत इति सम्—आरोहयते । यजमानः । वै । अग्नेः । योनिः । स्वायाम् । एव । एनम् । योन्याम् । समारोहयत इति सम्—आरोहयते (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

(अथ तृतीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ।)

---

नवमे देविकाख्यानि हवींष्युक्तानि विस्तरात् ।
अथ दशमे प्रयाणं करिष्यतोऽग्निहोत्रिणोऽग्निसमारोपणमभिधीयते ।

कल्पः—"सगृहः प्रयास्यन्वास्तोष्पतीयं जुहोति वास्तोष्पत इत्यनुद्रुत्योत्तरया गार्हपत्ये जुहोति" इति ।

प्रथममन्त्रपाठस्तु—

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदे शं चतुष्पदे ।, इति ।

अग्निहोत्रिणो गार्हपत्याग्निरेव गृहस्थानीयः । तेन सह यदा प्रयास्यति तदानीं पत्नीसहितोऽग्निं गृहीत्वा प्रयास्यन्नुत्तरेण मन्त्रेण होतुमिमां पुरोनुवाक्यामनुब्रूयात् । तस्य मन्त्रस्यायमर्थः—वास्तोरग्निहोत्रनिवासस्थानस्य गृहस्य हे पते पालक गार्हपत्यास्मान्प्रतिजानीहि ग्रामान्तरे यियासून्प्रतिबुध्यस्व । ततोऽस्माकं स्वावेशः सुखेनाऽऽवेशयिता वासयिता भव । अनमीवो रोगनिवारकश्च भव । यत्कार्यमुद्दिश्य त्वां वयमीमहे प्राप्नुमः प्रार्थयामह इत्यर्थः । नोऽस्मदर्थं तत्कार्यं जुषस्व प्रीतिपूर्वकं सेवस्व । ततोऽस्माकं द्विपदे मनुष्याय चतुष्पदे पशवे च शमेधि सुखे हेतुर्भव । द्विपदे शं भव चतुष्पदे च शं भवेति वाक्यभेदाय शमित्यस्य द्विःपाठः ॥

द्वितीयमन्त्रपाठस्तु—

वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि

रण्वया गातुमत्या । आवः क्षेम उत योगे
वरं नो यूयं पात स्वस्तिभिः सदा नः ।, इति ।

हे वास्तोष्पते संसदा त्वदीयया सभया सक्षीमहि वयं संसक्ता भूयास्म । कीदृश्या संसदा, शग्मया सर्वार्थसाधनशक्तया । रण्वया रमणीयया । गातुमत्या गातुर्गतिरवगतिस्तद्युक्तया सर्वज्ञयेत्यर्थः । त्वं नोऽस्माकं योगे योगनिमित्तं वरमावः सम्यग्रक्ष । उतापि च क्षेमे क्षेमनिमित्तं सम्यग्रक्ष । अलब्धस्यापेक्षितस्य लाभो योगः । लब्धस्य सर्वार्थस्य परिपालनं क्षेमः । यूयमिति पूजार्थं बहुवचनम् । ते यूयं नोऽस्मान्स्वस्तिभिर्नानाविधश्रेयोभिः पात रक्षत ॥

अथैनं होमं विधातुं प्रस्तौति—

यत्सायंप्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव
ता उप धत्ते यजमानोऽहोरात्राणि वा एत-
स्येष्टका य आहिताग्निर्यत्सायंप्रातर्जुहोत्यहो-
रात्राण्येवाऽऽप्त्वेष्टकाः कृत्वोप धत्ते, इति ।

अग्निहोत्री कालद्वयेनाग्निहोत्रं जुहोतीति यत्ताः सर्वा आहुतिरूपा इष्टका एव यजमान उपधत्ते । यद्यप्यत्र मृन्मया इष्टका न सन्ति तथाऽपि यः पुरुष आहिताग्निर्भवति एतस्याहोरात्राण्येवेष्टकाः संपद्यन्ते । अतो यदि सायंप्रातर्नियमेन जुहोति तदानीमनुष्ठानेनाहोरात्राण्येव प्राप्तकालरूपा इष्टकाः कृत्वोपधानं कृतवान्भवति ॥

पुनः प्रकारान्तरेण प्रस्तौति—

दश समानत्र जुहोति दशाक्षरा विराड्विराजमे-
वाऽऽप्त्वेष्टकां कृत्वोप धत्तेऽथो विराज्येव
यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति , इति ।

समानत्रैकत्र दश दिनानि स्थित्वा यदाऽग्निहोत्रं जुहोति तदा दशसंख्यासामान्याद्विराट्संपद्यतेऽतोऽग्निहोत्री विराजमेव प्राप्य तां विराजमेवेष्टकां कृत्वोपधानं कृतवान्भवति । अपि च विराजि लब्धायामग्निष्टोमयज्ञं प्राप्नोति । अत एव सप्तमकाण्डेऽग्निष्टोमप्रस्तावे विराजमभिसंपद्यत इति वक्ष्यते । तदेवमस्याग्निहोत्रिणश्चित्यश्चित्यो भवति । त्रिविधाश्चित्याग्नयः संपद्यन्ते । सायंप्रातर्होमाहुतिरूपाभिरिष्टकाभिश्चित एकोऽग्निः । अहोरात्रकालरूपाभिरिष्टकाभि-

श्चितो द्वितीयोऽग्निः । विराडूपेष्टकया चितस्तु तृतीयोऽग्निः । एवमस्य विविधचित्याग्निसंपत्तिः ॥

इदानीं विधत्ते—

तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनꣳ रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्छति यजमानः , इति ।

यस्मादेकत्र दशाहोरात्रहोमेन विराट्संपत्तिस्तस्माद्यत्र दश दिनान्युषित्वा पश्चादग्निहोत्री प्रयाति स देशो यज्ञभूमिस्ततोऽर्वाचीनं कालं यत्र वसति सेयमयज्ञभूमिरेव । अतो दश रात्रीरेकत्रोषित्वा यत्पश्चात्प्रयाणं तद्धोमनिमित्तम् । तस्मिन्होमे रुद्रशब्दाभिधेयो गार्हपत्याग्निर्देवता तस्य वास्तोष्पतित्वात् । एवं सति यदि वास्तोष्पतीयहोममकृत्वा प्रयाणं कुर्यात्ततो गार्हपत्योऽग्निः क्रूरो भूत्वा यजमानमनूत्थाय हन्यात् । अतस्तत्परिहाराय प्रयाणकाले वास्तोष्पतीयं जुहुयात् । तेन होमभागं दत्त्वा तमग्निं शान्तं करोति । ततो यजमानो न म्रियते ॥

प्रयाणार्थस्य शकटस्य दक्षिणबलीवर्दयोजनादूर्ध्वं सव्यबलीवर्दयोजनात्प्रागेव होमावसर इत्येतद्विधत्ते—

यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम आहुतिं जुहोति तादृगेव तदहुतमस्य वास्तोष्पतीयꣳ स्याद्दक्षिणो युक्तो भवति सव्योऽयुक्तोऽथ वास्तोष्पतीयं जुहोत्युभयमेवाकरपरिवर्गमेवैनꣳ शमयति , इति ।

यदि बलीवर्दद्वये युक्ते सति पश्चाज्जुहुयात्तदा तावतैव वास्तुर्यज्ञदेशः प्रयातो भवति । तस्मिन्प्रयाते सति अयज्ञदेशे लौकिके यथा होमस्तथैव-

स्यात् । तर्ह्ययुक्ते बलीवर्दद्वये जुहोत्विति चेत् । तदप्यसंगतम् । यथा क्षेमे सति प्रयाणप्रसङ्गमन्तरेण जुहोति तथैतत्स्यात् । उभयथाऽप्यहुतमस्य वास्तोष्पतीयं भवेत् । प्रयास्यता हि वास्तोष्पतीयं होतव्यम् । उभययोगे हि प्रयाणस्य निष्पन्नत्वान्नायं प्रयास्यन्भवति । तयोरुभयोरप्ययोगे प्रयाणप्रसङ्गस्याभावान्नैव प्रयास्यन्भवति । दक्षिणबलीवर्द एकस्मिन्नेव युक्ते तु प्रयाणस्य प्रसक्तत्वादनतीतत्वाच्चायं प्रयास्यन्भवति । अतस्तदा वास्तोष्पतीयं जुहुयात् । तथा सत्युभयमेव कृतवान्भवति । प्रयाणस्य प्रसक्तत्वमेकमनिष्पन्नत्वं द्वितीयमित्युभयम् । एवं क्रूरमग्निं तथाविधेन होमेनापरिवर्गमेव शमयति शमनीयस्यांशस्य कस्यचिदपि वर्जनमकृत्वा सर्वात्मना शान्तमेनं कृतवान्भवति ॥

वास्तोष्पते प्रतिजानीहि वास्तोष्पते शग्मयेत्येतस्य मन्त्रद्वयस्य होमाङ्गतां विधत्ते—

यदेकया जुहुयाद्दर्विहोमं कुर्यात्पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय, इति ।

आश्रावयेत्यादिर्वौषडित्यन्तो मन्त्रसंघो याज्यापुरोनुवाक्ययोः सहाये(यो) वर्तते । याज्यापुरोनुवाक्ये तु प्रधानभूते । तत्पूर्वको होमो देवानां प्रियस्तद्रहितस्तु दर्विहोमः । अग्नये स्वाहेत्येवं मन्त्रमुच्चार्याऽऽश्रावणादिभिर्विना केवलया दर्व्या हूयमानत्वात्तादृशो देवानामत्यन्तं प्रियो न भवति । एवं सत्यत्र यद्येकयैव दर्व्या जुहुयात्तदानीमाश्रावणादिमन्त्राणामवकाशाभावेन दर्विहोमः स्यात् । अतो दर्विहोमत्वं मा भूदित्यभिप्रेत्य वास्तोष्पते प्रतिजानीहीत्येतां पुरोनुवाक्यामनूच्य वास्तोष्पते शग्मयेत्यनया याज्यया जुहुयात् । तथा सति देवानामत्यन्तप्रियत्वाद्दे(त्सदे)वत्वं भवति ॥

अथ क्रमेण शकटे भाण्डस्थापनमरण्योरग्निसमारोहणं च विधत्ते—

यद्धुत आदध्याद्रुद्रं गृहानन्वारोहयेद्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा यज्ञवेशसं वाऽऽदहनं वा तादृगेव तदयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयत्येष वा अग्नेर्योनिः स्व एवैनं योनौ समारोहयति, इति ।

यद्यग्निहोत्रे हुते सति पश्चाद्भाण्डानि शकटे स्थापयेत्तदानीं गृहोपकरणानि भाण्डादीन्यनु रुद्रनामकमग्निमपि शकटे स्थापयेत् । ततः शकटं दहेत् । नहि

होमादूर्ध्वमग्निः पूर्वदेशे तिष्ठति पूर्वं तु होमार्थं तिष्ठत्येव। तस्मादहुतेऽग्निहोत्रे तद्धोमात्प्रागेव भाण्डानि शकटे स्थापयेदिति विधिरुन्नीयते। ज्वलितानि काष्ठान्यङ्गाररूपाण्यवक्षाणशब्दाभिधेयानि। यदि तान्यसंप्रक्षाप्याग्निराहित्यं यथा न भवति तथा शान्तान्यकृत्वा प्रयाणं कुर्यात्तदा केनचिद्यज्ञविघातः कृतो यथा वा गृहदहनं कृतं तादृशमेव तदङ्गाराणामशमनं स्यात्। अतस्तत्परिहारार्थमयं ते योनिरिति मन्त्रेण तमग्निमरण्योः समारोहयेत्। एषोऽरण्योः संघो वह्नेः कारणं ताभ्यामुत्पन्नत्वात्। ततस्तमग्निं स्वकीये योनौ समारूढं करोति। मन्त्रस्तूपप्रयन्तो अध्वरमित्यनुवाके समाम्नातत्वात्तत्रैव व्याख्यातः॥

अरणिसमारोहणं पाक्षिकदोषग्रस्तत्वादुपेक्ष्य स्वात्मनि समारोहणं विधत्ते—

अथो खल्वाहुर्यदरण्योः समारूढो नश्ये-
दुदस्याग्निः सीदेत्पुनराधेयः स्यादिति या
ते अग्ने यज्ञिया तनूस्तयेह्या रोहेत्या-
रमन्त्समारोहयते यजमानो वा अग्नेर्योनिः
स्वायामेवैनं योन्याᳪ समारोहयते॥, इति॥

अथ केचित्खल्वाहुररण्योः समारूढो यद्यरणिदाहापहारादिना नश्येत्तदा यजमानस्य पूर्वमादितोऽग्निरुत्सीदेदतोऽग्निः पुनराधातव्यः स्यादिति, तस्य दोषस्य परिहाराय यजमानो या ते अग्न इति मन्त्रेण स्वात्मन्यग्निं समारोहयेत्। यथैवारण्योरग्न्युत्पादकत्वमेवं यजमानोऽपि शास्त्रीयाग्नेरुत्पादकत्वाद्योनिर्भवति। तस्माद्यजमाने समारोहितोऽग्निः स्वकीयायामेव योन्यां समारोहितो भवति। अयं तु मन्त्रो ब्राह्मणग्रन्थे द्वितीयकाण्डे पञ्चमप्रपाठके समाम्नास्यमानत्वात्तत्रैव व्याख्यास्यते॥

अत्र विनियोगसंग्रहः—

अग्निहोत्री तु सगृहः प्रयास्यञ्जुहुयाद्द्वयम्।
वास्तोः पुरोनुवाक्यैका याज्या चान्वेति तद्द्वयम्॥ १॥

अथ मीमांसा।

अष्टमाध्यायस्य चतुर्थपादे चिन्तितम्—

दर्विहोमो गुणो नाम वा गुणो दधिहोमवत्।
गुणासंभवतो लोकवेदयोर्नाम तद्भवेत्॥

इदमाम्नायते—"यदेकया जुहुयाद्दर्विहोमं कुर्यात्" इति। तत्र दर्व्या होमो दर्विहोम इति तृतीयासमासे सति दध्ना जुहोतीत्यादाविव होमानुवादेन गुणविधित्वसंभवाद्दर्व्याख्यो गुणो विधीयत इति चेन्मैवम्। न तावल्लोकसिद्धे स्थालीपाकाष्टकादिहोमे दर्विगुणो विधातुं शक्यो लौकिकाशिष्टाचारादेव तत्र साधनप्राप्तेः। नापि वेदसिद्धेऽग्निहोत्रनारिष्ठादिहोमे विहितजुह्वादिबाधप्रसङ्गात्। तस्माद्दर्विहोम इति कर्मनामधेयम्।

तत्रैवान्यच्चिन्तितम्—

लौकिकस्योत सर्वस्य नामाऽऽद्योऽम्बष्ठवाक्यतः।
निमित्तसाम्याद्वेदेऽपि तदुक्तेः सर्वनाम तत्॥

"अम्बष्ठानां दार्विहोमिको ब्राह्मणः" इति[१] श्रु(स्मृ)तावम्बष्ठस्वामिके स्मार्तहोमे तत्प्रयोगाल्लौकिकस्यैव होमस्य तन्नामेति चेन्मैवम्। दर्व्या होम इति प्रवृत्तिनिमित्तस्य लौकिकवैदिकयोः समानत्वाद्दर्विहोमं कुर्यादिति श्रुत्युक्तेर्वैदिक[३]होमनामलिङ्गत्वात्सर्वस्य होमस्यैतन्नाम।

तत्रैवान्यच्चिन्तितम्—

तद्यजेरपि नाम स्याज्जुहोतेरेव वाऽग्रिमः।
अविशेषेण मुख्यत्वाज्जुहोतेर्लक्षणाऽन्यथा॥

तन्नाम जुहोतिचोदनानां यजतिचोदनानां च भवितुमर्हति। कुतः। अविशेषश्रवणादिति चेन्मैवम्। जुहोतिचोदनासु होमशब्दस्य मुख्यत्वात्। यजतिचोदनानां तन्नामत्वे लक्षणा स्यात्। तस्माज्जुहोतिचोदनानामेव।

तत्रैवान्यच्चिन्तितम्—

दर्विहोमे सोमधर्मा अपूर्वत्वमुताग्रिमः।
अव्यक्तेर्यज्यभावाच्च स्वाहोक्त्यादेरपूर्वता॥

अग्न्याधानानारिष्ठादिषु दर्विहोमेषूत्पत्तिवाक्ये देवताया अश्रवणादव्यक्तिलिङ्गेन सोमधर्माः कर्तव्या इति चेन्मैवम्। सोमे श्रुतस्य यजतिलिङ्गस्याभावात्। किंच। 'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा' इति दर्विहोमेषु स्वाहाकार आम्नातः। स च सोमविध्यन्तातिदेशो विरुध्येत। तेन स्वाहाकारविरोधिनो वषट्कारस्य प्राप्यमाणत्वात्। किंचोदाहृतैर्मन्त्रगतचतुर्थ्यन्तैः पदैर्देवता-

---

१ क. घ. ङ. 'छानाम्दार्विहोमको। च. 'छानामदर्विहोमको। २ ख. 'त्ति औताम्ब'। ३ क. घ. ङ. च. 'कनामहोमलि'।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

समर्पणाभावास्त्यव्यक्तत्वम् । तस्माद्दर्विहोमानामपूर्वकर्मत्वाभावास्ति तत्र कस्यापि विध्यन्तस्यातिदेशः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

---

( अथ तृतीयाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

त्वम॑ग्ने बृ॒हद्वयो॒ दधा॑सि देव दा॒शुषे॑ ।
क॒विर्गृ॒हप॑ति॒र्युवा॑ । ह॒व्य॒वाड॒ग्निर॒जरः॑ पि॒ता नो॑
वि॒भुर्वि॒भावा॑ सु॒दृशी॑को अ॒स्मे । सु॒गा॒र्ह॒प॒त्याः
समिषो॑ दिदीह्यस्म॒द्रिय॑क्सं मि॑मीहि॒ श्रवा॑ꣳसि ।
त्वं च॑ सोम नो॒ वशो॑ जीवा॑तुं॒ न म॑रामहे ।
प्रि॒यस्तो॑त्रो॒ वन॒स्पतिः॑ । ब्र॒ह्मा दे॒वानां॑ प॒द॒वीः
क॒वीना॒मृषि॒र्विप्रा॑णां महि॒षो मृ॒गाणा॑म् । श्ये॒नो
गृध्रा॑णा॒ꣳ स्वधि॑ति॒र्वना॑नाꣳ॒ सोमः॑ (१)
प॒वित्र॒मत्ये॑ति॒ रेभ॑न् । आ॒ वि॒श्वदे॑व॒ꣳ सत्प॑ति॒ꣳ
सू॒क्तैर॒द्या वृ॑णीमहे । स॒त्यस॑व॒ꣳ स॒वि॒तार॑म् ।
आ स॒त्येन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒
मर्त्यं॑ च । हि॒र॒ण्यये॑न सवि॒ता रथे॒नाऽऽदे॒वो
या॑ति॒ भुव॑ना वि॒पश्य॑न् । यथा॑ नो॒ अदि॑तिः॒
कर॒त्पश्वे॒ नृभ्यो॒ यथा॒ गवे॑ । यथा॑ तो॒काय॑
रु॒द्रिय॑म् । मा न॑स्तो॒के तन॑ये॒ मा न॒ आयु॑षि॒

मा नो गोषु मा ( २ ) नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते । उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः । गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन् । हꣳसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् । बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौ-दुच्च विद्वाꣳ अगायत् । एन्द्र सानसिꣳ रयिम् ( ३ ) सजित्वानꣳ सदासहम् । वर्षिष्ठमूतये भर । प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राऽऽभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् । त्वꣳ सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो । भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः । भुवो नॄꣳश्च्यौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रः ( ४ ) विश्वचर्षणे । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम् । मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभि चष्टे सत्याय

हव्यं घृतवद्विधेम । प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् । यत् (५) चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि । यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः । कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म । सर्वा ता वि ष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः (६) ॥

(सोमो गोषु मा रयिं मन्त्रो यच्चिद्धि शिथिरा सप्त च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

वि वा आ वायो इमे वै चित्तमग्निर्भूतानां देवा वा ऋताषाड्राष्ट्रकामाय देविका वास्तोष्पते त्वमग्ने बृहद्वय एकादश ॥११॥

वि वा इत्याह यथायजुरेवैतन्मृत्युर्गन्धर्वोऽवं रुन्धे त्वमग्ने बृहद्वयः षट्चत्वारिꣳशत् ॥४६॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां तृतीयाष्टके चतुर्थः प्रपाठकः ॥ ४ ॥

(अथ तृतीयाष्टके चतुर्थप्रपाठक एकादशोऽनुवाकः ।)

---

त्वम् । अग्ने । बृहत् । वयः । दधासि । देव । दाशुषे । कविः । गृहपतिरिति गृह—पतिः । युवा । हव्यवाडिति हव्य—वाट् । अग्निः । अजरः । पिता । नः । विभुरिति वि—भुः । विभावेति वि—भावा । सुदृशीक इति सु—दृशीकः । अस्मे इति । सुगार्हपत्या इति सु—गार्हपत्याः । समिति । इषः । दिदीहि । अस्मद्रियगित्यस्म—द्रियक् । समिति । मिमीहि । श्रवांसि । त्वम् । च । सोम । नः । वशः । जीवातुम् । न । मरामहे । प्रियस्तोत्र इति प्रिय—स्तोत्रः । वनस्पतिः । ब्रह्मा । देवानाम् । पदवीरिति पद—वीः । कवीनाम् । ऋषिः । विप्राणाम् । महिषः । मृगाणाम् । श्येनः । गृध्राणाम् । स्वधितिरिति स्व—धितिः । वनानाम् । सोमः ( १ ) । पवित्रम् । अतीति । एति । रेभन् । एति । विश्वदेवमिति विश्व—देवम् । सत्पतिमिति सत्—पतिम् । सूक्तैरिति सु—उक्तैः । अद्य । वृणीमहे । सत्यसवमिति सत्य—सवम् । सवितारम् । एति । सत्येन । रजसा । वर्तमानः । निवेशयन्निति नि—वेशयन् । अमृतम् । मर्त्यम् । च । हिरण्ययेन । सविता । रथेन । एति ।

देवः । याति । भुवना । विपश्यन्निति वि-पश्यन् ।
यथा । नः । अदितिः । करत् । पश्वे । नृभ्य इति
नृ-भ्यः । यथा । गवे । यथा । तोकाय । रुद्रियम् ।
मा । नः । तोके । तनये । मा । नः । आयुषि ।
मा । नः । गोषु । मा (२) । नः । अश्वेषु ।
रीरिषः । वीरान् । मा । नः । रुद्र । भामितः ।
वधीः । हविष्मन्तः । नमसा । विधेम । ते । उदप्रुत
इत्युद-प्रुतः । न । वयः । रक्षमाणाः । वावदतः ।
अभ्रियस्य । इव । घोषाः । गिरिभ्रज इति गिरि-
भ्रजः । न । ऊर्मयः । मदन्तः । बृहस्पतिम् । अभी-
ति । अर्काः । अनावन् । हंसैः । इव । सखिभि-
रिति सखि-भिः । वावदद्भिरिति वावदत्-भिः ।
अश्मन्मयानीत्यश्मन्-मयानि । नहना । व्यस्य-
न्निति वि-अस्यन् । बृहस्पतिः । अभिकनिक्र-
ददित्यभि-कनिक्रदत् । गाः । उत । प्रेति ।
अस्तौत् । उदिति । च । विद्वान् । अगायत् । एति ।
इन्द्र । सानसिम् । रयिम् (३) । सजित्वानमिति
स-जित्वानम् । सदासहमिति सदा-सहम् । वर्षि-
ष्ठम् । ऊतये । भर । प्रेति । ससाहिषे । पुरुहूतेति
[illegible] । ज्येष्ठः । ते । शुष्मः । इह ।

रातिः । अस्तु । इन्द्र । एति । भर । दक्षिणेन । वसूनि । पतिः । सिन्धूनाम् । असि । रेवतीनाम् । त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः । इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सु—क्रतो । भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः । भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः (४) । विश्वचर्षण इति विश्व—चर्षणे । मित्रस्य । चर्षणीधृत इति चर्षणि—धृतः । श्रवः । देवस्य । सानसिम् । सत्यम् । चित्रश्रवस्तममिति चित्रश्रवः—तमम् । मित्रः । जनान् । यातयति । प्रजानन्निति प्र—जानन् । मित्रः । दाधार । पृथिवीम् । उत । द्याम् । मित्रः । कृष्टीः । अनिमिषेत्यनि—मिषा । अभीति । चष्टे । सत्याय । हव्यम् । घृतवदिति घृत—वत् । विधेम । प्रेति । सः । मित्र । मर्तः । अस्तु । प्रयस्वान् । यः । ते । आदित्य । शिक्षति । व्रतेन । न । हन्यते । न । जीयते । त्वोतः । न । एनम् । अंहः । अश्नोति । अन्तितः । न । दूरात् । यत् (५) । चित् । हि । ते । विशः । यथा । प्रेति । देव । वरुण । व्रतम् । मिनीमसि । द्यविंद्यवीति द्यवि—द्यवि । यत् । [illegible]

इदम् । वरुण । दैव्ये । जने । अभिद्रोहमित्यभि—
द्रोहम् । मनुष्याः । चरामसि । अचित्ती । यत् ।
तव । धर्मा । युयोपिम । मा । नः । तस्मात् ।
एनसः । देव । रीरिषः । कितवासः । यत् । रिरिपुः ।
न । दीवि । यत् । वा । घ । सत्यम् । उत । यत् ।
न । विद्म । सर्वा । ता । वीति । स्य । शिथिरा ।
इव । देव । अथ । ते । स्याम । वरुण । प्रियासः (६) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे तृतीयाष्टके
चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ तृतीयकाण्डे चतुर्थप्रपाठक एकादशोऽनुवाकः । )

---

वास्तोष्पतियुतो होमो दशमे परिकीर्तितः ॥

अथैकादशे याज्या[पुरोनुवाक्या]स्तत्र देवसुवामेतानि हवींषि भवन्तीति यानि विहितानि तेष्वग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणामित्यस्य पुरोनुवाक्यामाह—

त्वमग्ने बृहद्वयो दधासि देव
दाशुषे । कविर्गृहपतिर्युवा ।, इति ।

हेऽग्ने देव त्वं दाशुषे हविर्दत्तवते यजमानाय बृहद्वयो दधासि, महदन्नं दीर्घमायुर्वा प्रयच्छसि । कीदृशस्त्वम् । कविर्विद्वान् । गृहपतिर्गृहस्य पालयिता । युवा नित्यतरुणः ॥

तत्रैव याज्यामाह—

हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिषो दिदीह्यस्मद्रियक्सं मिमीहि श्रवाꣳसि ।, इति।

अयमग्निर्हव्यं वहतीति हव्यवाट्। अजरो जरारहितः। नोऽस्माकं पितोत्पादकः पालयिता वा। विभुर्व्यापी, विभावा विशेषेण भानशीलः। सुदृशीकः सुखदर्शनः। ईदृशो योऽग्निः स त्वमस्मे अस्माकमिषोऽन्नानि संदिदीहि सम्यक्प्रयच्छ। कथंभूता इषः। सुगार्हपत्याः शोभनगृहपतित्वहेतुभूताः। किंच। अस्मद्रियगस्मदाभिमुख्येनाऽऽगतः सञ्श्रवांसि श्रोतव्यानि यशांसि संमिमीहि सम्यङ्निष्पादय ॥

अथ सोमाय वनस्पतये श्यामाकं चरुमित्यस्य पुरोनुवाक्यामाह—

त्वं च सोम नो वशो जीवातुं न मरामहे। प्रियस्तोत्रो वनस्पतिः।, इति।

हे सोम त्वं च त्वमपि नोऽस्माञ्जीवातुं वशो जीवयितुं कामयमानोऽसि। अतो न मरामहे त्वत्प्रसादान्न म्रियामहे। कीदृशस्त्वम्। प्रियस्तोत्रः सोमो वा ओषधीनाꣳराजेत्यादिस्तुतिप्रियः। वनस्पतिर्वनानां पालकः ॥

तत्रैव याज्यामाह—

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्।, इति।

देवानां मध्ये ब्रह्मा श्रेष्ठः। पदं वेत्त्यवगच्छतीति पदवीः कवीनां विदुषां मध्ये पदवीः पदवाक्यप्रमाणाभिज्ञः श्रेष्ठः। विप्राणां मध्य ऋषिरनुष्ठानसामर्थ्येनातीन्द्रियवस्तुद्रष्टा श्रेष्ठः। मृगाणां चतुष्पदानां मध्ये शक्त्याधिक्यान्महिषः श्रेष्ठः। तथैव गृध्राणां पक्षिणां मध्ये शक्त्याधिक्याच्छ्येनः श्रेष्ठः। वनानां मध्ये स्वधितिः श्रेष्ठः। स्वधितिशब्देन करवालादिवद्दृढस्वरूपो भास्वान्वृक्ष उच्यते। यथा ब्रह्मादयः स्वजातिषु श्रेष्ठा एवं सोमोऽपि पवित्रं शुद्धिहेतुं कुशादिकमत्येत्यतिक्रामति। कीदृशः सोमः। रेभञ्शब्दं कुर्वन्स्तूयमान इत्यर्थः ॥

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

अथ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणामित्यस्य पुरोनुवाक्यामाह—

आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणी-
महे। सत्यसवꣳ सवितारम्। , इति।

अद्यास्मिन्कर्मणि सवितारं सूक्तैः शोभनवाक्यैरावृणीमहे फलसाधनाय प्रार्थयामहे। कीदृशं सवितारम्। विश्वदेवं विश्वे सर्वे देवा यस्य वशे वर्तन्ते सोऽयं विश्वदेवस्तम्। सत्पतिं सन्मार्गवर्तिनां पालकम्। सत्यसवममोघानुज्ञम्॥

तत्रैव याज्यामाह—

आ सत्येन रजसा वर्तमानो निवेशयन्न-
मृतं मर्त्यं च। हिरण्ययेन सविता रथे-
नाऽऽ देवो याति भुवना विपश्यन्। , इति।

सविताऽऽदित्यो हिरण्ययेन रथेनाऽऽयाति सुवर्णनिर्मितं रथमारुह्य प्रतिदिनं पूर्वस्यां दिश्यागच्छति। किं कुर्वन्, सत्येन रजसाऽऽवर्तमानः। अमोघेन रञ्जकात्मकेन मण्डलेनोदयास्तमययोर्भ्राम्यन्नमृतं मर्त्यं च निवेशयन्देवशरीरं मनुष्यशरीरं स्वस्वकाले प्रकाशेन तत्तल्लोके व्यवहारक्षमं कुर्वन्भुवना विपश्यन्सर्वलोकानवलोकयन्॥

अथ रुद्राय पशुपतये गावीधुकं चरुमित्येतस्य पुरोनुवाक्यामाह—

यथा नो अदितिः करत्पश्वे नृभ्यो यथा
गवे। यथा तोकाय रुद्रियम्। , इति।

अदितिरखण्डनीयो रुद्रो यथा पश्वे पशुभ्यो नृभ्यो गोभ्यश्च यथा तोकायापत्याय यथा रुद्रियं रुद्रप्रतिपादितं रक्षणादि यथा करत्पश्वादिभ्यः पुत्राद्यपत्याय च येन प्रकारेण रक्षणं करोति तथा तमनेन हविषाऽऽराधयाम इति शेषः॥

तत्रैव याज्यामाह—

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः।

वीरान्मा नो रुद्र भामितो वधी-
र्हविष्मन्तो नमसा विधेम ते ।, इति ।

हे रुद्र त्वं भामितः क्रुद्धः सन्नोऽस्माकं तोके पुत्रादौ तनये तदीयपुत्रेऽस्मत्पौत्रे मा रीरिषो हिंसां मा कृथाः । तथा नोऽस्माकमायुषि मा रीरिषः । तथा नोऽस्माकं गोषु मा रीरिषः । तथा नोऽस्माकमश्वेषु मा रीरिषः । तथा नोऽस्माकं वीरान्भृत्यान्मा वधीः । वयं हविष्मन्तो हविर्युक्ताः सन्तस्ते तुभ्यं नमसा विधेम नमस्कारेण परिचर्यां करवाम ॥

अथ बृहस्पतये वाचस्पतये नैवारं चरुमित्यस्य पुरोनुवाक्यामाह—

उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः । गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन् ।, इति ।

एवं बृहस्पतिमभिलक्ष्यार्का अर्चनहेतवोऽस्मदीया वाग्विशेषा अनावन्स्तुतवन्तः । कीदृशा वाग्विशेषाः । उदप्रुतो न वयो रक्षमाणा उदकं प्रप्लावयन्ति भूमौ प्रवर्तयन्तीत्युदप्रुतो मेघास्ते यथाऽन्नोदकनिष्पादनद्वारेण मदीयं वय आयुष्यं पालयन्ति तद्वन्मदीयाः स्तुतिरूपा वाग्विशेषाश्चापमृत्युपरिहारेणाऽऽयुष्यस्य रक्षकाः । तथाऽभ्रियस्य घोषा इव वावदतः । अभ्राणां समूहोऽभ्रियं तस्य घोषा गर्जनशब्दा यथोच्चध्वनय एवमस्मदीया वाग्विशेषा भृशं वदन्तो भवन्ति । तथा गिरिभ्रजो नोर्मयो मदन्तः । यथा नदीतीरस्थगिरिस्पर्शिन ऊर्मयो नदीपूरणप्रकाशनेन हर्षं जनयन्त्येवमस्मदीयवाग्विशेषा बृहस्पतिमहिमप्रकाशनेन हर्षयन्तो भवन्ति ॥

तत्रैव याज्यामाह—

हꣳसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् । बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाꣳ अगायत् ।, इति ।

अयं बृहस्पतिरभिकनिक्रददभितोऽस्मदीयहविःस्वीकारपरितोषद्योतकमुच्चध्वनिमकरोत् । उत गाः प्रास्तौत् । अपि च परितोषद्योतकानि वाक्यान्युच्चारितवान् । विद्वानुदगायच्चास्मदीयपरिचर्यामभिजानन्परितुष्ट उत्कर्षेण गानमप्यकरोत् । किं कुर्वन् । अश्मन्मयानि नहना व्यस्यन् पाषाणमयप्राकारप्रतिमानसदृशानि फलप्रतिबन्धकानि दुरितान्यपाकुर्वन् । यथा हंसैर्वक्ष्यमाणप्रकारे-

भिरभिष्टुतः परमेश्वरः पुरुषार्थप्रतिबन्धकमपाकरोत्येवं वावदद्भिरतिशयेन स्तुवद्भिः सखिभिर्ऋत्विग्भिः परितोषितो बृहस्पतिः प्रतिबन्धमपाकरोतीत्यपेक्षितं शेषमध्याहृत्य व्याख्येयम् ॥

अथेन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणामित्यस्य पुरोनुवाक्यामाह—

एन्द्र सानसिꣳ रयिꣳ सजित्वानꣳ
सदासहम् । वर्षिष्ठमूतये भर ।, इति ।

हे इन्द्र रयिं धनमूतये रक्षार्थमाभराऽऽनय । कीदृशं धनम् । सानसिं सनसो दानस्य संबन्धिनं बहुभ्यो दातुं पर्याप्तमित्यर्थः । सजित्वानं जित्वभिर्जयशीलैः पुत्रादिभिरुपेतम् । सदासहं सर्वदा विरोधिनां सोढारं तत्तिरस्कारक्षममित्यर्थः । वर्षिष्ठमतिशयेन प्रवृद्धम् ॥

तत्रैव याज्यामाह—

प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह
रातिरस्तु । इन्द्राऽऽभर दक्षिणेना वसूनि
पतिः सिन्धूनामसि रेवतीनाम् ।, इति ।

हे पुरुहूत पुरुषु बहुषु यज्ञेष्वाहूयमान शत्रून्प्रकर्षेण ससाहिषे सर्वदा सहसे तिरस्करोषीत्यर्थः । ते शुष्मो ज्येष्ठस्तव बलं प्रशस्तम् । इहास्मिन्कर्मणि रातिरस्तु फलदानमस्तु । हे इन्द्र दक्षिणेन हस्तेन वसूनि धनान्याभर+ समानय । सिन्धूनां समुद्रसमानानां रेवतीनां प्रजानां पतिरसि ॥

अथ तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह—

त्वꣳ सुतस्य पीतये सद्यो वृद्धो अजा-
यथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो ।, इति ।

हे सुक्रतो शोभनकर्मन्निन्द्र त्वं सुतस्याभिषुतस्य पीतये पानाय सद्यस्तदानीमेव वृद्धोऽजायथाः प्रवृद्धो जातोऽसि । एतच्च सर्वेषां देवानां मध्ये तव ज्यैष्ठ्याय संपद्यते ॥

तत्रैव विकल्पितामन्यां याज्यामाह—

---

+ सर्वपुस्तकेषु 'आहर' इति पाठः ।

---

१ ख 'न्धकम'। २ ख. 'न्धि व'।

भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सव-
नेषु यज्ञियः । भुवो नॄꣳश्च्यौत्नो विश्वस्मि-
न्भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ।, इति ।

हे इन्द्र त्वं ब्रह्मणा महान्भुवः स्तुतिरूपेण वेदवाक्येनाभिवृद्धो भवसि । विश्वेषु सवनेषु त्रिष्वपि प्रातःसवनादिषु यज्ञियो भुवो यज्ञयोग्यो भवसि । नॄन्प्रतिकूलाञ्शत्रूंश्च्यौत्नो भुवः प्रच्यावयन्विनाशयन्वर्तसे । हे विश्वचर्षणे विश्वे सर्वे चर्षणयो मनुष्या यस्यासौ विश्वचर्षणिः सर्वमनुष्यस्वामीत्यर्थः । तादृशस्त्वं विश्वस्मिन्भरे सर्वस्मिन्यागे मन्त्रो मननीयो ज्येष्ठः प्रशस्तश्च भवसि ॥

अथ मित्राय सत्यायाऽऽम्बानां चरुमित्यस्य पुरोऽनुवाक्यामाह—

मित्रस्य चर्षणीधृतः श्रवो देवस्य सान-
सिम् । सत्यं चित्रश्रवस्तमम् ।, इति ।

चर्षणीधृतो मनुष्याणां धारयितुर्मित्रस्य देवस्य श्रवः श्रोतुं योग्यं यशो महदस्तीति शेषः । सानसिं फलदानशीलम् । सत्यं सत्यवादिनम् । चित्रं श्रवः कीर्तिर्यस्यासौ चित्रश्रवा अतिशयेन तादृशम् । यजामह इति शेषः ॥

तत्रैव याज्यामाह—

मित्रो जनान्यातयति प्रजानन्मित्रो दाधार
पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमि-
षाऽभि चष्टे सत्याय हव्यं घृतवद्विधेम ।, इति ।

अयं मित्रो देवो जनान्सर्वान्यातयति स्वस्वव्यापारेषु प्रयत्नयुक्तान्करोति । प्रजानंस्तत्तदधिकारं विद्वान् । किं च । मित्रः पृथिवीं दाधार धृतवान् । उतापि च द्यां दाधार । किं च । मित्रः कृष्टीर्मनुष्याननिमिषा देवांश्चाभिचष्टे सर्वतः पश्यति । सत्यायामोघफलाय तस्मै मित्राय हव्यं चरुलक्षणं घृतवद्घृतयुक्तं विधेम कुर्मः ॥

तत्रैव विकल्पितामन्यां याज्यामाह—

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त
आदित्य शिक्षति व्रतेन । न हन्यते
न जीयते त्वोतो नैनमꣳहो
अश्नोत्यन्तितो न दूरात् ।, इति ।

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

यो यजमानस्तव संबन्धिना व्रतेन कर्मणा शिक्षति अनुष्ठातुं शक्तो भवितुमिच्छति हे मित्र स मर्तः स मनुष्यो यजमानः प्रयस्वान्कर्मफलयुक्तः प्रकर्षेणास्तु। त्वोतस्त्वया रक्षितः स यजमानो न हन्यते रोगादिना न पीड्यते। न जीयते वैरिभिर्नाभिभूयते। अपि च त्वया रक्षितमेनं यजमानमंहः पाप्माऽन्तितः समीपे नाश्नोति न व्याप्नोति। दूराद्दूरेऽपि न प्राप्नोति॥

अथ वरुणाय धर्मपतये यवमयं चरुमित्यस्य पुरोनुवाक्यामाह—

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्। मिनीमसि द्यविद्यवि।, इति।

हे वरुण देव ते त्वदीयं यच्चिद्व्रतं यत्किंचिदपि कर्म द्यविद्यवि दिने दिने प्रकर्षेण मिनीमसि तर्कयामहे। तत्र दृष्टान्तः—विशो यथा सर्वाः प्रजाः स्वस्वव्यापारं यथा तर्कयन्ति तद्वत्। हि यस्मात्त्वदीयमेव कर्म सर्वदा तर्कयामस्तस्मात्त्वां परिचरेमेति शेषः॥

तत्रैव याज्यामाह—

यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः।, इति।

हे वरुण मनुष्या वयं दैव्ये देवलोकवर्तिनि जने यत्किंचेदमभिद्रोहं स्वल्पमधिकं वा द्रोहमचित्त्यज्ञानेन चरामसि कुर्मः। किं च यदपि तव धर्मा त्वदीयं कर्म युयोपिम विनाशयामो हे देव तस्मादेनसो द्रोहात्कर्मनाशाच्च नोऽस्मान्मा रीरिषो हिंसां मा कृथाः॥

तत्रैव विकल्पितामन्यां याज्यामाह—

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म। सर्वा ता वि ष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः॥, इति॥

कितवासो धूर्तसमानाः स्वार्थसाधनपरा ऋत्विजो यत्कर्माङ्गं रिरिपुर्नाशितवन्तो न दीवि न तु देवने सम्यग्द्यूतौ प्रवर्तन्ते। वाऽथवा यत्पापं सत्यमवश्यं कृतं ज्ञात्वैव कृतमित्यर्थः। घशब्दः पादपूरणे पापवाचको वा निपातितः।

१ ख. घ. ङ. च. °याम्रहे। २ ख. प्रावर्तन्त। ३ क. घ. ङ. च. °को नि°। ४ ... °पातः।

यद्ध सत्यमित्यन्वयः। उतापि च यच्च विद्म यत्पापमज्ञानेन कृतमित्यर्थः। सर्वा ता, ऋत्विग्भिर्विनाशितमङ्ग ज्ञात्वा कृतमज्ञानेन कृतं चेति यानि सन्ति तानि सर्वाणि शिथिरेव शिथिलानीव विष्य विनाशयेत्यर्थः। अथानन्तरं हे वरुण ते तव प्रियासः स्याम प्रिया भवेम ॥

अत्र विनियोगसंग्रहः—

राजसूये देवसुवामिष्टौ याज्या इमाः क्रमात्।
त्वमग्ने बृहदाग्नेये त्वं च सोमेति सौम्यके ॥ १ ॥
आ विश्वदेवं सावित्रे यथा न इति रौद्रके।
बार्हस्पत्य उदेत्येतदैन्द्रेऽन्त्यैन्द्रे चतुष्टयम् ॥ २ ॥
मित्रस्येति त्रयं मैत्रे वारुणे यदिति त्रयम्।
एकादशेऽनुवाकेऽस्मिन्मन्त्रा उक्ता हि विंशतिः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठक
एकादशोऽनुवाकः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य
श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विर-
चिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
तृतीयकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

---